खीष्टोपनिषत्

# CHRISTOPAN

## THE FOUR

*Rendered into*
*form the Original*
*( R V ) of the*

BY

**TARA CHARAN C**
**Tarka-Darshan Tirtha**

With a

FOREWORD

BY

**Dr Foss Westcott, D D**
*The Metropolitan of India*



**Available at**
**IUBON CHATTERJI LANE, BEADON ST., CALCUTTA.**

Bishop's House,
Calcutta.

# FOREWORD

BY

## The Metropolitan of India

Pandit Taracharan Tarkadarshantirtha has completed the translation of the four Gospels [illegible] gant Sanskrit Slokas and is now publishing [illegible] one volume. He has been in touch with me for some two years during which time he has devoted himself to this task. It is his earnest [illegible] that the life and the precious teachings of our Lord [illegible] Christ should reach the scholars in India [illegible] abroad through the music and the [illegible] charm of Sanskrit Slokas.

Judging from the comments of his fellow Pandits of Calcutta, specially those of Mm. Jogendra Nath Tarka-Vedanta-Tirtha of Sanskrit College, who have critically gone through the manuscripts, and from some of the pieces that have been recited and translated to me, I have reason to believe that Pandit Taracharan's work is of a high order and will be recognised as worthy of a place in Sanskrit literature. Mention should also be made of the labour of Dr. B. M. Barua of the Calcutta University and Rev. B. C. Mukerji of the Baptist Mission, (formerly of the Serampore College staff), who have spared no pains in going most carefully through the texts with the Pandit and comparing them with the original.

I have no doubt that the Sanskrit rendering will be welcomed by all students of classical literature and that the devotion and reverence with which the Pandit has approached his subject will be communicated to the readers and abundantly repay his labour.

*15th March, 1944.* Sd/- **Foss Calcutta.**

# मङ्गलाचरणम् ।

"अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् ।
स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः" ॥ १ ॥

नमामि मातरं देवीमुदारां परमेश्वरीम् ।
नमाम्यखिलचन्द्रं च श्रोत्रियं पितरं मम ॥ २ ॥

नमामि जन्मभूमिं च मांदार्सां चट्टले स्थिताम् ।
वङ्गाब्धेर्विमलं वारि यां नित्यमभिषिञ्चति ॥ ३ ॥

ख्रीष्टतत्त्वं विजिज्ञासुं श्रीमत् ख्रीष्टोफरेक्रयेड ।
मां पुण्यख्रीष्टविज्ञानं पदैरल्पैरजिग्रहत् ॥ ४ ॥

तमहं परया भक्त्या प्रणमामि कृताञ्जलिः ।
अर्पयामि नतस्तस्मै श्रद्धां प्रियजनोचिताम् ॥ ५ ॥

ततश्चाध्यात्मविद्यानामालयः करुणालयः ।
श्रीमद्विलासचन्द्रो मां ख्रीष्टतत्त्वमबोधयत् ॥ ६ ॥

ध्यात्वाहं हृदये तस्य पवित्रं ब्रह्मवर्चसम् ।
धर्म्मेषु परमोदारं तं नमामि पुनः पुनः ॥ ७ ॥

दुर्ज्ञेयाध्यात्मतत्त्वानि ख्रीष्टज्ञानाश्रितानि च ।
श्रीमन् मेट्रोपलीटन्मां कारुण्यादुपदिष्टवान् ॥ ८ ॥

तमहं विजितात्मानं सर्व्वभूतहिते रतम् ।
नमामि श्रद्धया श्रीमद्गुरुं ज्ञानवतां वरम् ॥ ९ ॥

महामहोपाध्याय-श्रीयोगेन्द्रनाथशर्म्मभिः ।
अस्य ग्रन्थस्य शब्दार्थौ स्वयं श्रुत्वानुमोदितौ ॥ १० ॥

सर्व्वशास्त्रप्रवक्तारं सर्व्वतन्त्रस्वतन्त्रकम् ।
भक्तिबद्धाञ्जलिर्व्विप्रमाचार्य्यं तं नमाम्यहम् ॥ ११ ॥

उपदिष्टेन तैरेव गुरुभिस्तत्त्वदर्शिभिः ।
श्लोकैरुपनिबद्धेयं ख्रीष्टवाणी यथा मया ॥ १२ ॥

विश्वविद्यालयाचार्य्यं विश्वविज्ञानतत्परम् ।
इहैकं शरणं मन्ये वेणीमाधवमानतः ॥ १३ ॥
तदुत्साहबलोपेतः स्वल्पवाग्विभवोऽपि सन् ।
ख्रीष्टस्य परमं तत्त्वं दुर्गाहं विवृणोम्यहम् ॥ १४ ॥
भट्टाचार्य्यमिह श्रीमज्जगदीशं स्मरामि च ।
परिश्रमः कृतो येन मनोवाक्कायकर्म्मभिः ॥ १५ ॥
आशीर्व्वादं ददे तस्मै कृतज्ञत्वपुरःसरम् ।
प्रतिष्ठां महतीं तस्य कामये च शमान्विताम् ॥ १६ ॥

---

# CHRISTOPANISAT

## श्रीमन्मथिभाषिता

### प्रथमोऽध्यायः ।

St. Matthew. Chapter 1 : [ The genealogy of Christ from Abraham to Joseph. He was conceived by the Holy Ghost, and born of the Virgin Mary when she was espoused to Joseph. The angel satisfieth the misdeeming thoughts of Joseph, and interpreteth the names of Christ. ]

अब्राहामो महाभागो माननीयो मनीषिणाम् ।
आसीन्महाजनश्रेष्ठः पुण्यवाँल्लोकविश्रुतः ॥ १ ॥
अब्राहामात् सुतोजात इस्हाको नाम नामतः ।
इस्हाकात्तु महातेजा याकोब उदपद्यत ॥ २ ॥
याकोबाद् भ्रातृभिः सार्द्धं यिहूदा उदपद्यत ।
तस्माच्च थामरोगर्भे जातो पेरससेरहौ ॥ ३ ॥
पेरसो जनयामास हिष्रोणं कुलवर्द्धनम् ।
हिष्रोणस्य सुतः श्रीमानराम इति विश्रुतः ॥ ४ ॥
अरामोऽजीजनत् पुत्रमम्मीनादवनामकम् ।
अम्मीनादवतोजज्ञे नहशोनः प्रतापवान् ॥ ५ ॥
नहशोणात् सुतोजातः सल्मोनो नाम नामतः
सल्मोनो राहबोगर्भे जनयामास बोयसम् ॥ ६ ॥
ओवेदो बोयसाज्जातो रूतो गर्भे महायशाः ।
ओवेदाद् यिशयोजातो दायूदो यिशयान्नृपः ॥ ७ ॥
दायूदोनृपतिः श्रीमान् स्थितो धर्म्मे सनातने ।
उरीयविधवागर्भे शलोमानं व्यजीजनत् ॥ ८ ॥
शलोमा रहबोयामं जनयामास धार्म्मिकः ।
अबियं रहबोयामो जनयामास धार्म्मिकम् ॥ ९ ॥

अबियात्तु महातेजा आसा नाम व्यजायत ।
आसा व्यजीजनत् पुत्रं यिहोशाफटनामकम् ॥ १० ॥
यिहोशाफटपुत्रोऽभूद्‌योरामो नाम नामतः ।
योरामादुषियोजात उषियाद् योथमः स्मृतः ॥ ११ ॥
योथमादाहसोजातो धर्म्मात्मा कुलनन्दनः ।
आहसो हिष्कियं नामाजनयद्धार्म्मिकं सुतम् ॥ १२ ॥
हिष्कियो जनयामास मनश्शिं कुलवर्द्धनम् ।
मनश्शेस्तु सुतोजात आमोनो नाम नामतः ॥ १३ ॥
आमोनो योशियं नाम धर्म्मात्मानं व्यजीजनत् ।
निर्व्वासनं समासाद्य ब्याबिलोये महामनाः ।
योशियो जनयामास यिकनीयं ससोदरम् ॥ १४ ॥
निर्व्वासनात् परंश्रीमान् यिकनीयोव्यजीजनत् ।
शल्टीयेलं ततोजातःसरुब्बाबिलनामकः ॥ १५ ॥
सरुब्बाबिलतः श्रीमानबीहूदोव्यजायत ।
अबीहूदात् सुतोजात इलियाकीमनामकः ॥ १६ ॥
इलियाकीम आसोरं जनयामास धार्म्मिकम् ।
आसोरोजनयामास सादोकं कुलवर्द्धनम् ॥ १७ ॥
सादोकात्तु सुतोजात आखीम इति विश्रुतः ।
आखीमोऽजीजनत् पुत्रमिलीहूदं यशस्विनम् ॥ १८ ॥
इलीहूदात् सुतोजात इलियासरनामकः ।
इलियासरतोजातो मत्तनो नाम धार्म्मिकः ॥ १९ ॥
मत्तनो जनयामास याकोबं नाम नामतः
याकोबोजनयामास योषेफं नाम धार्म्मिकम् ।
यमामनन्ति भर्त्तारं देव्या मरियमो बुधाः ॥ २० ॥
तस्या मरियमो गर्भे योशुख्रीष्टोव्यजायत ।
येन पुण्यवती माता क्षतार्थाच वसुन्धरा ॥ २१ ॥
प्राग्‌योशोर्जन्मनः श्रीमान् योषेफो धर्म्मतत्परः ।
आर्य्यां मरियमं देवीं सत्येन वचसाग्रहीत् ॥ २२ ॥

गर्भाधानं विना तस्यां योषेफोऽथजितेन्द्रियः ।
गर्भं तस्याः परिज्ञाय पवित्रात्मप्रभावजम् ॥ २३ ॥
रहसीयेष तां त्यक्तुमनिन्द्यां क्षतमङ्गलाम् ।
स्वप्नेऽथ भगवद्दूतो योषेफमिदमब्रवीत् ॥ २४ ॥
"जहि शङ्कां मद्दाबद्दे पत्नीं तव यशस्विनीम् ।
गृहाण जातगर्भां तां पवित्रात्मप्रभावतः ॥ २५ ॥
सा सोष्यति महाभागा पुत्रं काले पतिव्रता ।
त्वमात्मनस्तु तं पुत्रं योशुं नाम्ना करिष्यसि ॥ २६ ॥
स्वाः प्रजाः सर्व्वपापेभ्यो यस्मात् स तारयिष्यति ।
परित्रातेति विख्यातिं भुवि तस्य भविष्यति ॥ २७ ॥
सर्व्वमेव तथा वृत्तं यथा भागवती श्रुतिः ।
शाश्वती चरितार्थेयमभूदार्षैरनूदिता ॥ २८ ॥
"कुमारी दधती गर्भं पुत्रमेकं प्रसोष्यते ।
इम्मानुयेल इत्येवमाख्या तस्य भविष्यति" ॥ २९ ॥
अथ सुप्तप्रबुद्धोऽसौ योषेफो दूतशासितः ।
तां जग्राह सुतोत्पत्तिं यावत्तस्याः पृथक्स्थितः ॥ ३० ॥
अथ सा सुषुवे पुत्रं यथा काले मनस्विनी ।
योषेफः कृतवान्नाम्ना योशुं तं पुत्रमात्मनः ॥ ३१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

St. Matthew. Chapter 2 : [The wise men out of the East are directed to Christ by a star. They worship him. and offer their presents. Joseph fleeth into Egypt, with Jesus and his mother. Herod slayeth the children: himself dieth. Christ is brought back again into Galilee to Nazareth.]

यिह्रदीयप्रदेशस्य नगरे बैतलेहमि ।
इत्थमभुग्रदिते ख्रीष्टे राजेग्र हेरोदशासिते ॥
प्राच्यास्तत्त्वविदःकेचिद् यिरूशालेममागताः ।
पप्रच्छुः प्रीतिमापन्ना जनांस्तन्नगरस्थितान् ।। १ ॥
'कुत्रास्ते नवसंजातो यिह्रदीनामधीश्वरः ।
दृष्टात् दिशि पूर्व्वस्यां नक्षत्र' तस्य बोधकम् ॥
श्रद्धया तं नमस्कर्त्तुं वयमत्र समागताः' ॥ २ ॥
तेषां वचनमाकर्ण्य यिरूशालेमवासिभिः ।
सर्व्वैः सह महोद्वेगं हेरोदः प्राप्तवान्नृपः ॥ ३ ॥
ततोराजा समाहूय सोपाध्यायान् पुरोहितान् ।
तत्त्वतोज्ञातुमैच्छिष्ट विशेषं ख्रीष्टजन्मनः ॥ ४ ॥
तेऽवदन्नँस्यते जन्म ख्रीष्टोऽसौ बैतलेहमि ।
ख्रीष्टतत्त्वविदः प्राहु राज्ञा एतद्वचो यतः ॥ ५ ॥
"शरण्ये बैतलेहम् त्वं यिह्रदीयवसुन्धरे ।
यिह्रदीनामधीशेभ्यो न लघिष्ठा कदाचन ॥ ६ ॥
यतः स शासकश्रेष्ठस्त्वय्येग्रवावतरिष्यति ।
यस्याध्यक्ष्येऽवतिष्ठेत ममेस्रायेलसन्ततिः" ॥ ७ ॥
इति ज्ञात्वा समाहूय तान् विज्ञान् यिह्रदाधिपः ।
रहसि ज्ञातवांस्तेभ्यस्तत्ताराभुग्रदयक्षणम् ॥ ८ ॥
ततः प्रयास्यतो राजा तान् विज्ञान् बैतलेहमे ।
हेरोदः संवृताकारो वाक्यमेतदभाषत ॥ ९ ॥

'अहं तं पूजयिष्यामि शिशुं भक्तिसमन्वितः ।
तद्यूयं पुनरागत्य सर्व्वं मां व्याहरिष्यथ' ॥ १० ॥
इति राज्ञोवचः श्रुत्वा प्रस्थितास्ते विचक्षणाः ।
पश्यन्तो दिशि पूर्व्वस्यां तारकामग्रगामिनीम् ॥
तं देशमनुसंप्राप्ताः स्थितोऽभूद्यत्र बालकः ॥ ११ ॥
अथ तां तारकां दृष्ट्वा स्थितां तद्भवनोपरि ॥
विविशुस्तद्गृहं प्राज्ञा महानन्दास्तपस्विनः ॥ १२ ॥
तेषामाविरभूत्खीष्टो मात्रा मरियमा सह ।
तेच तं भक्तितोनत्वा तुष्टुवुः परमात्मजम् ॥ १३ ॥
स्वधनानुपजह्रुश्च स्वर्णगन्धद्रवांस्तथा ॥ १४ ॥
अथेश्वरसमादेशं स्वप्ने लब्ध्वा विदांवराः ।
हेरोदमनुपेत्यैव स्वदेशं ते प्रतस्थिरे ॥ १५ ॥
ततोदूतः पुनः स्वप्ने योषेफमिदमादिशत् ।
'शिशुं तन्मातरं चैव गृहीत्वा त्वं त्वरान्वितः ॥
मिशरे पुनरादेशं यावत्तिष्ठ तिरोहितः ।
निहनिष्यति पुत्त्रं तं हेरोदः क्रोधतोऽन्यथा' ॥ १६ ॥
इति श्रुत्वा वचस्तस्य योषेफो भीतिविह्वलः ।
शिशुं तज्जननीञ्चैव गृहीत्वा मिशरं गतः ॥ १७ ॥
हेरोदमरणं यावत् स्थितस्तत्र प्रशासनात् ।
अत्राप्याप्ता वदन्तिस्म वाक्यमीश्वरभाषितम् ॥ १८ ॥
"अहमेवात्मनः पुत्रं मिशरात्तु समाह्वयम् ।"
इत्थं विद्भिरवज्ञातो हेरोदो धरणीपतिः ।
क्रोधेन महताविष्टो वीक्ष्य जन्मक्षणं शिशोः ॥ १९ ॥
तत्कालमनुजातानां वसतां बैतलेहमि ।
तत्सीमभूमिजानांच पुरुषैः क्रूरकर्म्मभिः ॥ २० ॥
द्विवर्षानां तदूनानां स्थितानां स्वीयशासने ।
पुंशिशूनां समस्तानां बधमाज्ञापयत्ततः ॥ २१ ॥

वृत्तमेतदशेषेण तथा सर्व्वमनुष्ठितम् ।
यथेयं श्रुतिराख्याति यिरमीयाह्वभाषिता ॥ २२ ॥
"रामायामार्त्तविक्रोशः श्रूयते भृशदारुणः ।
विलापः शोकतप्तानां करुणं क्रन्दनं तथा ॥ २३ ॥
राहेला पुत्रशोकेन भृशं रोदिति दुःखिता ।
नवापि लभते शान्तिं पुत्रादर्शनकातरा ॥" २४ ॥
मृतेऽथ राज्ञि हेरोदे योषेफं मिशरस्थितम् ।
ईशदूतः पुनःस्वप्ने कार्य्यमुत्तरमब्रवीत् ॥ २५ ॥
"उत्तिष्ठ त्वमितोगच्छ मृतास्ते शिशुघातकाः ।
इस्रायेलभुवं क्षिप्रं मात्रा सह शिशुं नय ॥" २६ ॥
प्रसुप्तप्रतिबुद्धोऽसौ भगवद्दूतशासनात् ।
इस्रायेलभुवंयातो भार्य्ययाच सुतेन च ॥ २७ ॥
तत्रापि शङ्कितः स्थातुं हेरोदात्मजशासने ।
गालीलं प्रस्थितः स्वप्ने लब्धा दैवानुशासनम् ॥
न्यवसन्नगरे धीमाञ् शुभे नासरताभिधे ॥ २८ ॥
एतेन चरितार्थेयं विबुद्धैः कथिता श्रुतिः ॥ २९ ॥
"अज्ञातमुषितोयस्माद् योशुर्नासरते पुरे ।
लोके नासरतीयोऽसौ सुविख्यातोभवेदिति ॥" ३० ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि द्वितीयोऽध्यायः ।

---

## तृतीयोऽध्यायः ।

St. Matthew. Chapter 3: [John preacheth: his office: life, and baptism. He reprehendeth the Pharisees, and baptizeth Christ in Jordan.]

यिहूदीयामरौ तस्मिन् काले स्नापकयोहनः ।
उपदेष्टुं परं तत्त्वं परमार्थविदाययौ ॥ १ ॥
"निवर्त्तय मनः पापात् स्वर्गः सन्निधिमागतः ।"
इत्याह यतचित्तात्मा तपस्वी वदतां वरः ॥ २ ॥
'स एवायं'·यिशायाह्वो यदर्थमिदमुक्तवान् ।
"निर्म्मितिं परिशुद्धिं च विधत्तमध्वनः प्रभोः ॥
इत्युत्थितो महान् घोषो मर्त्ति प्रान्तरे मरोः" ॥ ३ ॥
स एष योहनो वस्त्रमुष्ट्रलोमविनिर्म्मितम् ॥
पर्य्यधासीत् कटौचापि पट्टकां चर्म्मनिर्म्मिताम् ।
पतङ्गैर्म्मधुभिश्चैव वन्यैर्वृत्तिमकल्पयत् ॥ ४ ॥
अथ तच्छरणं प्राप्ता यिहूदियानिवासिनः ।
यिरुशालेमवास्तव्याः स्थिताश्च यर्द्दनान्तिके ॥
स्वीकुर्व्वन्तः स्वपापानि प्रीतये परमात्मनः ।
सर्व्वे ते स्नापितास्तेन तेषां भद्राय यर्द्दने ॥ ५ ॥
शुद्ध्यर्थमागतान् वीक्ष्य स-सदूकिफरीशिनः ।
निवार्य्य स्नापनं तेषां योहनो वाक्यमब्रवीत् ॥ ६ ॥
'सर्पवंश्या विमुक्त्यर्थं कोवः स्नानं समादिशत् ।
भोक्तव्यमेव युष्माभिः स्वकर्म्मसदृशं फलम् ॥ ७ ॥
मुक्तौ शुद्धं मनोहेतु स्तच्च युष्मासु न स्थिरम् ॥ ८ ॥
अब्राहामः पितास्माकमिति मा दृप्यता मृषा ।
ईशोजनयितुं शक्तस्तत्पुत्त्रं प्रस्तरादपि ॥ ८ ॥
पापि-पादपमूलेषु सतो परशुरूपिणी ।
ऐश्वरी संहृतिः शक्तिरिदानीमपि संस्थिता ॥
कुफलान् पादपांश्छित्वा सानले क्षेप्स्यति ध्रुवम् ॥ १० ॥

दीक्षेऽहं सलिलेनैव भवतश्चित्तशुद्धये ।
मत्परं यः समायाति समत्तः शक्तिमत्तरः ॥ ११ ॥
न च वोढुं समर्थोऽस्मि तस्याहं पादुकामपि ।
पूतात्मज्ञानवह्निभ्यां सवोदीक्षां विधास्यति ॥ १२ ॥
स खीयज्ञानसूर्पेण खीयसृष्टेरसत्खलम् ।
संशोध्य साधुगोधूमान् कुशूले संग्रहीष्यति ॥ १३ ॥
ततः परं गृहीत्वाच स्वहस्तेन पृथक् कृतान् ।
सर्वान् धक्ष्यत्यसत्तुषाननन्तनरकाग्निना ॥ १४ ॥
ततश्चाजन्मशुद्धोऽपि स्थितोधर्म्मे सनातने ।
ग्रहीतुं योहनाद्दीक्षां यीशुर्य्यर्द्दनमागतः ॥ १५ ॥
'त्वयैव मामिका दीक्षा विधेया न मया तव ।
इत्युक्तो योहनेनाथ यीशुस्तं वाक्यमब्रवीत् ॥ १६ ॥
'भगवन्ननुमन्यस्व त्वं दीक्षां मम साम्प्रतम् ।
अस्माभिरनुसर्त्तव्यमाद्यं धर्म्मस्य साधनम् ॥ १७ ॥
तच्छ्रुत्वा योहनस्तस्मै ददौ दीक्षां विदांवरः ।
पवित्रे यार्द्दने तोये स्नापयित्वा समाहितः ॥ १८ ॥
स ददर्श ततः स्नातो जलाच्छीघ्रं समुत्थितः ।
शुद्धोबुद्धोविमुक्तात्मा स्वर्गद्वारमपावृतम् ॥ १९ ॥
तं प्रशान्तं विवेशाथ सन्तुष्टंपरमात्मनि ।
कपोतसदृशं ज्योतिर्व्विमलं परमात्मनः ॥ २० ॥
"अनेनाहं परं प्रीतः पुत्त्रश्चायं प्रियोमम ।"
इत्यैश्वरी तदा वाणी त्रिदिवेऽपि समुत्थिता ॥ २१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

St. Matthew. Chapter 4: [Christ fasteth, and is tempted. The angels minister unto him. He dwelleth in Capernaum, beginneth to preach, calleth Peter, and Andrew, James, and John, and healeth all the diseased.]

ततः प्रलोभनं सोढुं योशुर्मायाविचेष्टितम् ।
आत्मना प्रेरितः प्राप्त एकाकी मरुमात्मवान् ॥ १ ॥
चत्वारिंशदहोरात्रमुपोष्य परमात्मजः ।
यदा क्षुधमनुप्राप्तस्तं मायावी तदागमत् ॥ २ ॥
तं तथा तपमायुक्तं वीतमोहरजःस्पृहम् ।
उदासीनवदासीनं मायावीदं वचोऽब्रवीत् ॥ ३ ॥
'यदित्वमीशपुत्रोऽसि सर्व्वशक्तिसमन्वितः ।
आदिश्य प्रस्तरानेतान् कुरु पूपान् मदन्तिके' ॥ ४ ॥
योशुस्तं माययाविष्टमिदमाह विधानवित् ।
'अस्तीदं लिखितं शास्त्रे पूपेनैकेन मानवाः ॥
न जीवन्ति विना वाक्यं प्रत्येकमीशभाषितम्' ॥ ५ ॥
ततःपुण्यपुरंनीत्वा मायावी तं जितेन्द्रियम् ।
शिखरे धर्म्मगेहस्य स्थापयित्वेदमब्रवीत् ॥ ६ ॥
'पातय स्वमितोऽधस्ताद् भवसीशसुतोयदि ।
यतोऽस्ति लिखितञ्चैतच्छास्त्रे पूर्व्वतरैः कृते ॥ ७ ॥
"स विभुस्तवरक्षार्थं दूतानाज्ञापयिष्यति ।
रक्षिष्यन्ति करैस्ते च त्वत्पदं शैलघाततः" ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा योशुस्तंपुनरब्रवीत् ।
'स्मर्य्यते लिखिता शिष्टैरियमप्यपरा श्रुतिः ॥ ९ ॥
"न परीक्षा विधातव्या स्वेश्वरस्य त्वया प्रभोः" ॥ १० ॥
अथोन्नतनगस्याग्रं योशुं नीत्वा स दुर्ज्जनः ।
तं प्रलोभयितुं येते राज्यैश्वर्य्यपराक्रमैः ॥ ११ ॥

प्राहच 'प्रणिपत्य त्वं मां भजस्व दृढ़व्रत ।
एतानि धनरत्नानि तुभ्यमेव ददाम्यहम् ॥ १२ ॥
इति तस्य वचः श्रुत्वा बभाषे परमात्मजः ।
'इतोऽपसर दुष्ट त्वं न करिष्यामि ते वचः ॥ १३ ॥
पूजनं परमेशस्य केवलं विधिबोधितम् ।
स एवैकः समाराध्यः सहि पूज्यतमो मतः' ॥ १४ ॥
इति तस्य वचः श्रुत्वा स दुरात्मा तमत्यजत् ।
ततस्तं परिचेरुस्त्र दूताः स्वर्गात् समागताः ॥ १५ ॥
ततः कारागृहे बद्धं श्रुत्वा स्नापकयोहनम् ।
त्यक्ता नासरतं धाम योशुर्गालीलमागतः ॥ १६ ॥
पुरं कफरणाहूमंमध्यास्तोदधिकूलगम् ।
एतेनानुगृह्णोतेयं यिशायाह्वोदिताश्रुतिः ॥ १७ ॥
"नप्तालो सबुलूनेच सागरोपकूले तथा ।
गालोले परजातीनां प्रदेशे यर्द्दनस्य च ॥
संस्थिता मानवा येच घोरेण तमसावृताः ।
ददृशुस्ते परं ज्योतिः पवित्रं परमात्मनः" ॥ १८ ॥
योशुस्ततः प्रभृत्येव घोषयन्निदमब्रवीत् ।
'निवर्त्तय मनःपापात् स्वर्गः सन्निधिमागतः' ॥ १९ ॥
गालीलीयोदधेस्तोरमेकदा तेन गच्छता ।
भ्रातरौ ददृशाते द्वौ जालनिक्षेपणे रतौ ॥ २० ॥
शिमोन एकोविख्यातः पितरो यस्याभिधापरा ।
तस्य भ्रातान्द्रियश्चैव जात्या तौ धीवरावुभौ ॥ २१ ॥
स तौ प्रोवाच 'वां भद्रमस्तु मामनुगच्छतम् ।
युवामहं करिष्यामि धीवरौ नरधारिणौ' ॥ २२ ॥
तौ च जालं परित्यज्य तूर्णं तमनुजग्मतुः ।
ततस्तेनाग्रतो गत्वा दृष्टौ शिवदियात्मजौ ॥ २३ ॥
याकोबो योहनश्चैव भ्रातरौ तौ सहोदरौ ।
नावि पित्रा सहासीनौ जालस्य सीवने रतौ ॥ २४ ॥

आहूतौ तेन तौ त्यक्त्वा पितरं नावमेव च ।
जग्मतुः शरणं तस्य शरण्यस्य निराशिषः ॥ २५ ॥
तस्मात् स्थानात्ततोऽभ्येत्य यीशुर्गालीलमण्डलम् ।
स्वर्गराज्यसुसंवादं बभाषे धर्म्ममन्दिरे ॥ २६ ॥
शारीरै र्मानसैश्चैव व्याधिभिः परिपीड़ितान् ।
अन्यैश्च व्यसनैःक्लिष्टानकरोत् स निरामयान् ॥ २७ ॥
दुष्करं तस्य तत् कर्म्म दृष्ट्वा तद्देशवासिनः ।
श्रद्धया परयोपेताः सर्व्वे तमनुवव्रजुः ॥ २८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

St. Matthew. Chapter 5 : [ Christ beginneth his sermon in the mount : declaring who are blessed, who are the salt of the earth, the light of the world, the city on an hill, the candle : that he came to fulfil the law. What it is to kill, to commit adultery, to swear : exhorteth to suffer wrong, to love even our enemies, and to labour after perfectness. ]

जनौघानथ संवीक्ष्य शिष्यांश्चैव समीपगान् ।
यीशुः पर्व्वतमारुह्य प्रोवाच प्रथमं वचः ॥ १ ॥
दीनात्मानो नरा धन्या अहङ्कारमनाश्रिताः ।
तेषामेव यतोऽहस्ते स्थितः स्वर्गः सनातनः ॥ २ ॥
ये कृत्वा दुष्कृतं कर्म्म पश्चात्ताप-समन्विताः ।
तेषाञ्च सान्त्वनास्तीति धन्यास्ते धूतकल्मषाः ॥ ३ ॥
स्वभावमृदवोधन्याः प्रशान्तमानसा जनाः ।
तेषामेव हि भोगायससागरवसुन्धरा ॥ ४ ॥

धर्म्मजिज्ञासवो धन्या धर्म्मशीलाश्च ये जनाः ।
निस्पृहाः सर्व्वकामेभ्यो लप्स्यन्ते ते हि पूर्णताम् ॥ ५ ॥
दयावन्तो जना धन्या स्तोष्यास्तेऽप्यनुकम्पया ।
शुद्धान्तःकरणा धन्यास्ते द्रक्ष्यन्ति परात्परम् ॥ ६ ॥
तनया जगदीशस्य धन्याः शान्तिविधायिनः ।
धर्म्मार्थोपद्रुता धन्या यतस्ते स्वर्गसङ्गिनः ॥ ७ ॥
धन्याश्च परमोदारा भवन्तः शुभबुद्धयः ।
ये मदर्थं विनिन्द्यन्ते पीड्यन्ते चाज्ञतात्मभिः ॥ ८ ॥
पूर्व्वं बभूवुर्ये शिष्टा इत्थं तेऽपि विनिर्जिताः ।
न चात्र परिहारोऽस्ति माभूद्वो मनसो भयम् ॥ ९ ॥
पर्य्याप्तमस्ति वः स्वर्गे सञ्चितं पारितोषिकम् ।
यल्लाभात् सर्व्वलाभः स्यात्तदानन्दत हृष्यत ॥ १० ॥
यूयं सुसदृशाः सौम्या पृथिव्या लवणैः समम् ।
तानि चेद् विरसानि स्युस्त्यज्यन्ते सर्व्वथा जनैः ॥ ११ ॥
पर्व्वतस्था पुरी रम्या यथा भात्यतिरोहिता ।
प्रतिभा भवतां भातु तथा लोके व्यवस्थिता ॥ १२ ॥
द्रोण्या अधोनिधीयन्ते न दीपा ज्वलिता यथा ।
प्रकाशयन्ति गेहं तु दीपाधारोपरिस्थिताः १३ ॥
एषोपमा स्थितावत्सा भवतामपि तेजसः ।
अनयोपमया तेजो भवतां भुवि वर्द्धताम् ॥ १४ ॥
येनानुभावितैः स्वर्ग्यः पिता वः पूज्यते जनैः ।
यूयं मामपि संवीक्ष्य न विकम्पितुमर्हथ ॥ १५ ॥
विध्याप्तयोर्व्विलोपाय नाहं पृथिवीमागतः ।
प्राप्तोऽहं परया शक्त्या तयोरेवाभिवृद्धये ॥ १६ ॥
"रजस्तमोविनिर्म्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥
आप्ताःशिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्" ॥ १७ ॥

आकाशप्रलयं यावद् यावच्च जगतोलयम् ।
बिन्दुशोऽपि न यास्यन्ति विलोपमाप्तसूक्तय: ॥ १८ ॥
स्वल्पमप्याप्तवाक्यानां योऽतस्त्यजति मूढ़धी: ।
प्रयोजयति वा त्यक्तुं स्वर्गराज्ये म चाधम: ॥ १९ ॥
अनुशास्ति य एतानि स्वयं चैवानुतिष्ठति ।
स एव स्वर्गसाम्राज्ये प्रवर: पुरुषोमत: ॥ २० ॥
सोपाध्यायफरोशिभ्य: साधुता वो महीयसी ।
यदि नस्यात्तदा स्वर्गं प्रवेशोव: सुदुर्लभ: ॥ २१ ॥
"राजद्वारेऽभियुक्ता: सुग्रष्टं होता नरघातका: ।
नरहत्या न कार्य्ये"ति पुरा प्राहुर्म्महर्षय: ॥ २२ ॥
न कार्य्यों मम वाक्येन क्रोधोऽपि सोदरान् प्रति ॥ २३ ॥
य: क्रुध्यति वृथा स्वेभ्यो भ्रातृभ्योऽप्रयतोनर: ।
सोऽभियुक्तोभवेदेव सत्यमेतद् ब्रवीम्यहम् ॥ २४ ॥
'निर्ब्बोधस्त्व' मिति ब्रूयाद् योनिजभ्रातरं प्रति ।
नरोमहासभायां स त्वभियुक्तो भवेद् ध्रुवम् ॥ २५ ॥
निपतेन्नरकाग्नौच मूढ़स्त्व'मिति यो वदेत् ।
सदा सोदर-सन्तोषो विधेयोऽत: प्रयत्नत: ॥ २६ ॥
यो भ्रातृतोषमुत्सृज्य वर्त्तते यज्ञकर्म्मणि ।
स सम्यगविधिनेष्ट्वापि न यागफलभाग्भवेत् ॥ २७ ॥
समागम्य विपक्षेण शीघ्रं सन्धीयतां पथि ।
अन्यथा प्राड्विवाकाय शत्रुर्युष्मान् समर्पयेत् ॥ २८ ॥
कारायां स्थापनार्थं स किङ्करेभ्योऽर्पयिष्यति ।
भोगलेशेऽवशिष्टेतु नैव तस्माद्विमोक्ष्यथ ॥ २९ ॥
"न जातु व्यभिचारीस्या"दिति व्याहरति श्रुति: ।
परदारा न गम्या:स्यु र्मनसापीति मे मति: ॥ ३० ॥
यदि वो दक्षिणं नेत्रं हस्तोवामेतरोऽपिवा ।
दूषयेत् सकलं देहं तयो:कार्य्यं विवर्ज्जनम् ॥ ३१ ॥

विनाशात् सर्व्वदेहस्य वरमेकाङ्गवर्जनम्।
भवतां श्रेयसे वत्साः सत्यमेतद्‌ब्रवीम्यहम्॥ ३२॥
"त्यागपत्रं पतिर्दत्त्वा त्यजेद्‌भार्य्या" मिति श्रुतिः।
व्यभिचारं विना भार्य्यां न त्यजेदिति मे मतिः॥ ३३॥
पतिस्त्यक्त्वा सतीं भार्य्यां भ्रष्टाचारां करोति ताम्।
उद्वहेद्यः परित्यक्तां व्यभिचारी सचाधमः॥ ३४॥
"न वृथा शपथं कुर्य्यात् प्रीतये परमात्मनः।
पालयेत् शपथं सत्य"मिति पौराणिकी श्रुतिः॥ ३५॥
भवद्भिः सर्व्वथा वर्ज्जः शपथो मम शासनात्।
न स्वर्गः शपथे योज्यः स हि सिंहासनं विभोः॥ ३६॥
न योज्या पृथिवी दूयम्भि सा हि तस्य पदासनम्॥ ३७॥
यिरूशालेममुच्चार्य्य न कार्य्यः सत्यनिर्णयः।
यतस्तत्पुरमध्यास्ते सर्व्वलोकमहेश्वरः॥ ३८॥
नात्मनः शिरसोवापि दिव्यं कार्य्यं कदाचन।
शक्यते नान्यथाकर्त्तुं यत एकःशिरोरुहः॥ ३९॥
वाक्यमैकान्तिकं नित्यं वक्तव्यं तद्धि सात्त्विकम्।
ततोऽन्यत्तामसं ज्ञेयं छलजात्यादिदूषितम्॥ ४०॥
"चक्षुषा चक्षुषोरोषं दतां दन्तैश्च निर्जयेत्"।
इति पौराणिकी वार्त्ता भवतां श्रुतिमागता॥ ४१॥
ममाज्ञया न कर्त्तव्यो विरोधोदुर्जनैः सह॥ ४२॥
कपोलं यदि चाहन्ति कश्चिद् वो दक्षिणं जनः।
परावर्त्यापरं गण्डं क्रोधस्तस्यापनीयताम्॥ ४३॥
विवादे यदि कश्चिद् वः कञ्चुकं हर्त्तुमिच्छति।
प्रावारस्यापि दानेन तुष्टिस्तस्य विधीयताम्॥ ४४॥
एकक्रोशानुयानाय यदि कश्चिद् वदेत्तु वः।
क्रोशद्वयं प्रगम्यापि तोषस्तस्य विधीयताम्॥ ४५॥
अधमर्णार्थिनः कार्य्या विमुखा न कदाचन।
"प्रतिवासिजने प्रेम कुर्य्याद् द्वेषमरौ तथा"॥ ४६॥

इतिश्रुतिः पुरा प्रोक्ता भवतां श्रुतिमागता ।
ममाज्ञयात्तु कर्त्तव्यं सदृत्प्रेमाप्रियेष्वपि ॥ ४७ ॥
कर्त्तव्या प्रार्थना तेषां कृते वस्ताड़यन्ति ये ।
विभुरुत्थापयत्यर्कं सदसत्सु यथा समम् ॥ ४८ ॥
अपश्च वर्षयत्यत्र यथेशः समदर्शनः ।
सोपमा भवतामस्तु सर्व्वत्र समदर्शिता ॥ ४९ ॥
यदि स्याद् भवतां प्रेम केवलं ह्युपकारिषु ।
करसंग्राहकेभ्योवः कास्यात्तर्हि विशिष्टता ॥ ५० ॥
यदि स्याज्ज्ञातपर्य्यन्तं भवतामभिवादनम् ।
स्यात्तर्हि भवतां शीलं करसंग्राहकैः समम् ॥ ५१ ॥
अतोवः सर्व्वदा सन्तु तथा सर्व्वाः प्रवृत्तयः ।
प्रवृत्तिः परमेशस्य सर्व्वेष्वेव समा यथा ॥ ५२ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

St. Matthew Chapter 6 : [ Christ continueth his sermon in the mount, speaking of alms, prayer, forgiving our brethren, fasting, where our treasure is to be laid up, of serving God, and mammon : exhorteth not to be careful for worldly things : but to seek God's kingdom ]

नराणामग्रतोदानं न देयं मानलिप्सया ।
तथा प्रकुर्व्वतां वःस्यान्नस्वर्ग्यं पारितोषिकम् ॥ १ ॥
तस्माद् दानं न दातव्यं कृत्वाग्रे भेरीवादनम् ।
यथा भण्डाः प्रयच्छन्ति पथि धर्म्मगृहेषु च ॥ २ ॥

लाभस्तेषां प्रशंमान्त इति सत्यं ब्रवीम्यहम् ।
परोच्चमस्तु वोदानमनपेच्य प्रयोजनम् ॥ ३ ॥
तत् फलं परमेशो वः प्रकाशमर्पयिष्यति ॥ ४ ॥
पुरतो न मनुष्याणां कर्त्तव्या प्रार्थना तथा ।
प्रार्थयन्ते यथा भण्डाः पथि धर्म्मगृहेषु च ॥ ५ ॥
लाभस्तेषां प्रतिष्ठान्त इति सत्यं ब्रवीम्यहम् ॥ ६ ॥
यूयं तु स्वान्तरागारे रुद्धद्वारे समाहिताः ।
निधाय हृदि निश्चेशं प्रार्थयध्वं निरत्ययाः ॥ ७ ॥
अनेन प्रणिधानेन परमात्मा परोच्चवित् ।
प्रदास्यत्येव सिद्धिं वः स्वर्गराज्यविहारिणीम् ॥ ८ ॥
भगवत्प्रार्थनाकाले श्रोष्यते भगवानिति ।
प्रार्थनापुनरावृत्तिं कुर्व्वन्ति परजातयः ॥ ९ ॥
परमात्मा सदा वेत्ति यतो युष्मत् प्रयोजनम् ।
प्रार्थयध्वं ततोनित्यं वाक्येनानेन संयताः ॥ १० ॥
"स्वर्गस्ते परमं धाम पितस्त्वन्नाम पूज्यताम् ।
साम्राज्यं ते समायातु तवेच्छा पूर्य्यतां सदा ॥ ११ ॥
देहि शोवस्तिकं भच्यमद्यास्मभ्यमयाचितम् ॥ १२ ॥
चमामहे वयं नित्यं यथास्मद् द्रोहिणो जनान् ।
चमस्व त्वं तथा पापमस्माकं परमेश्वर ॥ १३ ॥
मा प्रलोभनमायातु भवतो नः परात्पर ॥ १४ ॥
आपदः पाहिनो नित्यं सर्व्वलोकमहेश्वर ।
यशोविक्रमराज्यानि वर्त्तन्ते सर्व्वदा त्वयि' १५ ॥
यदि दोषं मनुष्याणां चमयेवं निरस्यथ ।
चमिष्यते हि दोषं वः परया चमया विभुः ॥ १६ ॥
न कुर्य्यु रुपवासं च भवन्तो मलिनाननाः ।
प्रकुर्व्वन्ति यथा भण्डा लोकसंग्रहतत्पराः ॥ १७ ॥
तत्फलं साधुवादाक्तमिति सत्यं वदाम्यहम् ॥ १८ ॥

भवद्भिरुपवासाह्हे मूर्ध्नि तैलनिषेवनम् ।
मुखप्रक्षालनं चैव कर्त्तव्यं विमलाननैः ॥ १९ ॥
इह कश्चिद् विजानीयादुपवासं न तर्ह्हि वः ॥ २० ॥
वेत्स्यत्येको जगन्नाथः परमात्मा परोक्षवित् ।
स एवावर्ज्जितो भक्त्या भवतोऽनुग्रहीष्यति ॥ २१ ॥
नात्मार्थमिह कर्त्तव्यः पृथिव्यां धनसञ्चयः ।
कीटचौरकलङ्काद्यैस्तद्धनं लभते क्षयम् ॥ २२ ॥
यत् स्वर्ग्यमविनाशिस्यादहार्य्यं तस्करादिभिः ।
सञ्चये तस्य वित्तस्य यतितव्यं समाहितैः ॥ २३ ॥
विषयप्रवणं चित्तमन्यथा नैव शक्यते ।
नियन्तुमहितादर्थात् कल्पकोटिशतैरपि ॥ २४ ॥
न यथा मलिनं नेत्रं सर्व्वं देहं प्रकाशयेत् ।
तथा न कलुषं चित्तमात्मानमभिमोचयेत् ॥ २५ ॥
यथाहि स्वामिनोर्दास्यं कर्त्तुं नैकेन शक्यते ।
एकस्मिंस्तस्य विद्वेषः प्रेमान्यस्मिन् समीक्ष्यते ॥ २६ ॥
अनुरक्तिविरक्तिभ्यां निष्ठा स्यात्तस्य चञ्चला ।
एवं धनेशयोर्भक्तिरेककाला सुदुर्लभा ॥ २७ ॥
वृत्त्यर्थमपिचात्यर्थं नविकम्पितुमर्हत ।
वृत्तेर्ह्हि होऽधिको देहादन्तरात्मा विशिष्यते ॥ २८ ॥
न वपन्ति न कृन्तन्ति न सञ्चिन्वन्ति खेचराः ।
तेषामपि वहत्येव योगक्षेमं परेश्वरः ॥ २९ ॥
श्रेयांसः सर्व्वशस्तेभ्यो यूयं किमनुशोचथ ।
कः शक्तश्चिन्तयित्वापि स्वभावपरिवर्त्तने ॥ ३० ॥
पुरतः स्वसुनाख्यानि पुष्पाणि किं न पश्यथ ।
न श्रमं तानि कुर्व्वन्ति न च तन्वन्ति सूत्रकम् ॥ ३१ ॥
तथापि तानि वर्द्धन्ते शोभया करणैर्व्विना ॥ ३२ ॥
स्वस्य सर्व्वप्रभावेण शलोमापि विभूषितः ।
नासीदेकेन सदृशस्तेषामेतद् ब्रवीम्यहम् ॥ ३३ ॥

यान्यद्य विद्यमानानि श्वःक्षेप्याग्निलाश्रये ।
यदीशो भूषयेत्तानि कथं वो न विभूषयेत् ॥ २४ ॥
तद् वृत्तिचिन्ता युष्माभि र्न कार्य्या परजातिवत् ।
आदौ सर्व्वप्रयत्नेन परेशमनुगच्छत ।
सर्व्वं जीवार्थं तत्त्वज्ञः स वो वृत्तिं विधास्यति ॥ २५ ॥
वृत्तिः श्वोवस्तिकी तस्मान्नाद्य चिन्त्या भवद्विधैः ।
श्वस्तनं हि दिनं तस्य स्ववृत्तिं चिन्तयिष्यति ॥ २६ ॥
शोघ्रगत्वस्वभावाच्च दिवसं नावतिष्ठते ॥
परिणामस्वभावेन तद्दिनान्यदपेक्षते ॥ २७ ॥

इति श्रीतारागचरणकृतवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि षष्ठोऽध्यायः ।

---

St. Matthew. Chapter 7 : [ Christ ending his sermon in the mount, reproveth rash judgement, forbiddeth to cast holy things to dogs, exhorteth to prayer, to enter in at the strait gate, to beware of false prophets, not to be hearers, but doers of the word : like houses builded on a rock, and not on the sand. ]

## सप्तमोऽध्यायः ।

हेतुवादं समाश्रित्य न विचार्य्याः परे नराः ।
भवन्तो न विचार्य्याः स्यु स्तथासत्यपरैरपि ॥ १ ॥
युष्माभिः परिमातव्या ये नरा मात्रया यया ।
यूयं च परिमातव्या स्तैर्नरैर्मात्रया तया ॥ २ ॥
स्वभ्रातृनेत्रविन्यस्त-शूकखण्डनिरीक्षणात् ।
न्याय्यं स्वचक्षुरन्तःस्थकाष्ठखण्डेक्षणं वरम् ॥ ३ ॥

अप्रज्ञो निजनेत्रस्य यः शल्यस्यापमारणे ।
स कथं परनेत्रस्य शल्यखण्डं समुद्धरेत् ॥ ४ ॥
तस्मादादौ प्रयत्नेन स्वीयां प्रज्ञां विशोधयेत् ।
परेषां प्रतिपत्त्यर्थं पश्चाद् यत्नं समाचरेत् ॥ ५ ॥
नाशुचिभ्यः प्रदातव्यं श्वभ्यो वस्तु विशुद्धिमत् ।
अग्रतो न वराहाणां निःक्षेप्यं मौक्तिकं तथा ॥ ६ ॥
मर्द्दयिष्यन्ति ते तत्तु पद्भिर्ब्बोधविवर्ज्जिताः ।
प्रत्यावृत्य हनिष्यन्ति युष्मानप्युपकारिणः ॥ ७ ॥
प्रार्थनान्वेषणे कुर्व्वन् भद्रमेवानुपश्यति ।
कृत्वाघातं यथा द्वारे द्वारं पश्यत्यपावृतम् ॥ ८ ॥
अस्ति किं भवतां मध्ये कश्चिदेवंविधो जनः ।
पुत्राय पूपकामाय प्रस्तरं यः प्रयच्छति ॥ ९ ॥
अज्ञानामपि युष्माकं भवेद् वृत्तिर्यदीदृशी ।
सर्व्वज्ञस्य पितुर्द्दाने भवतां संशयः कथम् ॥ १० ॥
लोके यथात्मनो यूयं सम्भावयितुमिच्छथ ।
मानवा अपि सम्भाव्या स्तथेत्याहुर्म्मनीषिणः ॥ ११ ॥
सङ्कीर्णद्वारमाख्यातं तत्त्वमध्यात्मसंश्रितम् ।
सङ्कीर्ण-गोपुरेणैव गन्तव्यं तत्र नान्यथा ॥ १२ ॥
तथा विशालमाख्यातं द्वारं नाशनमात्मनः ।
अयनं च सुविस्तीर्णं येन यान्ति सहस्रशः ॥ १३ ॥
यूयं सृतिं परित्यज्य बृहद्द्वारामशाश्वतीम् ।
सङ्कीर्णगोपुरेणैव विशत स्वर्गमव्ययम् ॥ १४ ॥
आत्मच्छद्मचरेभ्यश्च रक्ष्य आत्मा प्रयत्नतः ।
समीपमुपसर्पन्ति मेषवत्ते च मायिनः ॥ १५ ॥
असिष्णवः परोक्षे च ते वृकप्रतिरूपकाः ।
ये घ्नन्ति सहसाच्छिद्रमन्विष्य सहगामिनः ॥ १६ ॥
प्रतीयन्ते यथा वृक्षा उत्तमा वाधमाः फलैः ।
ज्ञायन्तेऽवितथं तेऽपि तथैव निजकर्म्मभिः ॥ १७ ॥

द्राक्षा बहुमता लोके कण्टके ताः फलन्ति किम् ।
गोक्षुरात् किं प्रचीयन्त उदुम्बरफलानि वा ॥ १८ ॥
सुवृक्षो जनयत्येव सुफलानि सदा भुवि ।
कुवृक्षो जनयत्येव कुफलानि न संशयः ॥ १९ ॥
कुवृक्षश्छिद्यते नित्यं वह्निना वा प्रदह्यते ।
तस्मात् कर्म्मानुमेयं स्याच्चारित्रमिह लौकिकम् ॥ २० ॥
यामिमां पुष्पितां वाचं प्रवदन्त्यपसेविनः ।
हे प्रभो हे प्रभो चेति मामभिप्रेत्य सर्व्वदा ॥ २१ ॥
ये च त्वां प्रवदिष्यन्ति मायोपहृतचेतसः ।
त्वन्नाम्ना घोषिता दिव्याः प्रभो शिष्टोक्तयः शुभाः ॥ २२ ॥
दूरं निःसारिता भूताः क्रिया बह्व्यश्च साधिताः ।
नाहं प्रतिग्रहीष्यामि तानधर्म्मरतान् जनान् ॥ २३ ॥
इतोदूरं प्रयातेति वदिष्याम्यथवा पुनः ।
यतस्ते नाभियास्यन्ति स्वर्गं स्वर्गबहिर्म्मुखाः ॥ २४ ॥
पितुर्म्मेऽनुगता येच तदिष्टैः शुभकर्म्मभिः ।
ते प्राप्नुवन्ति स्वाराज्यं सर्व्वभूतहिते रताः ॥ २५ ॥
ये मे मतमिदं नित्यं शृण्वन्त्येकाग्रचेतसः ।
दृढं तथानुतिष्ठन्ति ज्ञानिन स्ते प्रकीर्त्तिताः ॥ २६ ॥
तेषां विमलसत्त्वानां क्लेशेषु बलवत्स्वपि ।
स्थास्यत्येवाचला बुद्धिरीश्वरे नात्र संशयः ॥ २७ ॥
ये केचिदभ्यसूयन्ति ममेदं मतमुत्तमम् ।
अथवा नानुतिष्ठन्ति ते तु मूढ़ाः प्रकीर्त्तिताः ॥ २८ ॥
तेषां चञ्चलचित्तानां मूढ़ानामजितात्मनाम् ।
यास्यतेव लयं बुद्धिः क्लेशेनाल्पेन बाधिता" ॥ २९ ॥
श्रुत्वेमामुत्तमां वाचं सहजां यीशुभाषिताम् ।
जनौघाः साधुसाध्वेवं प्रहृष्टाः सममब्रुवन् ॥ ३० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

St. Matthew. Chapter 8: [Christ cleanseth the leper, healeth the centurion's servant, Peter's mother-in-law, and many other diseased: sheweth how he is to be followed: stilleth the tempest on the sea, driveth the devils out of two men possessed, and suffereth them to go into the swine.]

अवरूढं ततो वीक्ष्य पर्व्वतात् परमात्मजम् ।
बभूवर्म्मिलितास्तस्य सन्निधौ बहवोजनाः ॥ १ ॥
कुष्ठी कश्चित् तदाभ्येत्य नत्वा तमिदमुक्तवान् ।
'यदि ते मय्यनुक्रोशः पवित्रं कुरु मां प्रभो ॥ २ ॥
स तस्य वचसा प्रीत इच्छामीति वचश्चाब्रवीत् ।
स्पृष्ट्वाच निजहस्ताभ्यां तं चकार निरामयम् ॥ ३ ॥
अथ तं प्रस्थितं वीक्ष्य प्रोवाच परमात्मजः ।
'मा वादी स्त्वमिदं वृत्तं हर्षादपरमानवम् ॥ ४ ॥
गच्छ त्वं याजकस्थानं निजरूपं प्रदर्शय ।
नैवेद्यं मोशिनादिष्टं याजकेभ्यः प्रयच्छच ॥ ५ ॥
ततः कफरनाहूमं प्रविष्टे परमात्मजे ।
कश्चिच्छतपतिर्भक्त्या तमिदं वाक्यमब्रवीत् ॥ ६ ॥
'मम दासो महादुःखं मद्गृहे लभते प्रभो ।
स रोगेणातिकृच्छ्रेण पक्षाघातेन पीड़ितः' ॥ ७ ॥
यीशुस्तमब्रवीद् भद्र माभूत्ते मनसो भयम् ।
अहमेव करिष्यामि तमवश्यं निरामयम् ॥ ८ ॥
श्रुत्वा शतपतिस्तस्य वाक्यं विश्वासवर्द्धनम् ।
हृदये महतीमाशां निधायेदं वचोऽब्रवीत् ॥ ९ ॥
'भवन्तं मद्गृहं नेतं सामर्थ्यं नास्ति मे प्रभो ।
भवद्वचनमात्रेण स रोगान्मुक्तिमाप्नुयात् ॥ १० ॥
आज्ञाधीनं जगत्सर्व्वमाज्ञाधीना नियन्तृता ।
महतामैश्वरी सिद्धिराज्ञायामेव संस्थिता' ॥ ११ ॥
तस्य तद् वचनं श्रुत्वा हेत्वन्वर्थसमन्वितम् ।
सम्बोध्याभ्यागतान् सर्व्वान् यीशुर्व्वचनमब्रवीत् ॥ १२ ॥

न मयतादृशो भक्ति र्दृष्टेस्रायेलसन्ततौ ॥ १३ ॥
पूर्व्वस्याः पश्चिमायाश्च दिशोऽन्येऽत्र समागताः ।
अब्राहामादिभिःसार्द्धमाशिष्यन्ते दिवि ध्रुवम् ॥ १४ ॥
ये त्वस्मिन् संस्थिताराज्ये सन्ताना भक्तिवर्ज्जिताः ।
तिमिरं ते प्रवेक्ष्यन्ति भयक्लेशसमन्वितम् ॥ १५ ॥
ततः शतपतिं प्राह योशुः परमतत्त्ववित् ।
"याहि श्रद्धानुरूपं त्वं लभस्व फलमुत्तमम्" ॥ १६ ॥
स विश्वस्य प्रभोर्व्वाक्यं स्वगृहं त्वरयागतः ।
अपश्यदात्मनोदासं तत्क्षणादेव सुस्थितम् ॥ १७ ॥
ततः पितरस्य भवने तस्य श्वश्रूं ज्वरार्दिताम् ।
योशुर्हस्तेन संस्पृश्य चकार विगतज्वराम् ॥ १८ ॥
सा शय्यायाः समुत्थाय तत्क्षणाद् विगतज्वरा ।
श्रद्धया पूजयामास पूजार्हं परमात्मजम् । १८ ॥
भूताविष्टानथानिन्युः सायमन्ये तदन्तिकम् ।
आदेशेनैव तान् सर्व्वान् स स्वस्थानकरोत् प्रभुः ॥ २० ॥
इत्येवं कर्म्मभिस्तस्य सर्व्वलोक-शुभप्रदैः ।
गता सिद्धिं यिशायाह-श्रुतिः श्रोतृहितैषिणी ॥ २१ ॥
"स दुःखं शमयामास यन्नो देहस्य बाधनम् ।
मनसो बाधनं यच्च प्रभुस्तत् स्वयमग्रहीत्" ॥ २२ ॥
चतुर्दिक्षु ततो दृष्ट्वा समवेताञ् जनान् बहून् ।
परपारप्रयाणाय परमात्मज आदिशत् ॥ २३ ॥
अथ कश्चिदुपाध्यायो योशोरन्तिकमागतः ।
ययाचे तस्य शिष्यत्वमौत्सुक्येन प्रणोदितः ॥ २४ ॥
तं तथा माययाविष्टं योशुरुत्तरमब्रवीत् ।
'विवराणीह विद्यन्ते जम्बुकानां धरातले ॥ २५ ॥
सन्ति नीड़ा निवासाय पक्षिणां व्योमचारिणाम् ।
शिरः सन्धारणार्थं तु मम स्थानं न विद्यते' ॥ २६ ॥

नियतात्मा परः शिष्यो योशुमेत्येदमब्रवीत् ।
'अनुमन्यस्व मां पूर्व्वं पितुरन्त्येष्टिसिद्धये' ॥ २७ ॥
योशु स्तमब्रवीदेहि त्यज पश्चत्वमागतम् ।
अन्त्येष्टिं साधयिष्यन्ति मृतानां मूढ़चेतना:' ॥ २८ ॥
अथ नावं समारुह्य योशुः शिष्यसमन्वितः ।
मध्ये समुद्रमागत्य निद्रावशमुपागतः ॥ २९ ॥
ततः पवनसंक्षुब्धसागरोर्म्मिप्रकम्पिताम् ।
नावं दृष्ट्वा परां भीतिं सम्प्राप्ताः शिष्यसत्तमाः ॥ ३०
अथ सुप्तप्रबुद्धोऽसौ शिष्याणामार्त्तशब्दनैः ।
सागरं तर्ज्जयामास वातं च परमात्मजः ॥ ३१ ॥
सागरः प्रकृतिं प्राप तत्क्षणात्तस्य तर्ज्जनैः ।
प्रबलो मातरिश्वाच शान्तवेगः शिवो ववौ ॥ ३२ ॥
तद्वीक्ष्य महदाश्चर्य्यं कार्य्यमन्यैः सुदुष्करम् ।
योशुमद्भूतकर्म्माणं तुष्टुवुः सकला जनाः ॥ ३३ ॥
गादारीयप्रदेशेऽथ विहरन्तं जगत्प्रभुम् ।
शवागारान्निःसृतौ द्वौ भूताविष्टौ समीयतुः ॥ ३४ ॥
ततस्तौ भृशमुत्क्रुश्य तमिमां वाचमूचतुः ।
'साम्प्रतं कोहि सम्बन्ध ईशपुत्त्र त्वयास्ति नो ॥ ३५ ॥
चिकीर्षुरावयोः पीड़ामकाले किमिहागतः ॥ ३६ ॥
यदि त्वमावयोस्त्राता दुःखादीश्वरनन्दन ।
आवां नय समुद्धृत्य पुरतः शूकरव्रजम् ॥ ३७ ॥
'तथास्त्वि'ति समादिश्य स तथा कृतवान् प्रभुः ॥ ३८ ॥
ततस्ते शूकराः सर्व्वे वेगात् सागरमाविशन् ।
पलाय्य रक्षकाः सर्व्वे पुरे वार्त्तां न्यवेदयन् ॥ ३९ ॥
अथपौरजनाः सर्व्वे योशोरन्तिकमागताः ।
पुरसीम्नो वहिर्देशगमनाय तमादिशन् ॥ ४० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि अष्टमोऽध्यायः ।

## नवमोऽध्याय

St. Matthew. Chapter 9. [ Christ curing one sick of the palsy, calleth Matthew from the receipt of custom, eateth with publicans and sinners, defendeth his disciples for not fasting, cureth the bloody issue, raiseth from death Jairu's daughter, giveth sight to two blind men, healeth a dumb man possessed of a devil, and hath compassion of the multitude. ]

अथ नावा समुत्तीर्य्य समुद्रं परमात्मजः ।
परित्राणार्थमार्त्तानां निजदेशं समाययौ ॥ १ ॥
शयानमथ खट्टायां पक्षाघातेन पीड़ितम् ।
जनमेकं समानिन्युर्व्वाहकास्तस्य सन्निधिम् ॥ २ ॥
ज्ञात्वा तेषां परां श्रद्धां यीशू रोगिणमब्रवीत् ।
"समाश्वसिहि भद्रं ते स्यात्त्वं मुक्तोऽसि पापतः" ॥ ३ ॥
उपाध्यायास्तु तच्छ्रुत्वा वचनं यीशुभाषितम् ।
मनसा चिन्तयामासुःकिमयं प्रोक्तवानिति ॥ ४ ॥
विनिन्दतीश्वरं साक्षादयमुक्तेदृशं वचः ॥ ५ ॥
विदित्वा संशयं तेषां यीशुर्व्वचनमब्रवीत् ।
"कथं विप्रतिपद्यन्ते भवन्तो वचने मम ॥ ६ ॥
'पापानां ते क्षमा जाता' थवा त्वं विहरोत्थितः' ।
वाक्ययोः रुणयोर्म्मध्ये कतरच्छोभनं भवेत् ॥ ७ ॥
शक्तो मनुष्यपुत्त्रस्तु नाराणां पापमुक्तये ।
इति वः प्रतिपत्त्यर्थं सोऽब्रवीदीदृशं वचः" ॥ ८ ॥
इत्युक्त्वा रोगिणं प्राह "त्तिष्ठत्वमात्मनो गृहम् ।
गच्छ पर्य्यङ्कमादाय निजेन शिरसा वहन्" ॥ ९ ॥
स तु पर्य्यङ्कमादाय स्वगृहं त्वरयागतः ।
यीशोरैश्वर्य्यं वीक्ष्य भक्त्या तं तुष्टुवुर्जनाः ॥ १० ॥
तस्मात् स्थानादपाक्रम्योपविष्टं शुल्कवेश्मनि ।
मथिं नाम जनं कश्चिद्दर्श परमात्मजः ॥ ११ ॥

'स तं प्राह्वास्तुते भद्रमेहित्वं मामनुव्रज' ।
तत्क्षणात् सोऽनुवव्राज मथि: परमधार्म्मिक: ॥ १२ ॥
योशुर्भोजनकालेऽथ सशिष्य: सह पापिभि: ।
करसंग्राहिभिश्चैव गृहमध्यं प्रविष्टवान् ॥ १३ ॥
फरोशिनस्तु तद्दृष्ट्वा पप्रच्छु: शिष्यसत्तमान् ।
आचार्य्यो भवतां कस्मादश्नन्त्येभिर्नराधमै: ॥ १४ ॥
अशोभनं तदाकर्ण्य योशुरुत्तरमब्रवीत् ।
नीरोगान् न चिकित्सन्ति भिषज: स्वीयभेषजै: ॥ १५ ॥
स्वीयां वृत्तिं समाश्रित्य चिकित्सन्तिच रोगिण: ।
'न मया कीर्त्त्यते यज्ञो दया हि बहु मन्यते ॥ १६ ॥
परित्राणाय साधूनां पृथिवीं नाहमागत: ।
पापिनां पापमुक्त्यर्थं ममावतरणं यत:' ॥ १७ ॥
तत: शिष्योत्तमा: केचिद्योहनस्यानुवर्त्तिन: ।
योशो: सन्निधिमागत्य पप्रच्छुर्विनयान्विता: ॥ १८ ॥
'कथं न भवत: शिष्या: कुर्व्वन्त्यनशनं प्रभो ।
अस्माभि: क्रियते तत्तु बहुश: सफरोशिभि:' ॥ १९ ॥
श्रुत्वाथ संशयं तेषां योशुरुत्तरमब्रवीत् ।
'किं बन्धवोऽनुशोचन्ति वरेण सह संस्थिता: ॥ २० ॥
ते भवेयुर्निराहारा वरसङ्गविवर्ज्जिता: ॥ २१ ॥
जीर्णं न वसनेनापि नव वस्त्रं न सीव्यते ।
नवेऽपिच महच्छिद्रं तेन संजायते यत: ॥ २२ ॥
नवो वा वारुणीमण्डो जीर्णकूप्यां न धीयते ।
तथाकृते स्रवेन्मद्यं कूपीचापि विदीर्य्यते ॥ २३ ॥
यदि तत् सन्निधीयेत नवकूप्यां सुयत्नत: ।
न मद्यं बहिरायाति कूपीच न विदीर्य्यते' ॥ २४ ॥
इति प्रतिसमादिश्य शिष्यांस्तान् वदतां वर: ।
पुनरार्त्तान् परित्रातुमारेभे परमात्मज: ॥ २५ ॥

तस्य स्पर्शादभूत्काचित् प्रदरार्त्ता निरामया ।
समवाप पुनः प्राणानन्या मृत्युवशं गता ॥ २६ ॥
द्वावन्धौ कृपया तस्य लेभाते दृष्टिमुत्तमाम् ।
कश्चिदाजन्ममूकश्च वाक्सामर्थ्यमवाप्तवान् ॥ २७ ॥
फरीशिनस्तु तद् दृष्ट्वा दम्भमानमदान्विताः ।
मेनिरे तं महाभागं भूतराजस्य किङ्करम् ॥ २८ ॥
ततः स करुणाविष्टो दृष्ट्वा जनसमागमम् ।
मेषयूथमिव भ्रष्टं मेषपालं विना स्थितम् ॥ २९ ॥
शिष्यान् प्रोवाच धर्म्मात्मा सर्व्वभूतहिते रतः ।
इदंसारवदव्यग्रं धर्म्मार्थसहितं वचः ॥ ३० ॥
"प्राचुर्य्यमिह शस्यानामप्राचुर्य्यं तु कर्म्मिणाम् ।
चेतश्च शरणं यात स प्रहेष्यति कर्म्मठान् ॥ ३१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि नवमोऽध्यायः ।

---

## दशमोऽध्यायः ।

St. Matthew. Chapater 10: [Christ sendeth out his twelve apostles, enabling them with power to do miracles, giveth them their charge, teacheth them, comforteth them against persecutions: and promiseth a blessing to those that receive them.]

ततो योशोः समादेशात्त्यक्तसर्व्वपरिग्रहाः ।
द्वादश प्रथिताः शिष्यास्तत्समीपमुपाययुः ॥ १ ॥
शिमोन आद्यः पित्राख्यो भ्राता तस्यान्द्रियस्तथा ।
याकोबो योहनश्चैव सिबदीयसुतावुभौ ॥ २ ॥
फिलिपो बर्थलमयस्थोमा शुल्कहरोमथिः ।
आल्फेयपुत्रो याकोब स्थद्देयाख्यश्च लिब्बयः ॥ ३ ॥

शिमोन: काननीचैव यिह्रदाश्च नराधम: ।
यश्छलेन गुरुं धृत्वा रिपवे तं समार्पयत् ॥ ४ ॥
प्रेषयन् दिक्षु सर्व्वासु योशुस्तानिदमब्रवीत् ॥ ५ ॥
"युष्माभि: परिहर्त्तव्या: सर्व्वथा परजातय: ।
नगरं शमरीयाणां न गन्तव्यं कदाचन ॥ ६ ॥
इस्रायेलकुलभ्रष्टा अभिगम्या वरं जना: ।
'स्वर्गराज्यं समीपस्थ" मितिगच्छद्भिरुच्यताम् ॥ ७ ॥
व्याधिता नीरुजा: कार्य्या जीवनीया मृता नरा: ।
कुष्ठिनां शोधनं कार्य्यं भूतानां च विताड़नम् ॥ ८ ॥
मूल्यं विना यतोलब्धं ततोदेयञ्च तद्विना ।
न धार्य्यं कटिबन्धे च सुवर्णं वृत्तिकाम्यया ॥ ९ ॥
रौप्यं वा पित्तलं वापि यद्वान्यत् किञ्चिदीदृशम् ।
लभते कर्म्मणोऽङ्गानि कर्म्मकृत् कर्म्मणैव हि ॥ १० ॥
ग्रामं वा नगरं वापि प्रविश्य स्थितिहेतवे ।
साधुभि: सह वस्तव्यं गृहस्थैर्नियतात्मभि: ॥ ११ ॥
तद् गृहं चानुसर्त्तव्यं सर्व्वथा कृतमङ्गलै: ।
शान्तिर्व्विराजतां तत्र तद् योग्यं यदि वो भवेत् ॥ १२ ॥
न श्रद्दधाति योयुष्मान् न शृणोति च वो वच: ।
तद्देश: परिहर्त्तव्यो नश्वरो नरकोपम: ॥ १३ ॥
सदोमघोमराभ्यां चाधिकं दण्डं सहिष्यते ।
सदेशश्चरमे काले सत्यमेतद् ब्रवीम्यहम् ॥ १४ ॥
प्रेष्यन्ते वृकसङ्घेषु भवन्तो मेषवन्मया ।
अत: सावहितैर्भाव्यं सर्पवन्नित्यशङ्कितै: ॥ १५ ॥
कपोतैरिवलोकेषु वर्त्तितव्यममायिकै: ।
परीक्ष्या मानवा: सर्व्वे सदसद्व्यक्तिहेतुभि: ॥ १६ ॥
राजकीयाभियोगेन कशाघातप्रपीड़या ।
विधास्यन्ति महद्दु:खं युष्माकं प्राकृता जना: ॥ १७ ॥

भवतस्तेऽर्पयिष्यन्ति राज्ञो देशाधिपस्य च ।
सन्निधौ तद्विरुद्धोक्तिप्रकाशाय मदर्थतः ॥ १८ ॥
साक्ष्यं विज्ञापयद्‌भिश्च न वाच्यं कल्पितं वचः ।
ईश्वरप्रेरितं वाक्यं व्याहर्त्तव्यमतन्द्रितैः ॥ १९ ॥
स साक्षी सर्व्वभूतानां वाग्यन्त्रं व्याप्य तिष्ठति ।
स व्याहरति वाक्यानि युष्मास्वपि व्यवस्थितः ॥ २० ॥
स्वभ्रातॄणां वधार्थाय भ्राता यत्नं विधास्यति ।
पिता पुत्रं सुतस्तातं मृत्यवे चालयिष्यति ॥ २१ ॥
मदर्थं च करिष्यन्ति सर्व्वे वो गर्हणं जनाः ।
नाशमेष्यन्ति ते पापा आत्मस्थस्तु न नङ्क्ष्यति ॥ २२ ॥
भवन्तो यदि ताड्यन्ते पुरस्थैः कुत्रचित् पुरे ।
विहाय तत्पुरं शीघ्रं प्रस्थातव्यं पुरान्तरम् ॥ २३ ॥
इस्रायेलस्य सर्व्वत्र गत्वेवं क्षमया युतैः ।
समाप्तिं मयि सन्न्यस्य योक्तव्यं भूतिकर्म्मसु ॥ २४ ॥
न श्रेयान् गुरुतः शिष्यो न भृत्यः प्रभुतस्तथा ।
तयोः साम्यं वदन्त्येके पण्डिताः समदर्शिनः ॥ २५ ॥
बेल्सबूबिति शब्देन प्रभुं प्रत्याह्वयन्ति ये ।
अधिकं किं न वक्ष्यन्ति ते प्रभोराश्रिताञ्जनान् ॥ २६ ॥
तेभ्योऽतः परिपन्थिभ्यो माभूद् वो मनसो भयम् ।
यतोऽज्ञेयं तथाऽव्यक्तं न किञ्चिद्वोऽवशिष्यते ॥ २७ ॥
यदिदं परमं तत्त्वं रहसोक्तमयोच्यते ।
तद्वाच्यं स्पष्टया वाचा सर्व्वेषां हितकाम्यया ॥ २८ ॥
यद् गुह्यं कर्णयोरग्रे श्रूयते मद्वचः शुभम् ।
गृहाद्दूर्द्धमवस्थाय प्रकाशे तत् प्रकथ्यताम् ॥ २९ ॥
देहघ्नेभ्यो न भेतव्यं नात्मानं घ्नन्ति ते यतः ।
नियन्तुर्नरके देहजीवयो र्भीतिरस्तु वः ॥ ३० ॥
चटकौ द्वौ नलभ्येते किं ताम्रमुद्रयैकया ।
तयोस्तु न पतत्येक ईश्वराज्ञां विना भुवि ॥ ३१ ॥

संख्याताः सन्ति युष्माकं सर्व्वेऽपि शिरसः कचाः ।
विशिष्टे स्वर्गकेभ्यश्च भयं कस्मात् प्रपद्यताम् ॥ ३२ ॥
तस्मान्नित्यं मनुष्येषु योमामङ्गीकरिष्यति ।
तमहं स्वर्गराज्येऽपि स्वीकरिष्याम्यसंशयम् ॥ ३३ ॥
प्रत्याख्याति च यो लोके नित्यं मामभ्यसूयया ।
मयापि स्वर्गराजेऽसौ प्रत्याख्यातो भविष्यति ॥ ३४ ॥
न कश्चिन्मन्यते मत्तो लौकिकीमिह सान्त्वनाम् ।
छेत्स्याम्यसङ्गखड्गेन तामहं स्थिरमानसः ॥ ३५ ॥
पितुः पुत्त्रेण विच्छेदो मातुश्च कन्यया सह ।
श्वश्र्वा स्नुषाया विच्छेदो मत्तः समुद्भविष्यति ॥ ३६ ॥
अथवा बहु नैतेन किंज्ञातेन ममानुगाः ।
स्वजनः स्वजनद्वेषं मत्कृते कल्पयिष्यति ॥ ३७ ॥
पितरं मातरं वापि पुत्त्रं कन्यां तथैवच ।
मन्यते योऽधिकं मत्तो ममायोग्यः स मानवः ॥ ३८ ॥
गृहीत्वा स्वक्रुशं वापि त्यक्तसर्व्वपरिग्रहः ।
योमां नानुव्रजेद् भक्त्या ममायोग्यः समानवः ॥ ३९ ॥
प्राणरक्षणशीलस्य प्राणत्यागो भविष्यति ।
योक्ष्यते च पुनः प्राणैर्म्मदर्थे त्यक्तजीवितः ॥ ४० ॥
यो युष्माननुकाङ्क्षन्ति मानवाः श्रद्धयान्विताः ।
ते प्राप्नुवन्ति मामेव मम प्रियचिकीर्षवः ॥ ४१ ॥
मामुपेत्य तमोघोरं दुःखशोकभयप्रदम् ।
नाप्नुवन्ति महात्मानो गच्छन्ति प्रभवं मम ॥ ४२ ॥
आप्तव्रता नरा यान्ति सिद्धिमाप्तानुगामिनीम् ।
गच्छन्ति साधुसंसिद्धिं येच साधुव्रते रताः ॥ ४३ ॥
श्रद्धया जलमात्रेण सुदीनमपि मामकम् ।
शिष्यं यो यजते लोके स मेयुक्ततमोमतः ॥ ४४ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि दशमोऽध्यायः ।

## एकादशोऽध्याय: ॥

St. Matthew. Chapter 11 : [John sendeth his disciples to Christ. Christ's testimony concerning John. The opinion of the people, both concerning John and Christ. Christ upbraideth the unthankfulness and unrepentance of Chorazin, Bethsaida, and Capernaum : and praising his Father's wisdom in revealing the gospel to the simple, he calleth to him all such as feel the burden of their sins.]

इति प्रतिसमादिश्य शिष्यान् द्वादश तत्त्ववित् ।
उपदेशप्रदानार्थं प्रतस्थे परमात्मज: । १ ॥
तत: कारागृहे बद्ध: श्रुत्वा खोष्टकथां शुभाम् ।
योहन: प्रेषयामास द्वौ शिष्यौ योशुसन्निधौ ॥ २ ॥
तौ योशुमुपसङ्गम्य योहनप्रश्नमूचतु: ।
जगत्याविर्भवेद् यस्तु किं भवान् स परात्पर: ॥ ३ ॥
अन्यो वा भवत: कश्चित् पुनराविर्भविष्यति ।
संशयं योहनस्येमं भगवंश्छेत्तुमर्हसि ॥ ४ ॥
तयोरेतद् वच:श्रुत्वा योशुरुत्तरमब्रवीत् ।
वचनैरर्थसंयुक्तैरात्मानमुपपादयन् ॥ ५ ॥
यदिदं श्रूयते किञ्चिदपरं दृश्यते तथा ।
तत् सर्व्वं तत्त्वतो ज्ञात्वा योहनाय निवेद्यताम् ॥ ६ ॥
अचक्षुर्लभते चक्षु: खञ्जोजाति त्वरान्वित: ।
आरोग्यं लभते कुष्ठो शृणोति बधिरो वच: ॥ ७ ॥
मृतोऽपि लभते प्राणान् दीनो वेत्ति सुभाषितम् ।
धन्योऽसौ मानवो लोके मयि यो नापराध्यति ॥ ८ ॥
इत्युक्त्वा वचनं भूयो योहनं प्रतितर्कयन् ।
योशुर्मानवसंघेभ्य: प्राहेदं परमात्मज: ॥ ९ ॥
मरो: प्रान्तरमभ्येत्य युष्माभि: कोऽवलोकित: ।
वंश: किं वायुधूतोऽसौ नरो वा कोमलाम्बर: ॥ १० ॥

आसवेद् यतचित्तात्मा सत्यं श्रेयांस्ततोऽपि सः ।
समुद्दिश्येदमाख्यातं पूर्व्वैरपि महर्षिभिः ॥ ११ ॥
"उर्ज्जितो मामको दूतस्तवाग्रे प्रेष्यते मया ।
स विधास्यति संशुद्धिं गच्छतस्तत्र वर्त्तनः" ॥ १२ ॥
वस्तुतो गर्भजातानां मनुष्याणां धरातले ।
सर्व्वेषां योहनः श्रेष्ठो वीतमोहरजःस्पृहः ॥ १३ ॥
तथापीश्वरसान्निध्यात् सदा तद्भावभावितः ।
स्वर्गराज्यस्थदीनोऽपि योहनात् सम्मतोऽधिकः ॥ १४ ॥
आसा विधिव्यवस्थाश्च योहनान्ता न्निदर्शिताः ।
तस्मात् तत्कालमारभ्य विश्वस्तीशपदं जनाः ।
शास्त्रीयं विधिमुत्सृज्य प्रवृत्ताः कामचारतः ॥ १५ ॥
श्रद्धा चेन्मम वाक्ये स्यादेलियं वेत्थ योहनम् ।
तदिदं सर्व्वमाख्यातं श्रूयतां श्रोत्रवज्जनैः ॥ १६ ॥
सह कैरुपमातव्या मयैते प्राकृता जनाः ।
स्ववयस्यान् समाहूय ये वदन्त्यविवेकिनः ॥ १७ ॥
अस्माभिर्वाद्यते वेणुर्युष्माभिः किं न नृत्यते ।
अस्माभिः क्रन्द्यते वचो युष्माभिः किं न ताड्यते ॥ १८ ॥
नौदनं योहनोऽश्नाति न पानमपि सेवते ।
तथापि तद्विधैः शश्वद् भूताविष्टः स कीर्त्त्यते ॥ १८ ॥
प्रत्यहं पानमन्नं च गृह्णाति मानवात्मजः ।
स भोक्ता मद्यपो बन्धुः पापिनामिति कथ्यते ।
कामं वदन्तु ते सर्व्वे तत्त्वस्मृतिविपर्य्ययात् ।
किन्तु प्रेक्षावतां प्रज्ञा निर्द्दोषा स्वीयकर्म्मभिः ॥ २० ॥
इत्थं प्रभावसिद्धेन हितेन तस्य कर्म्मणा ।
न परावर्त्तितं येषां मनोनगरवासिनाम् ॥
भविष्यदशुभं तेषां विदित्वा परमात्मजः ।
तत्तन्नगरनामानि निर्द्दिश्येदं वचोऽब्रवीत् ॥ २१ ॥

हा कोरासिन धिक्त्वान्तु वैत्सैदे त्वां च धिक् बहु ।
यत्पापप्रवणं चित्तं युवाभ्यां न विशोधितम् ॥ २२ ॥
यन्मयालौकिकं कर्म्म साधितं युवयोः कृते ।
तेनापि युवयोरन्तःकरणं न विशोधितम् ॥ २३ ॥
अकरिष्यमहं तच्च सोरसीदनयोर्यदि ।
अभविष्यन्न स्तेषामीश्वरप्रवणं ध्रुवम् ॥ २४ ॥
युवाभ्यां यन्महद्दुःखं लप्स्यते चरमे दिने ।
सोरसीदनयो दुःखं ततो लघुतरं भवेत् ॥ २५ ॥
अरे, कफरनाहूम श्लाघनीया तवोन्नतिः ।
किं सर्व्वमवस्थैव स्वर्गं परिसमाप्यते ? ॥ २६ ॥
नैवमीश्वरनिर्द्दिष्टविधानानां व्यतिक्रमात् ।
भवेद्रसातलं यावदध्रुवं नीचा गतिस्तव ॥ २७ ॥
अकरिष्यमहं कर्म्म सदोमनगरे यदि ।
अद्य यावत्तदस्थास्यत् साधयित्वा परं शुभम् ॥ २८ ॥
यत्त्वया दारुणं दुःखं लप्स्यते चरमे दिने ।
सदोमस्य भवेद् दुःखं सहनीयतरं ततः ॥ २९ ॥
इति प्रतिसमादिश्य परिणामेऽशुभं वचः ।
तुष्टाव परमात्मानं यीशुर्वाग्भिः समाहितः ॥ ३० ॥
त्वं स्वर्गस्याधिपो धन्यो धन्य स्त्वं प्रभवो मम ।
प्रभुस्त्वं जगतो धन्यो धन्य स्त्वं परमेश्वर ॥ ३१ ॥
यदिदं परमं तत्त्वं गुह्यं तत्त्वविदामपि ।
बालेषूद्भासितं तात तत्त्वयैवानुकम्पया ॥ ३२ ॥
त्वयेदं वाञ्छितं तात ! सम्पूर्णं तत्त्वदिच्छया ।
अतस्त्वां साधुवादेन प्रपद्ये परमेश्वरम् ॥ ३३ ॥
ममोपकरणं सर्व्वं त्वया तात समर्पितम् ।
अतस्त्वां साधुवादेन प्रपद्ये परमेश्वरम् ॥ ३४ ॥
न कश्चिदपरो वेत्ति पुत्रं तत्पितरं विना ।
न वेत्ति पितरं वापि विना कश्चित्तदात्मजम् ॥ ३५ ॥

तव पुत्रप्रसादेन सर्व्वस्त्वां वेत्ति तत्त्वतः ।
अतस्त्वां साधुवादेन प्रपद्ये परमेश्वरम् ॥ २६ ॥
इत्थं परेशमाराध्य जनौघान् परिसान्त्वयन् ।
व्याजहार पुनर्व्वाक्यं कारुण्यात् करुणालयः ॥ २७ ॥
आगच्छत महाभाराः योत्रं मे परिगृह्यताम् ।
मत्प्रसादात् परां शान्तिमचिरेणाधिगच्छत ॥ २८ ॥
योत्रं मे सरलं वेत्थ लघुं भारं च मामकम् ।
अतोऽहमपनेष्यामि श्रमं वो गुरुभारजम् ॥ २९ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि एकादशोऽध्यायः ॥

---

## द्वादशोऽध्यायः ।

St. Matthew. Chapter 12. [ Christ reproveth the blindness of the Pharisees concerning the breach of the sabbath, by scriptures, by reason, and by a miracle. He healeth the man possessed that was blind and dumb. Blasphemy against the Holy Ghost shall never be forgiven. Account shall be made of idle words. He rebuketh the unfaithful, who seek after a sign : and sheweth who is his brother, sister, and mother. ]

योशुर्विश्रामवारेऽथ सशिष्यः शिष्यवत्सलः ।
प्रान्तरे स्वेच्छया भ्राम्यन् शस्यक्षेत्रेण निर्ययौ ॥ १ ॥
क्षुधार्त्तांस्तत्र तच्छिष्यान् भुञ्जानाञ् शस्यमञ्जरीः ।
दृष्ट्वा फरीशिनो वाक्यं योशुं प्रति बभाषिरे ॥ २ ॥
अविधेयं भवच्छिष्या विश्रामदिवसेऽपि च ।
प्रभो किमनुतिष्ठन्ति भुञ्जमाः शस्यमञ्जरीः ॥ ३ ॥
तेषां तद् वाक्यमाकर्ण्य योशुरुत्तरमब्रवीत् ।
भवद्भिर्विधितत्त्वज्ञैर्दायूदः स्मर्य्यते न किम् ॥ ४ ॥

धर्म्मगेहं प्रविश्यासौ सहशिष्यैर्व्वभुक्षितः ।
यस्त्वासीत् खलु भोक्तव्यः केवलं धर्म्मयाजकैः ॥
दृष्टपूपं तमादाय सशिष्यो भुक्तवान्नकिम् ॥ ५ ॥
विधिर्विश्रामवारेऽपि लङ्घ्यते याजकैर्नकिम् ॥ ६ ॥
निर्द्दोषास्ते समाख्याता भवद्भिर्यदि तादृशाः ।
मच्छिष्याः किं विनिन्द्यन्ते क्षुधार्त्ता विधिवादिभिः ॥ ७ ॥
भवतामवबोधार्थं सत्यमेतद् ब्रवीम्यहम् ।
अत्रास्ति सुमहान् कश्चिद् धर्म्मधाम्नोऽपि योऽधिकः ॥ ८ ॥
"मया द्रव्यमयाज्ज्ञाद् दयाहि बहु मन्यते" ।
एतद्वाक्यस्य तात्पर्य्यं युष्माभिर्यदि बुध्यते ॥
नहि दोषैः समालोच्या मम शिष्याःक्षुधान्विताः ।
विश्रामदिवसस्यापि यतः कर्त्ता नरात्मजः ॥ ९ ॥
तस्मात् स्थानाद् विनिर्य्याय यीशुर्धर्म्मनिकेतनम् ।
प्रविश्य दृष्टवान् कञ्चित् क्षीनहस्तं स्थितं नरम् ॥ १० ॥
तत्राभियोगमिच्छन्त स्त इदं यीशुमब्रूवन् ।
विश्रामदिवसे कार्य्यं किमारोग्यं विदांवर ॥ ११ ॥
तेषां तद्वचनं श्रुत्वा यीशुरुत्तरमब्रवीत् ।
अपि किं तद्विधः कश्चिद्विद्यते विधिवादिषु ॥
यः श्वभ्रे पतितं मेषं विश्रामदिवसे पुनः ।
नोद्धरेन्निरनुक्रोशो धर्म्मसाध्वसशङ्कितः ॥ १२ ॥
मेषात्तु मानवः श्रेयांस्तस्मान्नित्यं सुबुद्धिभिः ।
सद्युक्त्या सदनुष्ठेयं विश्रामदिवसे जनैः ॥ १३ ॥
इत्युक्त्वा व्याधितं प्राह तव हस्तं प्रसारय ।
स तथा कृतवांस्तस्य हस्तः प्राप च सुस्थताम् ॥ १४ ॥
तस्मात् स्थानादपाक्रम्य समवेताः फरीशिनः ।
बधे तस्य मतिं चक्रुरनार्य्यां क्रूरकर्म्मिणः ॥ १५ ॥
तेषां तां मन्त्रणां ज्ञात्वा यीशुः स्थानान्तरं ययौ ।
बहवो मानवा भक्त्या यान्तं तमनुवव्रजुः ॥ १६ ॥

तान् सर्व्वान् प्रकृतिं नीत्वा बभाषे परमात्मजः ।
भवद्भिर्गोपनीया स्यान्मम वार्त्ता प्रयत्नतः ॥ १७ ॥
एतेन चरितार्थेयं श्रुतिः श्रीहृद्धितैषिणी ॥ १८ ॥
"अनन्यमानसो नित्यं यो मां समुपतिष्ठते ।
यश्च मे सम्मतो नित्यं यो मे प्रियतमो मतः ॥
येन प्रीता मम प्राणाः स्यास्येऽहं यस्य चात्मनि ।
स न्याय्यवादसंवादं लोकेषु घोषयिष्यति ॥ १९ ॥
उच्चैस्तेन न वक्तव्यं कलहाद् विरतेन च ।
न चापि श्रोष्यते कश्चिच्छब्दनं तस्य वर्त्मनि ॥ २० ॥
संक्षुब्धनलभङ्गार्थं न तेन प्रयतिष्यते ।
न तेन लप्स्यते नाशं सधूमा दीपवर्त्तिका ॥ २१ ॥
आजयात् सत्यवादस्य नास्ति तस्य निवर्त्तनम् ।
प्रत्याशा परजातीनां यस्य नाम्नि भविष्यति" ॥ २२ ॥
अथान्धो बधिरश्चापि कश्चिद्भूतार्द्दितो नरः ।
तेन प्रकृतिमापन्नो विचचार जनान्तिके ॥ २३ ॥
अद्भुतं कर्म्म तद्दृष्ट्वा यीशोरन्यैः सुदुष्करम् ।
दायूदस्य सुतोऽयं किमित्याहुर्विस्मिता जनाः ॥ २४ ॥
तेषां तद्वचनं श्रुत्वा तन्नेत्याहुः फरोशिनः ।
भूतो निःसार्य्यतेऽनेन भूताधीशप्रसादतः ॥ २५ ॥
तेषां तद्वचनं श्रुत्वा यीशुरुत्तरमब्रवीत् ।
वचनैर्हेतुसंयुक्तैरुपपत्तिं प्रदर्शयन् ॥ २६ ॥
स्वविरुद्धानि राज्यानि नगराणि गृहाणि च ।
समृद्धान्यपि नश्यन्ति सत्यमेतद्ब्रवीम्यहम् ॥ २७ ॥
भूतानामधिपो भूतान् यदि निःसारयेद् बलात् ।
संस्थास्यते कथं नाम राज्यं भूताधिपस्य तत् ॥ २८ ॥
मन्यध्वे यदि वा यूयं मां भूताधिपकिङ्करम् ।
निःसार्य्यन्ते कथं नाम ते भूता भवतां सुतैः ॥ २९ ॥

यदीश्वरप्रसादेन भूतो निःसार्य्यते मया।
तर्हि वैत्येश्वसाम्राज्यं भवदन्तिकमागतम् ॥ ३० ॥
न बद्धादौ सुदुर्द्धर्षं बलवन्तं गृहाधिपम्।
कथं तद्गृहवस्तूनां सम्भवेन्नाम लुण्ठनम् ॥ ३१ ॥
यो मया सह नान्वेति स मां द्वेष्टि निरन्तरम्।
न चिनोति मया यस्तु स तत् सर्व्वमपास्यति ॥ ३२ ॥
ब्रवीमि पुनरेवाहमेतस्मादेव कारणात्।
क्षमास्ति सर्व्वकालेषु जनानां पापनिन्दयोः ॥ ३३ ॥
भवेन्मानवपुत्रस्य निन्दाया अपि निष्कृतिः।
पवित्रात्मद्विषां लोके नास्तीहामुत्र च क्षमा ॥ ३४ ॥
उत्तमस्य तु वृक्षस्य फलं वाच्यं सदोत्तमम्।
अधमस्य तु वृक्षस्य फलं वाच्यं सदाधमम् ॥ ३५ ॥
वृक्षस्य सदसद्भावः फलेन परिचीयते।
कथं सर्पसमा यूयं सत्कथां वक्तुमिच्छथ ॥ ३६ ॥
निःसारयन्ति सद्भावान् सन्तः सद्धृदयात् सदा।
निःसारयन्त्यसद्भावानसन्तश्चासतो हृदः ॥ ३७ ॥
कथयन्ति नरा ये च लोके वाक्यमनर्थकम्।
दण्ड्यास्ते चरमे काले सत्यमेतद् ब्रवीम्यहम् ॥ ३८ ॥
अदोषं वाक्यमुक्त्वा च न दोषेणावलिप्यते।
सदोषं वाक्यमुक्त्वा च दोषेणैवानुबध्यते ॥ ३९ ॥
ततस्तमब्रुवन् केचित् सोपाध्यायाः फरीशिनः।
युष्मद्रूपमभिज्ञानं कृपयास्मान् प्रदर्शय ॥ ४० ॥
सोऽब्रवीत् प्रार्थ्यते चिह्नं जनैर्निन्दितवृत्तिभिः।
दास्यते नाधिकं तेभ्यश्चिह्नं योनाहलक्षणात् ॥ ४१ ॥
यथा तस्थौ स योनाहस्त्रिदिनञ्च त्रिरात्रकम्।
उदरे तिमिमत्स्यस्य तथायं मानवात्मजः ॥
त्रिरात्रं त्रिदिनंचैव भूगर्भस्थो भविष्यति ॥ ४२ ॥

उपदेशं शुभं प्राप्य योनाह्वात्तत्त्वदर्शिनः ।
लेभिरे मनसः शुद्धिं नीनवीयाः सुबुद्धयः ॥ ४३ ॥
त एतान् दूषयिष्यन्ति जनान् दुष्कृतकारिणः ।
सद्भिस्चरमे काले विचारात् पुनरुत्थिता ॥ ४४ ॥
'योनाह्वादपि तं वेत्थ श्रेयांसं योऽत्र तिष्ठति ॥ ४५ ॥
राज्ञी दक्षिणदेशस्य धराप्रान्तादुपागता ।
शलोम्नः श्रेयसीं विद्यां जग्राह धर्मचारिणी ॥ ४६ ॥
सापीतैःश्चरमे काले विचारात् पुनरुत्थिता ।
दूषयिष्यति पापिष्ठाञ्जनानेतान्नराधमान् ॥ ४७ ॥
शलोम्नोऽपि ध्रुवं वेत्थ श्रेयांसं योऽत्र तिष्ठति ॥ ४८ ॥
नरदेहाद्विनिर्याति यदात्मा तमसावृतः ।
विशुष्कं देशमासाद्य भ्राम्यत्येष क्रमान्वितः ॥ ४९ ॥
विश्रान्तिं याचमानोऽपि लभते स न निर्वृतिम् ।
तदासौ पुनरागत्याश्रयते त्यक्तमन्दिरम् ॥ ५० ॥
तत्रापि मार्ज्जितं शून्यं शोभितं चानुपश्यति ॥ ५१ ॥
पुनः सोऽथ समानीय सप्त जीवान् सुदुष्कृतान् ।
वसति स्वयमाविश्य गृहे तस्मिन् पुरातने ॥ ५२ ॥
तेनासौ लभते दुःखं पूर्व्वस्मादपि दुःसहम् ।
एतेऽपि तादृशं दुःखं प्राप्स्यन्ति पापबुद्धयः ॥ ५३ ॥
तस्मिन्नेव ततः काले कश्चित्तमिदमब्रवीत् ॥ ५४ ॥
त्वदीयैर्भ्रातृभिः सार्द्धं तव माता यशस्विनी ॥
वक्तुकामा त्वया सार्द्धं गुरो द्वारेऽवतिष्ठते ॥ ५५ ॥
सोऽब्रवीत्मम का माता के वा ते भ्रातरो मम ।
ममैताः मातरः शिष्या भ्रातरश्च मम प्रियाः ॥ ५६ ॥
यो ममाज्ञमनादिंच तातं समनुतिष्ठति ।
स एव जननी भ्राता भगिनीच मम प्रिया ॥ ५७ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः।

St. Matthew. Chapter 13. [ The parable of the sower and the seed : the exposition of it. The parable of the tares, of the mustard seed, of the leaven, of the hidden treasure, of the pearl, of the drawnet cast into the sea, and how Christ is contemned of his own countrymen. ]

पुनस्तद्दिवसे ख्रीष्टं सागरानूपसंस्थितम्।
द्रष्टुकामा जनाः केचित् समाजग्मुस्तदन्तिकम्॥ १॥
ततो नावं समारुह्य यीशुस्तत्रोपविष्टवान्।
दृष्टान्तमधुरं वाक्यमब्रवीच्च तीरस्थितान्॥ २॥
प्रयाति कृषके क्षेत्रे शस्यबीजानि रोपितुम्।
पतितानि पथः पार्श्वे तेषु बीजेषु कानिचित्॥ ३॥
भक्षिताणि ततस्तानि पक्षिसङ्घैरुपागतैः।
अश्ममय्यां पुनस्तेभ्यः कानिचित्प्रपतन् भुवि॥ ४॥
विशुष्कानि रवे र्भाभिस्तानि जाताङ्कुराण्यपि।
मूलाल्पत्वान्मृदोऽल्पत्वाज्जलाभावतयापिच॥ ५॥
पतित्वा कण्टकाकीर्णभूमौ बीजानि कानिचित्।
बभूवुरवसन्नाणि वृक्षकण्टकबाधया॥ ६॥
सुभूमौ पुनरन्यानि पतितानि विभागशः।
सहकारिबलात् फेलुः शतशोऽथ सहस्रशः॥ ७॥
शिष्यास्तद्वचनं श्रुत्वा तमिदं वाक्यमब्रुवन्।
एभ्यो दृष्टान्तवाक्येन गुरो किमनुभाषसे॥ ८॥
सोऽब्रवीत् परमं तत्त्वं युष्मभ्यं प्रोक्तवानहम्।
नैतेभ्यो वक्तुमिच्छामि तत्तत्त्वं परमव्ययम्॥ ९॥
येषामीशे परा भक्तिर्वाच्यं तेभ्योऽभिवृद्धये।
अभक्तेभ्यो न वक्तव्यं ग्राह्यं तदपि चास्ति यत्॥ १०॥
यत्ते नंश्रूयते श्रुत्वा दृष्ट्वापिच न दृश्यते।
न किञ्चिद् बुद्ध्यते चापि यथा व्याहरति श्रुतिः॥ ११॥

"दृष्टश्रुतानुभूतार्थान्न स्वीकुर्व्वन्ति ते जनाः ।
अशुद्धहृदयाह्येते प्रत्यग्बोधविवर्ज्जिताः" ॥ १२ ॥
चक्षुःश्रोत्रं च वो धन्यं यत् पश्यति शृणोतिच ॥ १३ ।
यद् यूयं नियतात्मानः सद्दृश्यं परिपश्यथ ।
काङ्क्षन्तोऽपि न पश्यन्ति तदात्मा धार्म्मिकास्तथा ॥ १४ ॥
श्रूयते चापि यत्तत्त्वं युष्माभिर्म्मम सम्मतैः ।
न शृन्वन्तोहमानाश्च तत्तत्त्वं ज्ञानिनोजनाः ॥ १५ ॥
तस्मात् कृषकदृष्टान्तं भूयोऽपि श्रोतुमर्हथ ॥ १६ ॥
यः स्वर्गस्य कथां श्रुत्वा तत्त्वतो नावबुध्यते ।
श्रुतार्थं हरते तस्मात् पापात्मा कश्चिदागतः ॥ १७ ॥
संमूढोऽयं पथः पार्श्वे भूविं यः पतितोऽभवत् ॥ १८ ॥
यः श्रुत्वा परमं तत्त्वं दुःखैः समवसीदति ॥
स्वल्पमृत्प्रस्तरप्राप्तवीजतुल्यः स मानवः ॥ १९ ॥
योबुद्ध्वा परमं तत्त्वं संसारमनुधावति ।
यततेच न संसिद्धो मायाकण्टकबाधितः ॥
कण्टकक्षेत्रसम्भूतवृक्षकण्टकनिर्ज्जितं ।
वीजं यथा तथा ज्ञेयः स नरो निर्गुणो यतः ॥ २० ॥
श्रवणे मननेचैव मतिर्यस्य न हीयते ।
सत्यवाक् सत्यसङ्कल्पः स मे युक्ततमो मतः ॥ २१ ॥
एवं विधेन केनापि भूयः स्वरूपमीयते ।
क्षेत्रे गोधूमवीजानि येनोप्तानि सुयुक्तितः ॥ २२ ॥
ततस्तत्क्षेत्रपालाश्च सर्व्वे निद्रामुपागताः ।
तत्र श्यामाकवीजानि तच्छत्रुरुप्तवान् पुनः ॥ २३ ॥
फलितेष्वथ वृक्षेषु श्यामाका व्यक्तिमागताः ।
तद्दृष्ट्वा क्षेत्रपालाश्च ग्रस्थाधिपमुपागताः ॥ २४ ॥
विस्मिताः पृष्टवन्तश्च श्यामाकोत्पत्तिकारणम् ।
"वैरिभिः कार्य्यमेतत् स्या"दिदं तेभ्योऽब्रवीत् प्रभुः ॥ २५ ॥

ते तं चावेदयामासुः श्यामाकप्रतिसंग्रहम् ।
सच तान् वारयित्वाह युक्तियुक्तमिदं वचः ॥ २६ ॥
गोधूमानुप्रविष्टानां श्यामाकानां समुद्धृतौ ।
कथंचित्ते विपद्येरन् गोधूमाः समकालजाः ॥ २७ ॥
लभेतां तावुभौ वृद्धिं तस्मादाच्छेदकालतः ।
छेदकेभ्यः प्रवक्ष्यामि यथाकालमिदं वचः ॥ २८ ॥
श्यामाकानां तृणान्यादौ संगृह्य दहनाय भोः ।
कुशूले मम गोधूमाः स्थापनीयाः प्रयत्नतः ॥ २९ ॥
पुनःसर्षपबीजेन स्वाराज्यमुपमीयते ।
यदुप्तं परमं सूक्ष्मं कालं प्राप्य विवर्द्धते ॥ ३० ॥
शाखां यस्य समाश्रित्य परिश्रान्ताः पतत्रिणः ।
संप्राप्य महतीं छायां विश्राम्यन्ति यथासुखम् ॥ ३१ ॥
सुराबीजेन भूयोऽपि स्वाराज्यमुपमीयते ।
यत्तु गोधूमचूर्णानां द्रोणत्रये निधापितम् ॥
सर्व्वाणि तानि चूर्णाणि येन मादकतां दधुः ॥ ३२ ॥
सर्व्वमेतत्तथा प्रोक्तं यीशुना तत्त्वदर्शिना ।
आप्तप्रोक्तमिदं वाक्यं यथा संसिद्धिमागतम् ॥ ३३ ॥
"जगदुत्पत्तितोऽव्यक्ताः समस्ता वस्तुजातयः ।
मया व्यक्तिमवाप्स्यन्ति दृष्टान्तप्रतिसंस्कृताः" ॥ ३४ ॥
समवेतान् विसृज्याथ मानवान् पुरतः स्थितान् ।
प्रविवेश शुभागारं यीशुः शिष्यैः समन्वितः ॥ ३५ ॥
उवाच च पुनः पृष्टः शिष्यैरन्तिकमागतैः ।
गुह्यं श्यामाकदृष्टान्तं वाक्यैरेभिः सुभाषितैः ॥ ३६ ॥
श्रेष्ठगोधूमबीजानां वापको मानवात्मजः ।
क्षेत्रं वसुन्धरा वत्साः सुबीजानीशतत्पराः । ३७ ॥
शत्रुं वेत्थ दुरात्मानं श्यामाकबीजवापकम् ।
श्यामाकाश्च सुतास्तस्य निरीशस्य दुरात्मनः ॥ ३८ ॥

युगान्तच्छेदकाल:स्यात् स्वर्दूताश्छेदका मता: ।
श्यामाकानां यथा दाहस्तथास्य जगतीलय: ॥ ३८ ॥
प्रेरिता नरपुत्रेण स्वर्दूता: स्वर्गबाधकान् ।
विषयान् धर्म्मबाह्यांश्च क्षेप्स्यन्ति ज्वलने ध्रुवम् ॥ ४० ॥
रोदनं दन्तघर्षश्च तेषां तत्र भविष्यति ।
भास्यन्ति धार्म्मिका: स्वर्गे दीप्तसूर्य्या इव स्थिता: ॥ ४१ ॥
भूगर्भस्थधनैस्तुल्यं स्वाराज्यं पुनरुच्यते ।
दृष्ट्वादौ तानि संगोप्य हर्षात् कश्चिज्जनो यथा ।
पश्चाद् विक्रीय सर्व्वस्वं क्रीतवांस्तद्धनाश्रयम् ॥ ४२ ॥
केनचिद्वणिजा तुल्य: पुन: स्वर्गो मयोच्यते ।
यस्त्वन्विष्योत्तमा मुक्ता प्राप्यचैकामनुत्तमाम ।
विक्रीय सम्पदं सर्व्वां तामेव क्रीतवाञ् शुभाम् ॥ ४३ ॥
सर्व्वग्राहकजालेन तुल्य: स्वर्गो मयोच्यते ।
यत् क्षिप्वा जालिका धृत्वा मत्स्यानुदधिजान् बहून् ॥
उत्तमान् जगृहुस्तेभ्यो मन्दांश्च परितत्यजु: ॥ ४४ ॥
युक्तिमेतां पुरस्कृत्यागत्य दूता युगात्यये ।
जनान् पृथक करिष्यन्ति धार्म्मिकेभ्यो दुरात्मन: ॥ ४५ ॥
ततस्तान् ज्वलिते वह्नौ क्षेप्स्यन्ति पापिनो जनान् ।
विक्रोशो दन्तघर्षश्च तेषां तत्र भवेद्ध्रुवम् ॥ ४६ ॥
कच्चिदेतत्कृतं सर्व्वं भवद्भिर्भावितात्मभि: ।
तेऽब्रुवन्नु तमेवैतत् सर्व्वं तवानुकम्पया ॥ ४७ ॥
सोऽब्रवीदीदृशा तुल्यो गृहस्थेनेश्वतत्त्ववित् ।
गृहवस्तूनि यो विङ्क्ते जीर्णानि नूतनानिच ॥ ४८ ॥
इति दृष्टान्तवाक्यानि समाप्य यीशुरात्मवान् ।
तस्माद्देशादपाक्रम्य स्वदेशं पुनरागत: ॥ ४९ ॥
तत्र धर्म्मगृहं गत्वा तत्त्वज्ञानमुपादिशत् ।
यज्ज्ञात्वा विस्मितास्तस्थु: सर्व्वे तद्देशवासिन: ॥ ५० ॥

ततस्ते तर्कयामासु र्वाग्भिराभि र्जगत्प्रभुम् ।
कुतोऽयं लब्धवान् ज्ञानं सहकार्य्यैरलौकिकैः ॥ ५१ ॥
किं नायं सौत्रधारिः स योशुर्म्मरियमात्मजः ।
किमेते भ्रातरोनास्य याकोबयोहनादयः ॥ ५२ ॥
भगिन्यश्च किमेतस्य ग्रामेऽस्मिन्नेव संस्थिताः ।
तर्ह्येष्टैष्टग्रीं कुतो बुद्धिमात्मवानयमात्मवान् ॥ ५३ ॥
इति तेषां वचः श्रुत्वा योशुरुत्तरमब्रवीत् ।
स्वदेशात् स्वकुलाच्चैव वहिरात्तः प्रपूज्यते ॥ ५४ ॥
अश्रद्धामश्च विज्ञाय तेषां तज्ग्रामवासिनाम् ।
तत्र नालौकिकं किञ्चित् कृतवान् परमात्मजः ॥ ५५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि त्रयोदशोऽध्यायः ॥

---

## चतुर्द्दशोऽध्यायः ।

St. Matthew. Chapter 14. [Herod's opinion of Christ. Wherefore John Baptist was beheaded. Jesus departeth into a desert place: where he feedeth five thousand men with five loaves and two fishes: he walketh on the sea to his disciples: and landing at Gennesaret, healeth the sick by the touch of the hem of his garment.]

चतुर्थांशाधिपो राजा योशोहूत्तमलौकिकम् ।
हेरोदोऽथ समाकर्ण्य स्वभृत्यानिदमब्रवीत् ॥ १ ॥
योहनः स्नापकश्रेष्ठः स एवायं समुत्थितः ।
अद्भूतं कर्म्म कुर्व्वन्ति स्थिता यत्र पराक्रमाः ॥ २ ॥
योहनस्य बधे हेतुरेष हेरोद उच्यते ।
अनिच्छन्नपि यो मोहात् स्त्रीबुद्ध्या विनियोजितः ॥ ३ ॥

हेरोदियाभिधानाया भार्य्यायाः भ्रातुरात्मनः ।
अविधेयं पतित्वं स्यादिति तं योहनोऽब्रवीत् ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा हेरोद आत्मनोऽप्रियम् ।
इच्छन्नपि बधं तस्य नानुमेने नराधिपः ॥ ५ ॥
तमाप्तमामनन्तिस्म यतः सर्व्वे मनस्विनः ।
राजधर्म्ममनुस्मृत्य राज्ञोऽभून्मनसो भयम् ॥ ६ ॥
तस्मात् कारागृहे तस्य बन्धनं नृप आदिशत् ।
हेरोदियातु संक्रुध्य जगर्द्ध तस्य घातनम् ॥ ७ ॥
अथ जन्मदिने राज्ञः सुता तस्या यशस्विनी ।
नृत्यन्ती सदसो मध्ये नराधिपमतोषयत् ॥ ८ ॥
तेनातिप्रीतिमान् राजा तामुवाच प्रतिज्ञया ।
यथेच्छं वरमन्विच्छ नात्र कार्य्या विचारणा ॥ ९ ॥
सा मातुराज्ञया कन्या श्रुत्वा राज्ञः प्रतिश्रुतिम् ।
ययाचे शिरसश्छेदं योहनस्य तपस्विनः ॥ १० ॥
तेनातिदुःखितो राजा वरदानमनुस्मरन् ।
सभ्यानां चाशयं वीक्ष्य शिरश्छेदं समादिशत् ॥ ११ ॥
पवित्रं योहनस्याथच्छित्वा कारागृहे शिरः ।
पात्रे कृत्वा ददुस्तस्यै कन्यायै नरघातकाः ॥ १२ ॥
योहनस्य ततः शिष्या स्तत्र सर्व्वे समागताः ।
शरीरं निदधुस्तस्य शवागारे विनश्वरम् ॥ १३ ॥
एतद् योहनशिष्येभ्यो वृत्तं श्रुत्वातिदारुणम् ।
देशं प्रति ययौ कंचिन्नौकया विजनं प्रभुः ॥ १४ ॥
जनसंघास्तु तद्दृष्ट्वा नानानगरवासिनः ।
अनुजग्मुर्व्रजन्तं तं स्थलमार्गानुसारिणः ॥ १५ ॥
स ततो वहिरागत्य दृष्ट्वानुगच्छतो जनान् ।
तेषां दुःखविमुक्त्यर्थं कारुण्याद् यत्नमादधे ॥ १६ ॥
ततस्तमुपसंगम्य शिष्या वचनमब्रुवन् ।
इदं सुनिभृतं स्थानं भास्करोऽस्तमुपागतः ॥ १७ ॥

सन्ध्या समागता घोरा ग्रामं यान्त्वागता जनाः ।
क्रीणन्त्वभ्यवहार्य्याणि क्रयालयमुपागताः ॥ १८ ॥
यीशुः प्राह न गन्तव्यमितोऽन्यत्र समागतैः ।
इहैव भोजनं तेषां युष्माभिरुपकल्प्यताम् ॥ १९ ॥
मीनौ द्वौ पञ्च पूपाश्च सन्तीति तेऽब्रुवन् समम् ।
तदत्रानीयतां सर्व्वमिति तान् प्रभुरब्रवीत् ॥ २० ॥
ततस्तेषूपविष्टेषु शाद्वलेषु तदाज्ञया ।
तान् पूपान् मीनकौ तौ च गृहीत्वा परमात्मजः ॥
स्वर्गमालोकयन् धीमानूर्द्धं प्रणिहितेक्षणः ।
आशीर्व्वचनमुच्चार्य्य क्षतवांस्तांश्च खण्डशः ॥ २१ ॥
अतिथिभ्यो ददुः शिष्या स्ततस्तानाज्ञया प्रभोः ।
पञ्चातिथिसहस्राणि भुक्त्वा मुमुदिरे तदा ॥ २२ ॥
शिशूनां योषितां चैव पर्य्याप्तभोजनात् परम् ।
शिष्या द्वादश शिष्टानि डल्लकानि समादधुः ॥ २३ ॥
समाहूय ततः शिष्यान् प्रदोषे परमात्मजः ।
नावा समुद्रपारस्य गमनाय समादिशत् ॥ २४ ॥
स्वयं च नगमारुह्य प्रीतये परमात्मनः ।
आराधयितुमारेभे निर्ज्जनस्थानसंस्थितः ॥ २५ ॥
ततोदूरात् समालोक्य नावमूर्म्मिभिराहताम् ।
यीशुः समभिचक्राम प्रभुर्मध्येन सागरम् ॥ २६ ॥
रजन्याश्चरमे यामे तथा दृष्ट्वा तमागतम् ।
अपच्छायेति संचिन्त्य शिष्या भीता विचुक्रुशुः ॥ २७ ॥
"माभैषोरहमेवाय" मिति श्रुत्वा प्रभोर्व्वचः ।
पितरस्तमुपसंगम्य भीत्येदं वाक्यमब्रवीत् ॥ २८ ॥
त्वं चेत् सद्गुरुरस्माकं प्रभो संयमिनांवर ।
जलस्योपरि संचाल्य नय मां तव सन्निधिम् ॥ २९ ॥
स यीशुनाभ्यनुज्ञातः प्रव्रजन् सलिलोपरि ।
निमज्जः सलिले क्षिप्रं त्रायस्वेति वचोऽब्रवीत् ॥ ३० ॥

योशुस्तं सहसोद्धृत्य प्रोवाच परमात्मजः ।
स्वल्पश्रद्ध कथं शङ्का जाताब विपदि त्वया ॥ ३१ ॥
ततस्तौ नावमारूढौ शान्तश्च पवनो ववौ ।
ईशपुत्रस्त्वमित्युक्त्वा तं नेमुरपरे जनाः ॥ ३२ ॥
अथ सागरमुत्तीर्य्य स्थलमागमभिव्रजन् ।
योशुर्गिनेषरद्देशं ययौ शिष्यसमन्वितः ॥ ३३ ॥
तत्रत्यास्तमभिज्ञाय कथयन्तः परस्परम् ।
आनिनुर्व्याधितान् सर्व्वान् नानादिग्देशसंस्थितान् ॥ ३४ ॥
संस्पृश्य केवलं तेच योशोर्वस्त्रप्रलम्बकम् ।
श्रद्धया परयोपेताः सर्व्वे जाता निरामयाः ॥ ३५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि चतुर्द्दशोऽध्यायः ।

---

## पञ्चदशोऽध्यायः ।

St. Matthew. Chapter 15. [ Christ reproveth the scribes and Pharisees for transgressing God's commandments through their own traditions : teacheth how that which goeth into the mouth doth not defile a man. He healeth the daughter of the woman of Canaan, and other great multitudes : and with seven loaves and a few little fishes feedeth four thousand men, beside women and children. ]

यिरूशालेमवास्तव्याः सोपाध्यायाः फरोशिनः ।
योशोरन्तिकमागत्य तमिदं वाक्यमब्रुवन् ॥ १ ॥
त्वच्छिष्या विधिमुत्सृज्य किमर्थं कामचारतः ।
आहारमुपगच्छन्ति हस्तप्रक्षालनं विना ॥ २ ॥
इति तेषां वचः श्रुत्वा सानुयोगं परात्मजः ।
प्रतिवादं समाश्रित्य वाक्यमुत्तरमब्रवीत् ॥ ३ ॥

अबुद्धा विधितात्पर्य्यं विधेराभासमावृतः ।
कथं परेश्वरादेशो युष्माभिरवमन्यते ॥ ४ ॥
तनया येऽवजानन्ति पितरं मातरं तथा ।
मृत्युदण्डः समादिष्टस्तदर्थं परमात्मना ॥ ५ ॥
युष्माभिस्तूच्यते नास्ति कर्त्तव्यं पितरौ प्रति ।
पितृभ्यां कल्पितां वृत्तिमीश्वराय प्रयच्छताम् ॥ ६ ॥
ईदृक्परम्पराप्राप्तव्यवहारपरायणैः ।
महती परमेशाज्ञा भवद्भिर्लङ्घ्यते कथम् ॥ ७ ॥
भवतामवबोधार्थं मायोपहतचेतसाम् ।
यिशायाह्वोऽब्रवीद् वाक्यमिदं लोकचरित्रवित् ॥ ८ ॥
"वाक्छलैर्विदधत्येते मत्तुष्टिं छद्मचारिणः ।
मनसा मां विनिन्दन्ति दूरात् परिहरन्ति च ॥ ९ ॥
वृथा चाध्यवसायेन ध्यायन्तो मामुपासते ।
धर्म्मोपदेशभागेन लोकोक्तिमनुशासति" ॥ १० ॥
शृण्वन्तु वचनं भूयो मम सन्निधिमागताः ।
तन्नाशुद्धं नरं कुर्य्याद् याति यन्मुखगह्वरे ॥
मुखाद् यत्तु विनिर्याति तत्कुर्य्यादशुचिं नरम् ॥ ११ ॥
गुरो फरोशिनः श्रुत्वा स्खलिता वचनं तव ।
इति शिष्यवचः श्रुत्वा यीशुस्तान् पुनरब्रवीत् ॥ १२ ॥
स्वर्ग्यो मे जनको येषां स्वयं बीजानि नोप्तवान्
ध्रुवमुत्पाटयिष्यन्तो पादपास्ते न संशयः ॥ १३ ॥
अन्धाश्च तेऽत्र तिष्ठन्तु पथोऽन्धानां प्रदर्शकाः ।
अनीशास्ते पतिष्यन्ति काले श्वभ्रे सुदुस्तरे ॥ १४ ॥
इति तस्य वचः श्रुत्वा पितरस्तमिदमब्रवीत् ।
एतद्वाक्यस्य तात्पर्य्यं कृपया पुनरुच्यताम् ॥ १५ ॥
यीशुः प्राह मुखाद् याति वस्तु यज्जठरेऽशितम् ।
जाठरेणाग्निना पक्वं तद्ध्रुवं बहिरापतेत् ॥ १६ ॥

मुखाद् यत्तु विनिर्याति तद्देति हृदयादध्रुवम् ।
हृदयस्थं मन्ये नॄणां कारणं पापपुण्ययोः ॥ १७ ॥
अशौचकारणं तस्मादशुद्धं मन उच्यते ॥ १८ ॥
करप्रक्षालनात्तस्मान्न नरः शुद्धिमाप्नुयात् ।
अप्रक्षालितहस्तोऽपि मनःशुद्धा शुचिर्भवेत् ॥ १९ ॥
इत्युक्त्वा हेतुमद् वाक्यं यीशुः शिष्यसमन्वितः ।
सोरसीदनयोर्देशं जगाम परमात्मजः ॥ २० ॥
तत्र तं काचिदालोक्य कानानीयकुलोद्भवा ।
दायूदतनयेत्युक्त्वा रमणी वाक्यमब्रवीत् ॥ २१ ॥
भूतग्रस्तातिदुःखार्त्ता कन्येयं मामकी प्रभो ।
यथा शान्तिमवाप्नोति त्वं विधातुं तथार्हसि ॥ २२ ॥
तस्यास्तद् वचनं श्रुत्वा यीशुः किमपि नाब्रवीत् ।
स्वाशयं कथयामास शिष्याणामप्यनादरात् ॥ २३ ॥
इस्रायेलकुलभ्रष्टमेषेभ्योऽन्यत्र कुत्रचित् ।
न मेऽस्ति खलु कर्त्तव्यं साम्प्रतमिह किञ्चन ॥ २४ ॥
तस्य तद्वचनं श्रुत्वा रमणी प्रणताब्रवीत् ।
प्रभो त्वं मामकीं कन्यां कृपया त्रातुमर्हसि ॥ २५ ॥
स प्राह सुतभक्ष्याणि न भोक्तुं कुक्कुरोऽर्हति ।
साब्रवीत् प्रभोरुच्छिष्टं कुक्कुरोऽपि समश्नुते ॥ २६ ॥
तच्छ्रुत्वा परमोदारं वचनं यीशुरब्रवीत् ।
श्रद्धा ते महती वत्से तवेच्छा परिपूर्य्यताम् ॥ २७ ॥
यीशोरित्याशिषं लब्ध्वा कृतार्था धर्म्मचारिणी ।
प्रहर्षमतुलं लेभे वीक्ष्य कन्यां निरामयाम् ॥ २८ ॥
गालीलीयसमुद्रस्य ततस्तीरमुपागतः ।
यीशुः पर्व्वतमारुह्य प्रशान्त उपविष्टवान् ॥ २९ ॥
तस्मिन् काले समानिन्युः यीशोश्चरणसन्निधिम् ।
खञ्जान्धमूकहीनाङ्गान् बहूनन्यांश्च मानवान् ॥ ३० ॥

यीशुर्विं क्रोशतो वीच्य ताञ्जनान् समुपस्थितान् ।
परमात्मप्रभावेण चक्रे सर्व्वान्निरामयान् ॥ ३१ ॥
ततः सर्व्वान् समालोक्य खञ्जादीन् प्रकृतिं गतान् ।
इस्रायेलेश्वरं भक्त्या तुष्टुवुर्विस्मिता जनाः ॥ ३२ ॥
ततः करुणयाविष्टः समालोक्य समागतान् ।
यीशुः शिष्यान् समाहूय वक्तव्यमिदमब्रवीत् ॥ ३३ ॥
वत्सा स्त्रिदिवसं यावद्देतेऽभ्यागतमानवाः ।
मम सङ्गं नमुञ्चन्ति त्यक्तसर्व्वपरिग्रहाः ॥ ३४ ॥
तेषां न सन्ति भक्ष्याणि देहो भवति दुर्व्वलः ।
तेऽभुक्ता यदि यास्यन्ति भविष्यन्ति विमूर्च्छिताः ॥ ३५ ॥
शिष्या जगुरिदं स्थानं जनालयविवर्ज्जितम् ।
अत्र पूपाश्च दुष्प्राप्या भोक्तारो बहवो जनाः ॥ ३६ ॥
यीशुस्तानब्रवीत् पूपा मीनाश्च सन्ति वः कति ।
तेऽब्रुवन् सन्ति सप्तैव पूपा अल्पे च मत्स्यकाः ॥ ३७ ॥
अथ भूमौ समादिश्य जनानामुपवेशनम् ।
तान् पूपमत्स्यकान् हस्तेनादाय परमात्मजः ॥ ३८ ॥
आशिषा शकलीकृत्य शिष्येभ्यो दत्तवान् प्रभुः ।
शिष्याश्च भोजयामासुरातृप्तेः सकलाञ्जनान् ॥ ३९ ॥
पूपानामवशिष्टानां शकलैः सप्त पेटकान् ।
जनानां भोजनान्तेच पूरयित्वा समादधुः ॥ ४० ॥
इतरे शिशुयोषिद्भ्यः सकलाभ्यागता जनाः ।
कामं चतुःसहस्राणि भुक्त्वा जग्मुर्निजालयम् ॥ ४१ ॥
ततो नावं समारुह्य विसृज्यानुगताञ्जनान् ।
यीशुर्मग्दलसीमानं प्रतस्ते परमात्मजः ॥ ४२ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि पञ्चदशोऽध्यायः ।

## षोड़शोऽध्यायः ।

St. Matthew. Chapter 16. [ The Pharisees require a sign. Jesus warneth his disciples of the leaven of the Pharisees and Sadducees. The people's opinion of Christ, and Peter's confession of him. Jesus foresheweth his death, reproving Peter for dissuading him from it : and admonisheth those that will follow him, to bear the cross. ]

सदूकिभिः सहाभेत्य ततः केचित् फरीशिनः ।
योशुमाहुरभिज्ञानमम्बरे नः प्रदर्शय ॥ १ ॥
स प्राह वोच्य खं रक्तमनुमानपुरःसरम् ।
सुदिनं भवितेत्येव मायं युष्माभिरुच्यते ॥ २ ॥
घोररक्तं नभो दृष्ट्वा प्रभाते पुनरुच्यते ।
प्रबलो मातरिश्वाद्य लोके प्रविचरिष्यति ॥ ३ ॥
हेतुभिर्लक्षणं व्योम्नो युष्माभिरनुमीयते ।
कालस्वरूपविज्ञाने कथं विप्रतिपद्यते ॥ ४ ॥
चिह्नमाधुनिका दुष्टाः प्रार्थयन्ते परीक्षकाः ।
योनाह्वादधिकं चिह्नं तेभ्यः किञ्चिन्न दास्यते ॥ ५ ॥
इत्युक्त्वा तान् परित्यज्य परं पारमुपागतः ।
निजशिष्यान् समाहूय बभाषे परमात्मजः ॥ ६ ॥
सावधानैः सदा भाव्यमिच्छुद्भिर्हितमात्मनः ।
न सदूकिफरीशिभ्यो ग्राह्यं किण्वं कदाचन ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा तर्कयन्तः परस्परम् ।
न पूपाः सन्ति नोऽत्रेति शिष्यास्ते ममब्रुवन् ॥ ८ ॥
योशुस्तेषां मनोवृत्तिं बुद्ध्वा संशयदूषिताम् ।
सन्देहपरिहारार्थमिदं वचनमब्रवीत् ॥ ९ ॥
स्वल्पविश्वासमाश्रित्य तर्कयन्तः परस्परम् ।
अभावं भक्ष्यपूपानां विज्ञापयथ मां कथम् ॥ १० ॥
केवलं पञ्चभिः पूपैः पञ्चसाहस्रभोजनम् ।
बहुभुक्तावशेषञ्च साम्प्रतं स्मर्यते न किम् ॥ ११ ॥

तथैव सप्तभिः पूपैश्चतुःसाहस्रभोजनम् ।
बहुभुक्तावशेषञ्च मनसा किं न चिन्त्यते ॥ १२ ॥
अभिप्रायो न वाक्यस्य पूपानां विषये मम ।
मयेह कथिता तेषां किण्वस्य वर्ज्जनीयता ॥ १३ ॥
अन्यार्थग्राहकं श्रुत्वा वचनं योशुभाषितम् ।
शिष्या बुबुधिरे तेषां शिक्षाया वर्जनीयताम् ॥ १४ ॥
कैसरीयफिलिप्याख्यं देशं गत्वा ततः प्रभुः ।
शिष्यान् समीपमाहूय पृष्टवान् परमात्मजः ॥ १५ ॥
तत्त्वतो ब्रूत तत् सर्व्वं मानवाः किं वदन्ति माम् ॥ १६
तेऽब्रूवंस्त्वां वदन्त्येके स्नापकं योहनं प्रभो ।
केचिदेलियमप्याहुरापरमन्ये वदन्ति च ॥ १७ ॥
सोऽब्रवोच्छ्रोतुमिच्छामि युष्माकमवधारणम् ।
उवाच तद्वचः श्रुत्वा शिमोनः पित्र उत्तरम् ॥ १८ ॥
यमामनन्ति शास्त्राणि चेतनं परमेश्वरम् ।
तस्य पुत्रो भवान् खीष्टो ध्रुवमेषा मतिर्मम ॥ १९ ॥
तस्य तद्वचनं श्रुत्वा धन्यस्त्वमिति सोऽब्रवोत् ।
ईश्वरप्रेरितं वाक्यं यस्मात्त्वमिदमुक्तवान् ॥ २० ॥
सत्येनाहं ब्रवोमीदं तवर्कपर्यन्तबन्धकम् ।
सम्प्रदायं विधास्यामि सद्भक्तिप्रस्तरे त्वयि ॥ २१ ॥
अहं तुभ्यं प्रदास्यामि स्वर्गराज्यस्य कुञ्चिकाम् ।
जीवानां बन्धमोचौ च तवाधीनौ भविष्यतः ॥ २२ ॥
खीष्टोऽहमिति तथ्यं च गोपनोयं प्रयत्नतः ॥ २३ ॥
तदा प्रभृति शिष्येभ्यो योशुस्स्पष्टमभाषत ।
अतः परं गमिष्यामि यिरुशालेमपत्तनम् ॥ २४ ॥
महद्दुःखं प्रदास्यन्ति तत्र मे मुख्ययाजकाः ।
उपाध्याया स्तथा वृद्धा यथा मृत्युर्भवेन्मम ॥ २५ ॥
तृतीयदिवसे चैव पञ्चत्वगमनात् परम् ।
अधिष्ठाय वपुर्हि व्यमुत्थातव्यं पुनर्म्मया ॥ २६ ॥

दारुणं तस्य तद्वाक्यं श्रुत्वा पितरस्तमब्रवीत् ।
भवतैवं विधो मृत्युर्नाद्य्यति लोकगर्हितः ॥ २७ ॥
योशुस्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
मत्तोऽपसर मूढस्त्वं विघ्नोऽसि मम सिद्धये ॥ २८ ॥
यत्त्वयेशं परित्यज्य लौकिकं वस्तु चिन्त्यते ॥ २९ ॥
यदि मां मम शिष्येषु कश्चिदन्वेतुमिच्छति ।
सोऽभिमानं परित्यज्य सक्रुशोमामनुव्रजेत् ॥ ३० ॥
प्राणेषु वासना यस्य स प्राणान् परिहास्यति ।
प्राणेभ्यो न वियुज्येत मदर्थे त्यक्तजीवितः ॥ ३१ ॥
इदं कृत्स्नं जगल्लब्ध्वा प्राणेभ्यश्चेद् वियुज्यते ।
किं लब्धं तेन वा प्राणप्राप्तये किं स दास्यति । ३२ ॥
मानवात्मज एवायं यदा सर्व्वप्रतापवान् ।
स्वदूतैः सह साम्राज्यस्यासनं पितुरेष्यति ॥
तदा सर्व्वमनुष्येभ्यः स्वकर्म्मोपार्ज्जितं फलम् ।
प्रदास्यत्युपभोगाय स्वयं कर्म्मफलाधिपः ॥ ३३ ॥
सत्येनाहं ब्रवीम्यत्रतदत्र स्थितेषु केचन ।
अदृष्ट्वा न मरिष्यन्ति नरपुत्रं स्वराज्यगम् ॥ ३४ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखोष्टोपनिषदि षोड़शोऽध्यायः ॥

---

## सप्तदशोऽध्यायः ।

St. Matthew. Chapter 17. [ The transfiguration of Christ. He healeth the lunatick, foretelleth his own passion, and payeth tribute ]

अतीतेषु ततः षट्सु दिवसेषु परात्मजः ।
त्रिभिः परिवृतः शिष्यैः पितरयाकोबयोहनैः ॥ १ ॥

आरुह्य पर्व्वतैकान्तं दिव्यदेहं समाश्रितः ।
सूर्य्यप्रभमुखो भूत्वा शुभ्रवासा व्यराजत ॥ २ ॥
मोशिराविरभूत्तेषामेलियेन महात्मवान् ।
तावुभौ यीशुना सार्द्धं संवादमपि चक्रतुः ॥ ३ ॥
यीशुं पितरस्तदोवाच स्थितिःस्यादत्र नः शुभा ।
यदि त्वं मन्यसे धीमन् निर्म्मास्यत्रोटजत्रयम् ॥ ४ ॥
भवदीयं भवत्वेकं मोशेरेकं तथा विभोः ।
एलियस्य तथैकं स्यात् स्मृतिर्वस्तत्र राजताम् ॥ ५ ॥
तस्मिन्नेव ततः काले शुभ्राभ्रखण्डमेककम् ।
भेजे तांश्छायया सर्व्वान् गगने सहसोत्थितम् ॥ ६ ॥
इयमप्युत्थिता वाणी "श्रूयतामस्य भाषणम् ।
अयं मम प्रियः पुत्रः प्रीतिरस्मिन् सदा मम" ॥ ७ ॥
इति दिव्यं वचः श्रुत्वा यीशोः शिष्या भयान्विताः ।
महीमाश्रिश्रियुः सर्व्वं कृत्वाधो मुखमण्डलम् ॥ ८ ॥
यीशुः समीपमागत्य स्पृष्ट्वा तान् शिष्यसत्तमान् ।
प्रोवाचोत्तिष्ठत क्षिप्रं माभूद्वो मनसोभयम ॥ ८ ॥
ततस्तानुत्थितान् वीक्ष्य शिष्यानभयसुस्थितान् ।
नीत्वाधः पर्व्वताद्वाक्यमब्रवीत् परमात्मजः ॥ १० ॥
यदिदं दर्शनं लब्धं भवद्भिर्भावितात्मभिः ।
तद्गोप्यं सर्व्वथा यावन्नृपुत्रमरणोत्थितिम् ॥ ११ ॥
इति तस्य वचः शिष्याः श्रुत्वोचुर्व्विनयान्विताः ।
यद्येवमेलियस्यादौ वदन्ति कथमागतिम् ॥ १२ ॥
विद्वद्भिः सत्यमेवोक्तमिति तान् यीशुरब्रवीत् ।
स एव पुनरागत्य सर्व्वं स्थापितवानिह ॥ १३ ॥
महद्दुःखं समासाद्य भगवानेलियो गतः ।
तद्वन्मनुष्यपुत्रोऽपि महद्दुःखमवाप्स्यति ॥ १४ ॥
यीशोर्व्वाक्यमिदं श्रुत्वा शिष्याः स्नापकयोहनम् ।
एलियं मेनिरे सर्व्वे पृथिव्यां पुनरागतम् ॥ १५ ॥

ततो जनालयं प्राप्ते सशिष्ये परमात्मजे ।
कश्चित्तमुपसंगम्य विनीतो वाक्यमब्रवीत् ॥ १६ ॥
प्रभो मामकपुत्रोऽयमपस्मारेण पीड़ितः ।
लभतेऽतिशयं दुःखं भवांस्त्वं त्रातुमर्हति ॥ १७ ॥
सोऽवशो निपतत्यग्नौ सलिले च पुनः पुनः ।
नच लेभे सुखं किञ्चित्तव शिष्यैश्चिकित्सितः ॥ १८ ॥
यीशुर्निशम्य शिष्याणां चिकित्सायामयोग्यताम् ।
दुःखेन महताविष्टो वाक्यमुत्तरमब्रवीत् ॥ १९ ॥
कियत्कालमरे वंश ! श्रद्धाहीन ! विमार्गग ! ।
स्थास्यामि सह युष्माभिः सोढुं वः शक्तिहीनताम् ॥ २० ॥
ततः समीपमानीय व्याधितं परमात्मजः ।
तत्क्षणाद् भर्त्सयित्वैव तं चकार निरामयम् ॥ २१ ॥
ततः शिष्याः समागत्य निभृतं यीशुसन्निधिम् ।
अशक्तेः कारणं तेषां पप्रच्छुर्भूत ताड़ने ॥ २२ ॥
स प्राह स्वल्पविश्वासो युष्माकमत्र कारणम् ॥ २३ ॥
युष्माकं यदि विश्वासो जायते सर्षपोपमः ।
पर्व्वता अपि चालेरन् युष्माकं वशमागताः ॥ २४ ॥
ततः समागमात् पूर्व्वं तेषां गालीलमण्डले ।
यीशुः शिष्यान् समाहूय भाविवृत्तं समब्रवीत् ॥ २५ ॥
नरहस्ते समर्प्यंत साम्प्रतं मानवात्मजः ।
तेच तं निहनिष्यन्ति नरा दुष्कृतिकारिणः ॥ २६ ॥
तृतीये दिवसे भूयः स च मृत्योरनन्तरम् ।
उत्थास्यति शवागाराद्दिव्यदेहं समाश्रितः ॥ २७ ॥
तच्छ्रुत्वा दारुणं वाक्यमात्मापहरणोपमम् ।
बभूवुरनुगाः शिष्या दुःखेन महतान्विताः ॥ २८ ॥
यीशौ कफरणाहूमं सशिष्येऽथ समागते ।
मुद्रार्द्धग्राहिणोऽभ्येत्य पितरमूचुरिदं वचः ॥ २९ ॥

आचार्य्यो भवतां भद्र मुद्राद्वैं किं न यच्छति ।
"ददातीत्युत्तरं दत्त्वा गृहं पितुः प्रविष्टवान्" ॥ ३० ॥
तं शीघ्रमागतं दृष्ट्वा तच्च कार्य्यमुपस्थितम् ।
आदौ विज्ञाय सम्बोध्य यीशुस्तमिदमब्रवीत् ॥ ३१ ॥
केभ्यो गृह्णन्ति राजानो राजस्वं वसुधाधिपाः ।
सन्तानेभ्यः परेभ्यो वा शिमोन ब्रूहि तत्त्वतः ॥ ३२ ॥
पितुः परेभ्य इत्याह यीशुस्तमिदमुक्तवान् ।
स्वतन्त्राः खलु सन्तानाः सत्यमुक्तं त्वयानघ ॥ ३३ ॥
तथापि न भविष्यामो राजाज्ञापरिपन्थिनः ॥ ३४ ॥
अतस्त्वं त्वरया गत्वा समुद्रे वडिशं क्षिप ॥ ३५ ॥
ततः प्रथमलब्धस्य मीनस्य मुखगह्वरम् ।
उद्घाट्य लप्स्यसे मुद्रामेकां "शेकल" संज्ञिताम् ॥
तां मुद्रां संप्रयच्छ त्वममीभ्य आवयोः कृते ॥ ३६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि सप्तदशोऽध्यायः ।

---

## अष्टादशोऽध्यायः ।

St. Matthew. Chapter 18. [Christ warneth his disciples to be humble and harmless: to avoid offences, and not to despise the little ones: teacheth how we are to deal with our brethren, when they offend us: and how oft to forgive them: which he setteth forth by a parable of the king, that took account of his servants, and punished him, who shewed no mercy to his fellow.]

तस्मिन्नेव ततः काले यीशोः समीपमागताः ।
स्वर्गे वरिष्ठः कोऽस्तीति पप्रच्छुः शिष्यसत्तमाः ॥ १ ॥
स तेषां वचनं श्रुत्वा शिशुमेकं समाह्वयन् ।
संस्थाप्य पुरतस्तेषामिदं वचनमब्रवीत् ॥ २ ॥

यदि वो न भवेन्निष्ठा सत्ये शाश्वतरूपिणि ।
शिशुवन्नम्रताचैव तदा स्वर्गः सुदुर्लभः ॥ ३ ॥
अतोऽस्य बालकस्येव यस्यात्मा नम्रतां गतः ।
स हि श्रेष्ठो भवेत् स्वर्गं गतमोहरजस्तुहः ॥ ४ ॥
एतद्बालोपमं योवा शिशुमेकं मदर्थतः ।
श्रद्धया प्रतिगृह्णाति स मां गृह्णाति सर्व्वथा ॥ ५ ॥
लघिष्टं मम भक्तेषु यश्चैकमपि बाधते ।
स गले पेषणीं बद्धा निमज्जतु महार्णवे ॥ ६ ॥
अवश्यम्भाविनो बाधा धरां सन्तापयिष्यन्ति ।
धिक् तं च दुष्कृतात्मानं यस्माद्बाधा समुद्भवेत् ॥ ७ ॥
स्वकीयं हस्तपादं ते विघ्नमुत्पादयेद् यदि ।
तत्क्षणादुभयं छित्वा पापसंसर्गवर्ज्जितः ॥ ८ ॥
निक्षेपाज्ज्वलनेऽनन्ते हस्तपादान्वितस्य ते ।
विकलाङ्गस्य खञ्जस्य वरं ते शाश्वती स्थितिः । ९ ॥
इदं नेत्रद्वयं विघ्नं यदोहोत्पादयेत्तव ।
तत्क्षणादुभयं त्याज्यं नात्र कार्य्या विचारणा ॥ १० ॥
निपातान्नरकेऽनन्ते द्विनेत्रसहितस्य ते ।
अनन्तजीवनं श्रेयो वरं हीनस्य चक्षुषा ॥ ११ ॥
एतेषां क्षुद्रबालानामेकोऽपि नावमन्यताम् ।
तेषां दूता दिवोक्षन्ते नित्यमीशमुखं यतः ॥ १२ ॥
योगभ्रष्टं परित्रातुं पृथिवीमहमागतः ।
विभ्रष्टं शतमेषेभ्यः शतमेषपतिर्यथा ।
एकं नोपेक्षते मेषमेकोनशतमोहितः ॥ १३ ॥
कुरुतेचानुसन्धानं तस्य मेषस्य यत्नतः ।
लब्ध्वाचाधिकमानन्दं प्राप्नोत्यूनशतादपि ॥ १४ ॥
एकस्यापि तथैवैषां क्षोदिष्ठानां न वाञ्छति ।
विनाशमविनाशी वो जनकस्त्रिदिवस्थितः ॥ १५ ॥

अपराधं यदि भ्राता त्वां प्रतीह समाचरेत् ।
तद्दोषपरिहारार्थं वद त्वं रहसि स्थितः ॥ १६ ॥
स तोषं यदि ते कुर्य्याद् भ्रातृलाभस्त्वया कृतः ।
मध्यस्थैरन्यथा तस्य निष्पत्तौ भव यत्नवान् ॥ १७ ॥
मध्यस्थानवजानाति यद्यसौ पापमोहितः ।
सङ्घसन्निधिमाश्रित्य कुरु तस्य विनिर्णयम् ॥ १८ ॥
अपिचेत् स्यात् समाधानं सङ्घादपि सुदुर्लभम् ।
स शुल्कादायिवत्त्याज्यः परजातुरपमोऽधमः ॥ १९ ॥

युष्माभिर्य्यानि बद्धानि भविष्यन्तीह भूतले ।
स्वर्गे तानि भविष्यन्ति बद्धान्येव न संशयः ॥ २० ॥

भविष्यन्तीह मुक्तानि युष्माभिर्भुवि यानिच ।
तानि स्वर्गेऽपि मोच्यन्ते नात्र विप्रतिपत्तयः ॥ २१ ॥

द्वाभ्यामेकमतिभ्यां च प्रार्थ्यते यदि किञ्चन ।
तद्ध्रुवं लप्स्यते वस्तु परमेशनिदर्शितम् ॥ २२ ॥

यत्र द्वौ वा त्रयोवापि मदर्थं संहता जनाः ।
न तान् सदा विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम् ॥ २३ ॥
यीशुं तदोपसंगम्य पित्रो वचनमब्रवीत् ।
क्षमिष्ये कतिकृत्वोऽहं स्वभ्रातुः कर्म्म दुष्कृतम् ॥ २४ ॥
पर्य्याप्तं सप्तकृत्वः किं तन्नेति यीशुरब्रवीत् ॥ २५ ॥
सप्तसप्ततिकृत्वस्तु क्षन्तव्यमिति मे मतिः ॥ २६ ॥
अवेहि चात्र दृष्टान्तं स्वर्गराज्यसमाश्रितम् ।
उत्तमर्णो नृपः कश्चित् स्वदासानिदमादिशत् ॥ २७ ॥
मदर्थाः प्रतिदेयाः स्युरधमर्णैरशेषतः ।
दासमेकं ततो राज्ञे राजप्रेष्या न्यवेदिषुः ॥ २८ ॥
मुद्राणामयुतमृणं गृहीतं येन राजतः ॥ २९ ॥
असामर्थ्यं ततो वीक्ष्य भृत्यमाज्ञापयन्नृपः ।
भार्य्यापुत्रादिभिर्व्वस्त्रैर्मम प्राप्यं प्रदीयताम् ॥ ३० ॥

तच्छ्रुत्वा पतितो दासो विनयान्नृपपादयोः ।
कंचित्कालं महस्वेति प्रोवाच शरणागतः ॥ ३१ ॥
अहं प्रत्यर्पयिष्यामि सर्व्वमर्थं तव प्रभो ।
तच्छ्रुत्वा कृपया राजा तस्य मुक्तिं समादिशत् ॥ ३२ ॥
ततो राजकृपामुक्तः स दासो बहिरागतः ।
वीक्ष्यैकं स्वसमं दासं कण्ठं तस्य गृहीतवान् ॥ ३३ ॥
बभाषेच त्वया मेऽत्तः पञ्चविंशतिरूप्यकम् ।
गृहीतं दीयतामस्मिन् क्षणे सर्व्वमशेषतः ॥ ३४ ॥
तच्छ्रुत्वा वाक्यमस्यासौ पतितस्तस्य पादयोः ।
कंचित् कालं क्षमस्वेति प्रोवाच विनयान्वितः ॥ ३५ ॥
उत्तमर्णस्तु नेत्याह दयालेशविवर्ज्जितः ।
ऋणप्रत्यर्पणं यावत् कारायां तं बबन्ध च ॥ ३६ ॥
निर्द्दयं कर्म्म तद्दृष्ट्वा परे दासाः समागताः ।
दुःखिता प्रभवे सर्व्वं मुक्तवन्तो यथायथम् ॥ ३७ ॥
प्रभुश्च तं कृपामुक्तं दासमानीय तत्क्षणम् ।
शशंसेदमरे दुष्ट क्षमा मे स्मर्य्यते न किम् ॥ ३८ ॥
स्वोपम्यादस्य दासस्य कथं न निष्कृतिः कृता ।
इत्युक्त्वासौ प्रभुःक्रुद्धः पीड़केभ्य स्तमादिशत् ॥ ३९ ॥
उक्तिमेतां पुरस्कृत्य यूयं सर्व्वे परां क्षमाम् ।
कुरुध्वं भ्रातृदोषेषु परं सौहार्द्दमाश्रिताः ॥ ४० ॥
अथाहङ्कार माश्रित्य क्षमांचेन्न करिष्यथ ।
स्वर्ग्यो मे जनको युष्मान्न कदाचित् क्षमिष्यते ॥ ४१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि पञ्चदशोऽध्यायः ।

---

## ऊनविंशोऽध्यायः ।

.St. Matthew. Chapter 19. [Christ healeth the sick: answereth the Pharisees concerning divorcement: sheweth when marriage is necessary: receiveth little children: instructeth the young man how to attain eternal life, and how to be perfect: telleth his disciples how hard it is for a rich man to enter into the kingdom of God, and promiseth reward to those that forsake any thing to follow him.]

अथवाक्यं समाधाय सर्व्वं प्रागुक्तमर्थवित् ।
गालीलात् प्रतिप्रस्थाय यिहूदीयभुवं गतः ॥ १ ॥
तत्राप्यनुगतान् वीक्ष्य दुःखितान् परमात्मजः ।
परं मैत्रीपरो भूत्वा सर्व्वांश्चक्रे निरामयान् ॥ २ ॥
परीक्षकास्ततः केचित् पप्रच्छुस्तं फरीशिनः ।
प्रभो त्यज्येत किं भार्य्या येन केनापि हेतुना ॥ ३ ॥
सोऽब्रवीदादितः स्रष्टा सृष्ट्वा स्त्रीपुरुषान् स्वयम् ।
"स्त्रीसक्ताःसुरनरास्त्यक्त्वा पितरा"विति चादिशत् ॥ ४ ॥
अभिन्नात्मतयाचैव तयोर्नास्ति विभिन्नता ।
तस्मादिद्‌धातृसंयोगवियोगो न मयेष्यते ॥ ५ ॥
त ऊचुर्मोशिना कस्माद्भार्य्यात्यागोऽनुमोदितः ॥ ६ ॥
स प्रोवाच तदादेशः सत्त्वाशयवशानुगः ।
जगज्जन्मप्रभृत्येष त्यागो न श्रूयते यतः ॥ ७ ॥
व्यभिचारं विना भार्य्यां त्यक्त्वा योऽन्यां समुद्वहेत् ।
उद्वहेद्वा परित्यक्तां व्यभिचारी सचाधमः ॥ ८ ॥
यद्येवंविधसम्बन्धो भवेत् स्त्रीनरयोरिह ।
न कर्त्तव्यः समुद्वाह इति शिष्या बभाषिरे ॥ ९ ॥
यीशुः प्राह न गृह्णन्ति तन्मतं सकला जनाः ।
वीतरागजनाः केचिदनुतिष्ठन्ति तन्मतम् ॥ १० ॥
आजन्मनः क्लीवाः केचित् केचिच्च कृत्रिमाः क्लीवाः ।
परमेशप्रसादार्थं केचित् क्लैब्यं समाश्रिताः ।
इदं ते प्रतिगृह्णन्तु समर्था अनुशासनम् ॥ ११ ॥

ततस्तत्पुरतः केचिच्छिशवः सौम्यदर्शनाः ।
आनीतास्तत्प्रसादार्थं मासिपिच तथा विभोः ॥ १२ ॥
शिष्यास्तान् भर्त्सयामासुर्यीशुस्त्वन्तिकमानयत् ॥ १३ ॥
स पस्पर्श शिरस्तेषां स्वरैषामितिचाब्रवीत् ॥ १४ ॥
ततस्तं प्रस्थितं वीक्ष्य धृष्टवान् कश्चिदागतः ।
अनन्तजीवनं लप्स्ये केन मत्कर्मणा गुरो ॥ १५ ॥
सोऽब्रवीत् मत्कथां वत्स कथं मां परिपृच्छसि ।
सौम्य सन्नेक एवास्ति स एव परमेश्वरः ॥ १६ ॥
अनन्तजीवनं प्राप्तुं यदि त्वमभिवाञ्छसि ।
आज्ञाः सर्व्वा इमा भद्र सर्व्वथा प्रतिपालय ॥ १७ ॥
न त्वं जहि नरान् भद्र व्यभिचारं च मा कुरु ।
न कदाचित् कुरु स्तेयं मिथ्यासाक्ष्यञ्च मा वद ॥ १८ ॥
पितरौ पूजयानत्वा कुटुम्बान् पश्यचात्मवत् ॥ १९ ॥
सोऽब्रवीत् सर्व्वमेवैतत् सर्व्वथानुष्ठितं मया ।
भूयः कथय किं कर्म्म कर्त्तव्यमवशिष्यते ॥ २० ॥
यीशुस्तं प्राह सिद्धं चेदात्मानं कर्त्तुमिच्छसि ।
विक्रीय तव सर्व्वस्वं दरिद्रेभ्यः समर्पय ॥ २१ ॥
तथा कृते धनं स्वर्गे प्रभूतमर्ज्जयिष्यसि ।
त्यक्त्वाच स्वजनान् सर्व्वान् मामिकां शरणं व्रज ॥ २२ ॥
श्रुत्वेदं वचनं सर्व्वं स नरोऽतीव दुःखितः ।
धनासक्तमनास्तस्मात् स्थानात्तूर्णं विनिर्ययौ ॥ २३ ॥
ततस्तं प्रस्थितं वीक्ष्य स्वशिष्यान् यीशुरब्रवीत् ।
धनिनां दुर्लभः स्वर्गः सत्यमेतद् ब्रवीम्यहम् ॥ २४ ॥
उष्ट्राणां सूचिकारन्ध्रे प्रवेशः सुकरो वरम् ।
धनिनां दुर्लभः स्वर्गः पुनरेतद् ब्रवीम्यहम् ॥ २५ ॥
आश्चर्य्यवदिदं श्रुत्वा शिष्यास्तं पुनरब्रुवन् ।
तर्हि केषां परित्राणं भवेत्तद् ब्रूहि नः प्रभो ॥ २६ ॥

सोऽवदत्तन्मनुष्याणां दुष्प्राप्यं नात्र संशयः ।
तथापि सुलभं तत् स्यादीश्वरस्य प्रसादतः ॥ २७ ॥
श्रुत्वेदं वचनं पित्रो वाक्यमुत्तरमब्रवीत् ।
त्यजतां सर्व्वमस्माकं कागतिस्त्वद्गतात्मनाम् ॥ २८ ॥
योशुस्तानुत्तरं प्राह यूयं ये मामनुव्रताः ।
सायुज्यं मे पुनःसृष्टौ ध्रुवं तेषां भविष्यति ॥ २९ ॥
सुभोगान् स्वजनांश्चैव मदर्थे येच तत्यजुः ।
ते तच्छतगुणं प्राप्य लप्स्यन्तेऽनन्तजीवनम् ॥ ३० ॥
भोगैश्वर्य्यप्रसक्तानां येषामग्रेह संस्थितिः ।
परिणामे गतिस्तेषां भविष्यत्येव चान्तिमा । ३१ ॥
अन्तिमेह स्थितिर्येषामात्मबुद्धिप्रसादजा ।
भविष्यति गतिस्तेषां चरमे सर्व्वथोत्तमा ॥ ३२ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि ऊनविंशोऽध्यायः ॥

---

## विंशोऽध्यायः ।

St. Matthew. Chapter 20. [ Christ, by the similitude of the labourers in the vineyard, sheweth that God is debtor unto no man : foretelleth his passion : by answering the mother of Zebedee's children teacheth his disciples to be lowly : and giveth two blind men their sight. ]

भूय एव प्रवक्ष्यामि स्वर्गराज्यकथां शुभाम् ।
युष्माकं सर्व्वसन्देहो यास्यत्येव क्षयं यया ॥ १ ॥
द्राक्षाक्षेत्रपतिः कश्चित् प्रभाते वहिरागतः ।
निरूप्य दैनिकीं वृत्तिं पादमुद्रां जनं प्रति ॥ २ ॥
श्रमिकान् प्रेषयामास द्राक्षाक्षेत्रे विचारवान् ।
द्वितीयप्रहरेऽप्येवं तृतीयेऽथ चतुर्थके ॥ ३ ॥

स ततः श्रमिकाध्यक्ष्यं सन्ध्यायामिदमब्रवीत् ।
भृत्येभ्यः प्रातिलोम्येन त्वया वृत्तिः प्रदीयताम् ॥ ४ ॥
तथा कृतेऽवदन् भृत्याः सर्व्वे प्राथमिकाः जनाः ।
प्रकल्पिताः समाना नः कथं वृत्तिः सहान्तिमैः ॥ ५ ॥
येषां न कर्म्मसामान्यमस्माभिः सह भूमिप ।
तेषां नैवोचिता वृत्तिः समाना पूर्णकर्म्मभिः ॥ ६ ॥
स तेष्वन्यतमं प्राह किमन्याय्यं मया कृतम् ।
ददता स्वोकृतं मूल्यं तुभ्यं बन्धो यथायथम् ॥ ७ ॥
गृहाण तव प्राप्यार्थं प्रयाहि च निजालयम् ।
आद्यन्तमविविच्याहं कल्पयामि समं समम् ॥ ८ ॥
स्वकीयं मम यद्वस्तु स्वातन्त्र्यं तत्र मे ध्रुवम् ।
विनिन्दन् मम साधुत्वं नान्यथा कर्त्तुमर्हसि ॥ ९ ॥
स एष कथितोऽशेष आद्यन्तार्थविनिर्णयः ।
ईश्वरेच्छा स्वयं यत्र स्थिता सिद्धौ बलीयसी ॥ १० ॥
अथ द्वादशभिः शिष्यै यिरूशालेममात्मवान् ।
गन्तुकामोऽवदच्छिष्यान् पथोदं रहसि स्थितः ॥ ११ ॥
मनुष्यतनयो वत्सा अचिरात् सङ्घविद्रुतः ।
यिरूशालेममासाद्य शत्रुहस्ते पतिष्यति ॥ १२ ॥
उपाध्याया स्ततस्तस्य सह मुख्यपुरोहितैः ।
वधमाज्ञापयिष्यन्ति नृपतेरनुमोदनात् ॥ १३ ॥
ततः क्रुशे तमारोप्य कशाभिघाततर्ज्जनैः ।
प्रपीड्य चार्पयिष्यन्ति वधाय परजातये ॥ १४ ॥
स तैर्व्विनिहतः क्रूरै भूगर्भे निहितोऽपि सन् ।
उत्थास्यति पुनः प्राप्ते तृतीयदिवसे स्वयम् ॥ १५ ॥
सपुत्रा सिवदीयस्य पुत्रयोर्जननी तदा ।
प्रणता याचितुं किञ्चिद् यीशोरन्तिकमागता ॥ १६ ॥
यीशुस्तामवदत् वत्से भद्रं तेऽस्तु किमिच्छसि ।
शीघ्रं कथय कल्याणि माभूत्ते मनसोभयम् ॥ १७ ॥

साब्रवीद् यद्यनुक्रोशो मयि ते परमात्मज: ।
आज्ञाप्य कृपयैतन्मामनुकम्पितुमर्हसि ॥ १८ ॥
भवत: स्वर्गसाम्राज्ये द्वयोरात्मजयोर्मम ।
एकस्ते दक्षिणं पार्श्वं वामं चान्योऽधितिष्ठतु ॥ १९ ॥
तस्यास्तद् वचनं श्रुत्वा यीशुस्तो वाक्यमब्रवीत् ।
अनवेक्ष्यात्मसामर्थ्यं युवां किमभिवाञ्छथ: ॥ २० ॥
यत्पात्रस्थितपानीयं पातुं गच्छामि साम्प्रतम् ।
तत्पात्रस्थितपानीयं पातुं वां शक्तिरस्ति किम् ॥ २१ ॥
बाढ़मित्युक्तयो भ्रात्रो र्यीशुर्व्वचनमब्रवीत् ।
एवं स्यात्तत् पितु: कार्य्ये नास्ति काचित् कृतिर्मम ॥ २२
तयोस्तद् वचनं श्रुत्वा स्वप्रयोजनसाधकम् ।
यीशोर्दशापरे शिष्या: समं क्रोधवशं गता: ॥ २३ ॥
यीशुस्तान् सान्त्वयित्वाह यथेमे परजातय: ।
प्रभुत्वमभिवाञ्छन्ति युष्माकं तन्नशोभनम् ॥ २४ ॥
महत्वं भवतां मध्ये कश्चिद् यद्यभिकाङ्क्षति ।
स भवेन्निरहङ्कारो युष्माकं परिचारक: ॥ २५ ॥
यथा न परिचर्य्यार्थी पृथिवीमहमागत: ।
सेवार्थं त्वात्मदानेन चागत: परमुक्तये ॥ २६ ॥
तथा सर्व्वेषु कालेषु मामनुस्मृत्य सर्व्वथा ।
यूयं भवत सर्व्वेषां मुक्तये परिचारका: ॥ २७ ॥
यिरीहुतो विनिर्याय गच्छन्तं परमात्मजम् ।
बहव: पृष्ठतो जग्मुर्मानवा: श्रद्धयान्विता: ॥ २८ ॥
यीशोरुपस्थितिं श्रुत्वा द्वावन्धौ पथि संस्थितौ ।
क्रोशन्तौ समये तस्मिन्निदं वचनमूचतु: ॥ २९ ॥
प्रभो दायुदसन्तान दयस्वावामचक्षुषौ ।
तूष्णीं भवतमित्याहुस्तन्निशम्याग्रगामिन: ॥ ३० ॥
क्रोशन्तावधिकं तौतु पुनरेवेदमूचतु: ।
प्रभो दायूदसन्तान दयस्वावामचक्षुषौ ॥ ३१ ॥

योशुस्तदा स्थितस्तत्र ताविदं वाक्यमब्रवीत्।
युवयोः किं करिष्यामि किं युवामभिवाञ्छथः॥ ३२॥
तस्य तद्वचनं श्रुत्वा ताविदं पुनरूचतुः।
प्रभो दृष्टिप्रदानेन त्वमावामनुकम्पय॥ ३३॥
ततस्तयोः स नेत्राणि पस्पर्श परमात्मजः।
तेन तौ तत्क्षणं दृष्टिं लब्ध्वा तमनुजग्मतुः॥ ३४॥

इति श्रीताराचरणचक्रवर्त्तिनकं दर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि विंशोऽध्यायः।

## एकविंशोऽध्यायः।

St. Matthew. Chapter 21. [Christ rideth into Jerusalem upon an ass, driveth the buyers and sellers out of the temple, curseth the fig tree, putteth to silence the priests and elders, and rebuketh them by the similitude of the two sons, and the husbandmen, who slew such as were sent unto them.]

योशुस्ततोऽनुसंप्राप्तो यिरूशालेमसन्निधिम्।
आगतो वेत्फगोग्रामं स्थितं जैतूनपर्व्वते॥ १॥
ततोद्वावादिशच्छिष्यौ प्राप्तकालमिदं प्रभुः।
पुरोग्राममम् तूर्णं युवां यातं ममाज्ञया॥ २॥
द्रक्ष्यथो गर्द्दभीमेकां तत्र वत्ससमन्विताम्।
तामिहानयतं मुक्त्वा बन्धनाद् वत्ससंयुताम्॥ ३॥
यदि कश्चिद् वदेत् किञ्चिद् युवयोरत्र कर्म्मणि।
तं ब्रूतमनयारस्तीह प्रभोः किञ्चित् प्रयोजनम्॥ ४॥
तज्ज्ञात्वा गर्द्दभीं शीघ्रमसौ संप्रेषयिष्यति।
इदं सर्व्वं तथा वृत्तं यथाप्तैः कथितं पुरा॥ ५॥
"यूयं वदत संवादं सियोनकन्यकामिमाम्।
राजायं ते समायाति समीपं सुभगे तव॥ ६॥

त्वं भद्रे पश्य तं शुद्धं स्वभावविनयान्वितम् ।
गर्द्दभ्याः पृष्ठमारूढं गर्द्दभीशावकस्य च" ॥ ७ ॥
अथ शिष्यौ पुरो ग्रामं तौ गत्वा गुरुशासनात् ।
आनीय वत्ससंयुक्तां गर्द्दभीं गुरुवर्णिताम् ॥
स्ववस्त्राणि तयोः पृष्ठे स्थापयित्वा ततः परम् ।
श्रद्धया परयोपेतौ स्थापयामासतुः प्रभुम् ॥ ८ ॥
ततस्तं प्रस्थितं दृष्ट्वा जयशब्दैः पुनः पुनः ।
अभिनन्द्य विभोर्नाम्ना पौरास्तमनुवव्रजुः ॥ ९
यिरूशालेमवास्तव्या यिरूशालेममागतम् ।
तमाप्तमामन्त्रिस्म यीशुं नासरताभिधम् ॥ १० ॥
अथ धर्म्मगृहं तत्र प्रविश्य परमात्मजः ।
वहिश्चकार धर्म्मात्मा क्रयविक्रयकारिणः ॥ ११ ॥
कपोतवणिजांचैव क्षिप्ता पारावताश्रयान् ।
मुद्राविनिमयाधारान् न्यवज्जयामास तत्क्षणात् ॥ १२ ।
ईश्वराराधनायैव यद्गृहं केवलं स्मृतम् ।
तदद्य खलु चौराणां गुहेव प्रतिभाति मे ॥ १३ ॥
इत्येवं भर्त्सयामास यीशुर्मुख्यपुरोहितान् ।
खञ्जानन्धांश्च तत्रत्यानकरोत् सुस्थितान् प्रभुः ॥ १४ ॥
अद्भुतं कर्म्मतद्दृष्ट्वा यीशोरन्यैः सुदुष्करम् ।
आकर्ण्य जयनादांश्च बालकानां सुचेतसाम् ॥
बभूवुः कुपिताः सर्व्वे सोपाध्यायाः पुरोहिताः ।
ऊचुश्च यीशुमाहूय त्वयैतच्छ्रूयते न किम् ॥ १५ ॥
यीशुस्तानुक्तवान् "सर्व्वं श्रूयते सर्व्वथा मया ।
युष्माभिः पठितं नेदमास्मानां किं सुभाषितम् ॥ १६ ॥
"स्तोरादानां शिशूनांच मुखात्ते रचितस्तवः" ।
इत्युक्त्वा तान् परित्यज्य यीशु र्वैथनियां गतः ॥ १७ ॥
शिष्यैस्तन्नगरं प्रातर्मतिमान्नगराद्बहिः ।
रजनीं यापयामास सशिष्यः परमात्मजः ॥ १८ ॥

स गच्छन्नगरं प्रातः पार्श्वे नगरवर्त्मनः ।
ददर्शोदुम्बरं वृक्षं फलहीनं सपत्रकम् ॥ १९ ॥
क्षुधया पीड़ितस्तत्र वृक्षं तमशपत् प्रभुः ।
सततं निष्फलो वृक्ष भवत्वमितिवाचया ॥ २० ॥
अवाप शोषं वृक्षोऽसौ तत्क्षणाद्वचनात् प्रभोः ।
तद्दृष्ट्वालौकिकं कर्म्म पप्रच्छुः शिष्यसत्तमाः ॥ २१ ॥
वृक्षोऽयं शुष्कतामाप गुरो कस्मान्निमित्ततः ।
तेषां तद्वचनं श्रुत्वा यीशुरुत्तरमब्रवीत् ॥ २२ ॥
सामर्थ्ये निजवाक्यानां विश्वासो वो भवेद् यदि ।
युष्माकं शासने वत्साः स्थास्यन्ति पर्व्वता अपि ॥ २३ ॥
प्रार्थनायांच विश्वस्य कामं यं प्रार्थयिष्यथ ।
प्रसादात् परमेशस्य लोके सर्व्वमवाप्स्यथ ॥ २४ ॥
अथ धर्म्मकथां वक्तुं प्रवृत्ते परमात्मजे ।
मुख्ययाजकवृद्धाद्या स्तमाहुर्धर्म्ममन्दिरे ॥ २५ ॥
त्वयैतत् क्रियते सर्व्वं कस्मात्सामर्थ्ययोगतः ।
कुतोवैतादृशी शक्तिस्त्वया लब्धा वदेति च ॥ २६ ॥
"यूय माख्यात" स प्राह योहनस्नापनं कुतः ।
स्वर्गतोऽभ्यागतं किं तन्मनुष्याद्वा भवद्विधात् ॥ २७ ॥
तस्य तद्वचनं श्रुत्वा तेऽभवन् संशयाकुलाः ।
स्वर्गं चेदनुमन्येरंस्तस्यावज्ञा भवेद् वृथा ॥ २८ ॥
लोकं चेदनुमन्येरँल्लोकभीःस्याद् बलीयसी ।
लोके हि विविदुः सर्व्वे योहनं तत्त्वविद्वरम् ॥ २९ ॥
इत्येवं मनसि ध्यात्वा त ऊचुरात्मनोऽज्ञताम् ।
यीशु र्ज्ञात्वाशयं तेषां वाक्यमुत्तरमब्रवीत् ॥ ३० ॥
वक्तुं नाहमपीच्छामि मम शक्तिमलौकिकीम् ।
भवद्भि र्मम सामर्थ्ये का बुद्धिरवधार्य्यते ॥ ३१ ॥

किंच यः पितुरादेशं लङ्घयित्वानुशोचति ।
पश्चाद्यो प्रतिसंश्रुत्य न करोति पितुर्व्वचः ॥
अनयोः कतरः श्रेयान् भवद्भिरनुमन्यते ॥ ३२ ॥
प्रथमोऽनुमतोऽस्माभिरिति ते सममब्रुवन् ॥ ३३ ॥
यीशुः प्राह स्त्रियो दुष्टाः करसंग्राहकास्तथा ।
भवतामादितः स्वर्गं प्राविशन्ति न संशयः ॥ ३४ ॥
योहने परमा श्रद्धा तत्र कारणमुच्यते ।
सद्धि धर्म्मं समाश्रित्य पन्थानं समुपागतः ॥ ३५ ॥
तस्मिन्न दर्शिता श्रद्धा युष्माभिस्त्वभिमानिभिः ।
विहितो वानुतापश्च येन श्रद्धा पुनर्भवेत् ॥ ३६ ॥
शृणुतेमं च दृष्टान्तं भूयोज्ञानविवर्द्धनम् ॥ ३७ ॥
द्राक्षाक्षेत्रपतिः कश्चिद्द्राक्षाक्षेत्रं समन्ततः ।
आवेष्ट्य यत्नतो वृत्या द्राक्षावृक्षं समुप्तवान् ॥ ३८ ॥
कुण्डं तत्र खनित्वाच द्राक्षानिष्पेषणार्थकम् ।
मद्यानां रक्षणार्थं च गृहमुच्चं विनिर्म्ममे ॥ ३९ ॥
ततः करदरक्षिभ्यः कृषकेभ्यः समर्प्य तत् ।
क्षेत्रस्वामी जगामासौ देशान्तरमशङ्कितः ॥ ४० ॥
अथासौ फलपाकस्य समये पुनरागतः ।
स्वदासान् प्रेषयामास फलार्थं कृषकान्तिके ॥ ४१ ॥
कृषकाः करदातारो दृष्ट्वा तत्प्रेषिताञ्जनान् ।
कांश्चिज्जघ्नुः प्रजह्रुश्च कांश्चित् प्रस्तरमुष्टिभिः ॥ ४२ ॥
ततः क्षेत्रपतिर्दासान् पूर्व्वतोऽधिकसंख्यकान् ।
प्रेषयामास भूयोऽपि पूर्व्ववत्तेऽपि निर्ज्जिताः ॥ ४३ ॥
ततः स प्रेषयामास सद्बुद्ध्या पुत्रमात्मनः ।
जघ्नुस्तमपिदुर्व्वृत्ता अधिकारिणमुत्तरम् ॥ ४४ ॥
यूयं मां ब्रूत किं कुर्य्यात् स तु क्षेत्रपतिस्तदा ।
तेऽब्रुवन् ध्रुवमेवासौ कृषकांस्तान् हनिष्यति ॥ ४५ ॥

ताहशेभ्यो जनेभ्यश्च चेत्रं तदर्पयिष्यति।
समये ये प्रदास्यन्ति तत्प्राप्यं चेत्रजं फलम् ॥ ४६ ॥
तेषां तद्वचनं श्रुत्वा योशुरुत्तरमब्रवीत्।
यदत्र लिखितं शास्त्रे मत्तस्तच्छ्रूयतां पुनः ॥ ४७ ॥
"प्रस्तरोऽवज्ञया यस्तु शिल्पिभिर्संवैरुपेक्षितः।
स एव गृहकोणेऽभूद् गृहस्य मुख्यकुड्यकम् ॥ ४८ ॥
स्वयमेषा परेशस्य सर्व्वशक्तिमतः कृतिः।
वयं यामनुपश्याम आश्चर्य्यमिवचापरम्" ॥ ४९ ॥
मयातः कथ्यते सत्यं प्रबलं राज्यमैश्वरम्।
गृहीत्वैव भवद्भ्योऽन्यसुजात्यै संप्रदास्यते ॥ ५० ॥
भविष्यति ससम्भग्नो ग्रावण्यस्मिन् यः पतिष्यति।
चूर्णयिष्यति तं ग्रावा यन्मूर्ध्नेष पतिष्यति ॥ ५१ ॥
उदाहरणमेतत्तानुद्दिश्य योशुरुक्तवान्।
इत्यभिज्ञाय तं धर्त्तुमैच्छन्नध्यापकादयः ॥ ५२ ॥
किन्तु तत् समये वीक्ष्य तं जनैः परिवेष्टितम्।
बभूवुर्व्विरताः सर्व्वे भीता लोकापवादतः ॥ ५३ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि एकविंशोऽध्यायः।

---

## द्वाविंशोऽध्यायः

St. Matthew. Chapter 22. [The parable of the marriage of the King's son. The vocation of the Gentiles. The punishment of him that wanted the wedding garment. Tribute ought to be paid to Cæsar. Christ confuteth the Sadducees for the resurrection : answereth the lawyer, which is the first and great commandment : and poseth the Pharisees about the Messias. ]

स्वर्गराज्यं समाश्रित्य भूयोऽपि परमात्मजः।
दृष्टान्तवचनं तेभ्यो व्याजहार विदां वरः ॥ १ ॥

एवं विधेन राज्ञेदं स्वाराज्यमुपमीयते।
कृतवान् यः सुतोद्वाहे भोजनायोजनं महत्॥ २॥
आह्वानाय स भोक्तृणां ततोराजा विधानवित्।
कुशलान् प्रेषयामास स्वदासान् विनयान्वितान्॥ ३॥
अनागतांस्ततोदृष्ट्वा जनान् राजा निमन्त्रितान्।
भूयोऽपि प्रेषयामास दासान्नयविशारदान्॥ ४॥
तानपि प्रेषितान् सर्व्वं समुपेत्य निमन्त्रिताः।
गताः केचित् स्वकार्य्यार्थं निजघ्नुरपरेच तान्॥ ५॥
अथासौ नृपतिः क्रुद्धः प्रहित्य निजवाहिनीम्।
विनाश्य घातकान् सर्व्वान् पुरीं तेषामदाहयत्॥ ६॥
अथ दासान् समाहूय नृपतिर्व्वाक्यमब्रवीत्।
सर्व्वं वैवाहिकं भोज्यं सुनिष्पन्नं यथायथम्॥ ७॥
नहि सम्मानयोग्यास्ते पूर्व्वं आमन्त्रिता जनाः।
तस्माद् गच्छत मद्वाक्याद् राजमार्गं चतुस्पथम्॥ ८॥
राजमार्गगतान् सर्व्वानिहानयत मानवान्।
अभुक्तथाकृते पूर्णं राजमार्गं चतुष्पथम्॥ ९॥
ततोराजा समागत्य द्रष्टुमभ्यागताञ्जनान्।
ददर्शैकं नरं तत्र विवाहवेशवर्ज्जितम्॥ १०॥
स तथाचरणी राज्ञा पृष्ठोऽपि न वचोऽब्रवीत्।
ततः स नृपतिः क्रुद्धः किङ्करेभ्यस्तमादिशत्॥ ११॥
हस्तपादं दृढं बद्ध्वा किङ्करास्तेऽतिनिष्ठुराः।
चिक्षिपुस्तिमिरे घोरे तं राज्ञोऽप्रियमागतम्॥ १२॥
आहूताः स्वर्गराज्यार्थं वस्तुतो बहवो जनाः।
भविष्यन्त्यल्प एवात्र नराः स्वर्गाधिकारिणः॥ १३॥
वाक्छलैरथ तद्दोषोद्घाटनाय फरीशिनः।
स्वशिष्यान् प्रेषयामासुर्हेरोदीयपुरस्कृतान्॥ १४॥
ते गत्वोचुः प्रशस्ताभिर्भाषाभिरभिनन्द्य तम्।
भगवन् ब्रूहि राजस्वं कैसरोऽर्हति वा नवा॥ १५॥

सोऽब्रवीन्न परीक्ष्योऽहं भवद्भिर्दुष्टमायया ॥
यस्य नामाङ्किता मुद्रा करस्तस्मै प्रदीयताम् ॥ १६ ॥
कैसीरस्य तु यत् प्राप्यं कैसोरस्तु तदर्हति।
यत् प्राप्यं परमेश्वरस्य तस्मै तद्दीयतां सदा ॥ १७ ॥
अथ सदूकिनोऽभिरुत्थापुनरुत्थानवादिनः ।
प्रदर्श्य विनयाचारौ पप्रच्छुः परमात्मजम् ॥ १८ ॥
मोशिनायं समादिष्टो नियोगविषये विधिः ॥ १९ ॥
निरपत्यमृतज्येष्ठभ्रातृपत्नीं सहोदरः ।
स्वभ्रातुर्वंशवृद्ध्यर्थं नियुञ्ज्याद्दारकर्मणि ॥ २० ॥
अस्त्यत्र संशयोऽस्माकं महांस्तत्त्वावधारणे ॥ २१ ॥
सप्तानां नोऽग्रजो भ्राता विवाहानन्तरं मृतः ।
अग्रहीद्वंशवृद्ध्यर्थं तत्स्त्रियं तस्य चानुजः ॥ २२ ॥
पूर्व्वं पूर्व्वं मृतेः पश्चादेवं ज्ञात्वा परे परे ।
निरपत्याः मृताः सर्व्वं ततोनारी ममार सा ॥ २३ ॥
कस्यैषा पुनरुत्थाने भ्रातुः पत्नी भविष्यति ।
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ २४ ॥
भवन्तो न विजानन्ति शास्त्रमीशस्य वा बलम् ।
न हि केचित् प्रकुर्व्वन्ति विवाहं पुनरुत्थिताः ॥ २५ ॥
न विवाह्या च नारी स्यात् सन्ततेरप्रयोजनात् ।
सर्व्वेऽपि चोपतिष्ठन्ते दूतवत् परमेश्वरम् ॥ २६ ॥
ईश्वरः पुनरुत्थाने सत्यमेतद्वचोऽब्रवीत् ।
"अब्राहामीश्वरं विद्धि यथा मामजमव्ययम् ।
इस्हाकस्येश्वरं विद्धि तथा मां शाश्वतं विभुम् ॥
एवमेवेश्वरं विद्धि याकोबस्यापि मां प्रभुम् ॥ २७ ॥
ईश्वरो जीवतामेव मृतानां नेश्वरो ध्रुवम् ।
एतत्तस्य वचः श्रुत्वा सर्व्वे ते विस्मयं गताः ॥ २८ ॥
पराजयमथ श्रुत्वा सदूकिनां फरीशिनः ।
बभूवुर्मिलिताः सर्व्वे परमात्मजसन्निधौ ॥ २९

तेषामेकः परीक्षार्थं पृष्टवान् परमात्मजम् ।
भगवन् महती काज्ञा व्यवस्थायां निदर्शिता ॥ ३० ॥
सोऽब्रवीत् प्रथमाज्ञेयं "स्वेश्वरं परमेश्वरम् ।
कर्म्मणा मनसा वाचा समुपासीत सर्व्वदा" ॥ ३१ ॥
इयमाज्ञा द्वितीयास्ति पूर्व्वस्याः सदृशी शुभा ।
"आत्मवत् परमं प्रेम विधेयं देशवासिषु" ॥ ३२ ॥
एतदाज्ञाद्वयं सम्यगुपजीव्य महर्षयः ।
लोके सर्व्वाणि शास्त्राणि प्रणिन्युर्मङ्गलाप्तये ॥ ३३ ॥
इत्युक्त्वा परिपप्रच्छ योशुस्तत्र फरीशिनः ।
सुतं कस्य विजानन्ति भवन्तः खीष्टसंज्ञकम् ॥ ३४ ॥
दायूदस्यात्मजः खीष्ट इति ते सममब्रुवन् ।
सोऽब्रवीत्तं प्रभुं कस्माद्दायूदो व्याहरेत् सदा ॥ ३५ ॥
दायूदस्त्वात्मभावस्थो वदतीदं वचः स्वयम् ॥ ३६
"प्रभुर्म्मम प्रभुं प्राह तिष्ठ त्वं मम दक्षिणे ।
यावन्नाहं करिष्यामि त्वत्कृतं त्वत्पदासनम् ॥ ३७ ॥
ते तस्य वचनं श्रुत्वा न प्राहुः किञ्चिदुत्तरम् ॥ ३८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि द्वाविंशोऽध्यायः ॥

---

## त्रयोविंशोऽध्यायः ।

St. Matthew. Chapter 23. [Christ admonisheth the people to follow the good doctrine, not the evil examples, of the scribes and Pharisees. His disciples must beware of their ambition. He denounceth eight woes against their hypocrisy and blindness : and prophesieth of the destruction of Jerusalem.]

अथ शिष्याञ्जनांश्चैव प्राहेदं परमात्मजः ।
भवद्भिर्नाम्नमान्याः स्युरुपाध्यायाः फरीशिनः ॥ १ ॥

मोघैः पूतासनं तेऽधितिष्ठन्ति हि बहुश्रुताः ।
आचारो नानुकर्त्तव्यः किन्तु तेषां विनिन्दितः ॥ २ ॥
संस्थापयन्ति ते भारं लोकस्कन्धे हि दुर्वहम् ।
अङ्गुल्यापि न चेष्टन्ते तद्भारस्यापसारणे ॥ ३ ॥
ते नित्यं कर्म्म कुर्व्वन्ति सत्कारमानसिद्धये ।
गुरुत्वं चाभिवाञ्छन्ति नैतद्वः सदृशं भवेत् ॥ ४ ॥
यूयं न गुरवः किन्तु भ्रातरः समबुद्धयः ।
खीष्टोवः परमाचार्य्यः पितावः परमेश्वरः ॥ ५ ॥
स युष्मासु भवेच्छ्रेष्ठो यो भवेत् परिचारकः ।
अध उच्चजनो गच्छेन्नत उन्नतिमाप्नुयात् ॥ ६ ॥
हाधिक् कपटिनो युष्मान् सोपाध्यायान् फरीशिनः ।
यस्माच्छाश्वतिकः स्वर्गो युष्माभिरवरुध्यते ॥
सुदीर्घं छलतो ध्यात्वा ग्रसित्वा विधवागृहम् ।
यूयं गुरुतरं दण्डं लप्स्यध्वे दिवसेऽन्तिमे ॥ ७ ॥
सर्व्वं शक्त्या भवद्भिस्तु योऽङ्गीक्रियते परः ।
क्रतस्त्रापि महाघोरे नरके स निपात्यते ॥ ८ ॥
हाधिक् फरीशिनो युष्मानन्धमार्गप्रदर्शकान् ।
शपथं कुर्व्वतो भिन्नं मन्दिरं तत्स्थहाटकात् ॥ ९ ॥
युष्माभिः कथ्यते दिव्यं मन्दिरस्य न दोषकृत् ।
मन्दिरस्थसुवर्णस्य दिव्यं स्याद्बन्धकं ध्रुवम् ॥ १० ॥
अरे वदत मोहान्धा अनयोः कतरन्महत् ।
सुवर्णं मन्दिरं वापि येन स्वर्णस्य पूतता ॥ ११ ॥
उच्यते यज्ञवेद्यास्तु न दिव्यं दोषकृद् भवेत् ।
यज्ञवेदीस्थद्रव्यस्य दिव्यं स्याद्बन्धकं ध्रुवम् ॥ १२ ॥
महत्त्वमधिकं कस्य मूढाः प्रवदतानयोः ।
यज्ञवेद्या बलेर्वापि बलिः पूतो भवेद् यया ॥ १३ ॥
वेद्याः शपथमात्रेण वेदीस्थशपथो यथा ।
तथा मन्दिरदिव्येन मन्दिरस्थस्य दिव्यता ॥ १४ ॥

करोति शपथं यस्तु स्वर्गस्य नर आत्मवान्।
स करोति विभोर्दिव्यं विभोः सिंहासनस्य च ॥ १५ ॥
हाधिक् कपटिनो युष्मान् सोपाध्यायान् फरीशिनः।
शस्यानां दशमं भागं राज्ञे नित्यं प्रयच्छतः ॥ १६ ॥
परित्यक्तं यतो मोहात् सत्यास्तिक्यदयादिकम्।
भवद्भिः पालनीयं यदासीदाम्नायबोधितम् ॥ १७ ॥
निष्यूयन्तेऽति यत्नेन युष्माभि र्मशका जलात्।
उष्ट्रो निगल्यते किन्तु भ्रष्टमार्गप्रदर्शकैः ॥ १८ ॥
हाधिक् कपटिनो युष्मान् सोपाध्यायान् फरीशिनः।
पानभोजनपात्राणां निरतान् वाह्यशोधने ॥ १९ ॥
अन्धैः फरीशिभि मूँढै र्बाह्याभ्यन्तरशुद्धिकृत्।
शौचमाभ्यन्तरं नित्यमनुष्ठेयं प्रयत्नतः ॥ २० ॥
हाधिक् कपटिनो युष्मान् सोपाध्यायान् फरीशिनः।
यूयं वहिःसुधालिप्तशवागारसमा यतः ॥ २१ ॥
ते च गेहा विलोक्यन्ते वहिः शुभ्रमनोहराः।
तेषामन्तस्तु सम्पूर्णमशुद्धैर्मृतकौकसैः ॥ २२ ॥
भवन्तस्तद्वदेवेह दृश्यन्ते धार्म्मिका वहिः।
अन्तस्तु भवतां पूर्णं मायाधर्म्माविशुद्धिभिः ॥ २३ ॥
हाधिक् कपटिनो युष्मान् सोपाध्यायान् फरीशिनः।
मृतात्मचैत्यपूजाभिः स्वपितॄननुशोचतः ॥ २४ ॥
एतेनैवानुतापेन महात्मवधकारिणाम्।
पापिनां खलु पुत्रत्वे यूयं ब्रूथात्मनामपि ॥ २५ ॥
हे सर्पाः कालसर्पाणामन्ववाया नराधमाः।
नभवेद् वः परित्राणं घोरान्नरकदण्डतः ॥ २६ ॥
अतो विप्रानुपाध्यायानाप्तांश्च विजितेन्द्रियान्।
अहं संप्रेषयिष्यामि युष्माकमन्तिके स्वयम् ॥ २७ ॥
क्रुशविद्धाःनिहनेरन् भवद्भिस्तेषु केचन।
कषाभिस्ताड़िताः केचित् प्रयास्यन्ति पुरात् पुरम् ॥ २८ ॥

इत्थं हननमारभ्य हेबलस्य महात्मनः ।
सखरीयवधं यावद् वेदिमन्दिरमन्तरा ॥ २९ ॥
पतिता भुवि यावन्तः सतां रक्तस्य बिन्दवः ।
तावन्मानैर्महापापैर्भवन्तः स्युः समन्विताः ॥ ३० ॥
यिरुशालेम हा भूमे यिरुशालेम हा पुरि ।
त्वयाप्ता विनिपात्यन्ते ताड्यन्ते प्रेरिता जनाः ॥ ३१ ॥
तत्पुत्रमेलने यत्नं बहुशः कृतवानहम् ।
आकर्षति निजक्रोड़े कुक्कुटी शावकान् यथा ॥ ३२ ॥
नच ते सम्मतास्तत्र पश्य ते पतितं गृहम् ।
न मां द्रक्ष्यसि तावत्त्वमिदं यावन्न भाषसे ॥
"स धन्यो यः समायाति यशंसा परमात्मनः" ॥ ३३ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः ।

St. Matthew, Chapter 24. [ Christ foretelleth the destruction of the temple : what and how great calamities shall be before it : the signs of his coming to judgment. And because that day and hour is unknown, we ought to watch like good servants, expecting every moment our master's coming. ]

धर्म्मधाम्नोऽथ निष्क्रम्य चलिते परमात्मजे ।
शिष्यास्तं दर्शयाञ्चक्रुर्धर्म्मधाम्नोविनिर्म्मितिम् ॥ १ ॥
स प्राह दृश्यते सर्व्वं युष्माभिर्यत् पुरःस्थितम् ।
अचिरेणैव तत् सर्व्वं समूलं विनशिष्यति ॥ २ ॥
ततः समुपविष्टस्य यौशोर्जैतुनपर्व्वते ।
शिष्याः समीपमागत्य रहसीदं वचोऽब्रवीत् ॥ ३ ॥

भाविनां कालमेतेषां लक्षणं तवचागतेः ।
लक्षणं प्रलयस्यापि गुरो त्वं वक्तुमर्हसि ॥ ४ ॥
सोऽब्रवीन्न भ्रमः कार्य्यो भ्रमोऽवश्यमुपैष्यति ।
धूर्त्ताः प्रतारयिष्यन्ति खीष्टोऽहमितिवादिनः ॥ ५ ॥
युद्धनाम्नो न भेतव्यं न भाव्यं व्याकुलेन च ।
यतः प्रारम्भिकं कार्य्यं सर्व्वमेतत् समासतः ॥ ६ ॥
राष्ट्रं राष्ट्रस्य जातिश्च जातेर्घोरविरोधिताम् ।
करिष्यति धराकम्पो दुर्भिक्षं च भविष्यति ॥ ७ ॥
युष्मान् समर्पयिष्यन्ति क्लेशाय मद्धते जनाः ।
मदर्थं मारयिष्यन्ति द्वेक्ष्यन्ति च मदान्विताः ॥ ८ ॥
विपन्ना मानवाःप्रायो द्वेक्ष्यन्ति च परस्परम् ।
एके समर्पयिष्यन्ति मानवानपरांस्तदा ॥ ९ ॥
अधर्म्माभिभवात् प्रेम मनुष्याणां प्रदुष्यति ।
परित्राणमवाप्स्यन्ति स्थास्यन्ति येऽचलास्तदा ॥ १० ॥
यदा प्रचारयिष्यन्ते लोके स्वर्कथाः शुभाः ।
सर्व्वेषामवबोधाय समाप्तिस्तु भवेत्तदा ॥ ११ ॥
अतो यदा महाध्वंसो दानीयेलेन वर्णितः ।
पवित्रस्थानगो भूत्वा स्थास्यत्यमितविक्रमः ॥ १२ ॥
यिहूदियास्थिताः सर्व्वे गच्छन्तु पर्व्वतं तदा ।
नाधः प्रयान्तु कार्य्यार्थं प्रासादस्योपरि स्थिताः ॥ १३ ॥
मावर्त्तन्तां स्ववस्त्रार्थं क्षेत्रस्थाः कृषका जनाः ।
अहो सुप्रतिसन्तप्ता गर्भिन्यः स्तनदाः स्त्रियः ॥ १४ ॥
शीते विश्रामवारे च न भवेद्व वः पलायनम् ।
प्रार्थयध्वमिदं वत्सा यूयमेकत्र संस्थिताः ॥ १५ ॥
जगज्जन्मन आरभ्य क्लेशो नायात ईदृशः ।
जगतः प्रलयं यावन्नवा जातु भविष्यति ॥ १६ ॥
नाभविष्यत्तदा तस्य कालस्य स्वल्पता यदि ।
नास्थास्यज्जीवितः कश्चित् समस्ते क्षितिमण्डले ॥ १७ ॥

मनोनीतजनास्तस्मिन् काले स्थास्यन्ति निश्चला: ।
तेषामेव हि रक्षार्थं क्लेशाल्पत्वं विधास्यते ॥ १८ ॥
दृष्टाङ्कूतं तदा चिह्नं युष्मान् कश्चिद् वदेद् यदि ।
ख्रोष्टोऽहमिति तद्वाक्यमश्रद्धेयं भवेद्ध्रुवम् ॥ १९ ॥
मायाविदर्शितं चिह्नं ज्ञानिनामपि मोहनम् ।
सम्भवेदतएवाहं युष्मभ्यं पूर्व्वमुक्तवान ॥ २० ॥
यदि कश्चिद्वदेत् ख्रोष्टो वहिरन्तश्च तिष्ठति ।
न तत्र प्रत्ययः कार्य्यो वाकेर मायाविभाषिते ॥ २१ ॥
दिशः प्राच्या यथोदेत्य विद्युत् सर्व्वत्र भासते ।
ध्रुवं तथैव ख्रोष्टस्य भवेदागमनं भुवि ॥ २२ ॥
गृध्रास्तत्रागमिष्यन्ति शवो यत्र हि तिष्ठति ॥ २३ ॥
तस्मिन् सुदारुणे काले विवस्वांस्तमसावृतः ।
न भास्यत्यम्बरे चन्द्रो हीनरश्मिर्भविष्यति ॥ २४ ॥
पतिष्यत्यम्बरात्तारा विकृतिं खं प्रयास्यति ।
चिह्नं मनुष्यपुत्रस्य दृश्येत गगने तदा ॥ २५ ॥
तस्मिन् विप्रकृते काले पृथिव्याः सर्व्वमानवाः ।
रक्षितारमनासाद्य विलपिष्यन्त्यनाथवत् ॥ २६ ॥
दिव्येन मेघयानेन यशोविक्रमभूषितः ।
दृश्येतावतरन् मर्त्त्यैर्मानवैर्मानवात्मजः ॥ २७ ॥
ततस्तत्प्रेरिता दूतास्तूर्य्यध्वनिपुरस्कृताः ।
स्वजनान् संग्रहीष्यन्ति नाभसानिलसंस्थितान् ॥ २८ ॥
यथोदुम्बरवृक्षस्य दृष्टाभिनवपल्लवम् ।
युष्माभि र्ज्ञायते ग्रीष्मः समायात्यचिरादिति ॥ २९ ॥
तथाभिज्ञानमालोक्य विशेषेण निदर्शितम् ।
ज्ञास्यते स्वगृहद्वारे स एवागतवानिति ॥ ३० ॥
न यावदनुतिष्ठेयुरिमाः सर्व्वाः प्रवृत्तयः ।
ब्रवीम्यवितथं तावन्नोत्सीदेयुरिमाः प्रजाः ॥ ३१ ॥

लोपो द्यावापृथिव्योश्च भविष्यत्यन्तिमे दिने ।
नलोपो मम वाक्यानां भविष्यति कदाचन ॥ ३२ ॥
तं कालं न विजानन्ति स्वदूतस्तुतमानवाः ।
पितैव सकलं वेत्ति स्वर्गीयः परमेश्वरः ॥ ३३ ॥
नोहस्य समयेऽकस्मात् सलिलप्लावनं यथा ।
अभवद् विनियुक्तेषु नरेषु निजकर्मसु ॥
तथा मनुष्यपुत्रस्य धरावतरणं भवेत् ।
केऽपि तन्न विजानीयुर्भ्रान्ताः संसारमायया ॥ ३४ ॥
तदा पुरुषयोर्मध्ये चेत्रकर्मनियुक्तयोः ।
एक एवानुगृह्येत वर्ज्जेत सर्व्वथा परः ॥ ३५ ॥
योषितोश्च द्वयोर्मध्ये पेषणेविनियुक्तयोः ।
एका गृह्येत कल्याणी परिवर्ज्येत चापरा ॥ ३६ ॥
तस्माज्जागृत सानन्दं सर्व्वं कालमतन्द्रिताः ।
यतो यूयं न जानीथ प्रभोरागमनक्षणम् ॥ ३७ ॥
यद्यास्यद् गृहकर्त्तादौ चौरस्यागमनं यदि ।
नासहिष्यत गेहस्य कुड्यभेदं कदाचन ॥ ३८ ॥
ध्रुवं मनुष्यपुत्रोऽसावकस्मादागमिष्यति ।
ससज्जा अवतिष्ठध्वं सदा तद्गतमानसाः ॥ ३९ ॥
कुर्व्वं निर्दिष्टकर्म्माणि यः प्रभुं परितोषयेत् ।
स धन्यः सेवको लोके सोऽध्यक्षस्तस्य सम्पदाम् ॥ ४० ॥
अतिपातयते यस्तु कार्य्यकालं प्रमादतः ।
अकस्मात् प्रभुरागत्य तं धृत्वा च्छेत्स्यति द्विधा ॥ ४१ ॥
सार्द्धं च मायिभिस्तस्य स भाग्यं कल्पयिष्यति ।
रोदनं दन्तघर्षश्च तस्य तत्र भविष्यतः ॥ ४२ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि चतुर्विंशोऽध्यायः ।

---

## पञ्चविंशोऽध्यायः ।

St. Matthew. Chapter 25. [The parable of the ten virgins, and of the telents. Also the description of the last judgment.]

कन्याभिर्दशभि र्भूयः स्वराज्यमुपमीयते ।
स्व स्व प्रदीपहस्ता या वरं द्रष्टुं विनिर्गताः ॥ १ ॥
तासां बुद्धियुताः पञ्च तैलमादाय निर्ययुः ।
विमूढाश्चापराः पञ्च विना तैलं वहिर्गताः ॥ २ ॥
बहुकालं प्रतीक्ष्यापि दृष्ट्वा वरमनागतम् ।
क्लान्तास्ताः कन्यकाः सर्व्वा निद्रावशमुपागताः ॥ ३ ॥
अर्द्धरात्रे ततः श्रुत्वा वरस्यागमनध्वनिम् ।
स्व स्व प्रदीपमादाय बुद्धिमत्यो विनिर्गताः ॥ ४ ॥
तस्मिन् कालेऽपराः पञ्च सङ्गिनीरिदमब्रवीत् ।
अस्माकं तैलपात्रेषु किञ्चित्तैलं प्रदीयताम् ॥ ५ ॥
तैलमानीयतां गत्वा भवतीभिः क्रयालयम् ।
यदस्ति तन्न पर्य्याप्तमिति ताः सममब्रुवन् ॥ ६ ॥
बुद्धिमत्यस्ततः पञ्च विविशुर्व्वरमन्दिरम् ।
कालात्ययेऽपराश्चापि वरस्थानमुपागताः ॥ ७ ॥
अथ रुद्धं गृहं दृष्ट्वाह्वयन्त्यस्ता गृहाधिपम् ।
गृहिणोपेक्षिता गन्तुं न शक्ता वरमन्दिरम् ॥ ८ ॥
पुरस्कृत्योपमामेतां यूयं जागृत सर्व्वदा ।
तद्दिनं तत्क्षणं चैव न जानीथ यतः स्वयम् ॥ ९ ॥
इदं च श्रूयतां कश्चित् सम्पन्नो भृत्यवत्सलः ।
धनं भृत्येषु विन्यस्य परदेशं विनिर्ययौ ॥ १० ॥
तेषामेकः स्वसामर्थ्यात् पञ्चमुद्राः प्रपेदिवान् ।
द्वे मुद्रे चापरो दासो मुद्रामेकां तथा परः ॥ ११ ॥
प्रथमः पञ्चमुद्राभिर्दशमुद्रा उपार्ज्जयत् ।
द्वितीयो द्विगुणं स्वस्य किमप्यन्यश्च नार्ज्जयत् ॥ १२ ॥

अथ प्रत्यागते तस्मिन् परदेशादेनाधिपे ।
प्रथमस्तत्परस्यैव ददतुः सर्व्वमर्ज्जितम् ॥ १३ ॥
प्रभुश्च परमप्रीतस्तयोरुत्तमपात्रताम् ।
संवीक्ष्य प्रतिशुश्राव सानन्दं बहु सम्पदम् ॥ १४ ॥
तृतीयो दास आगत्य तदेदं प्रभवेऽब्रवीत् ।
अस्यं छन्नसि तत्रैव वीजं त्वं यत्र नोप्तवान् ॥ १५ ॥
संचिनोषि च तत्रैव यत्र त्वं न विकीर्णवान् ।
तव मुद्रां गृहाण त्वं मया यत्नेन रक्षिताम् ॥ १६ ॥
प्रभुस्तस्य वचःश्रुत्वा वाक्यमुत्तरमब्रवीत् ।
यद्येवं स्थापनीयासीत् सा मुद्रा वणिजां गृहे ॥ १७ ॥
तथा सति मयागत्य परदेशाद् गृहे मम ।
सा मुद्रा ग्रहीतव्या स्यात् कथञ्चिद् वृद्धिसंयुता ॥ १८ ॥
इत्युक्त्वा द्वौ सुविश्वस्तौ दासावाहूय सादरम् ।
भवद्भ्यां गृह्यतामस्य मुद्रेति प्रभुरब्रवीत् ॥ १९ ॥
स एनां लभतां मुद्रां यस्य सन्ति दशापराः ॥ २० ॥
सञ्चयिभ्यः प्रदातव्यं स्थितस्यार्थस्य वृद्धये ।
तस्मै किञ्चिन्न दातव्यं यस्य नास्तीह किञ्चन ॥ २१ ॥
तस्मात्तदपि ग्राह्यं स्याद् विद्यते यत्तदन्तिके ॥ २२ ॥
दुर्व्विनीतं तमस्येनं दासं निक्षिपतं वहिः ।
रोदनं दन्तघर्षश्च भवितां तत्र दारुणम् ॥ २३ ॥
यदा मनुष्यपुत्रोऽसौ सह दूतैः समागतः ।
निजसिंहासने दीप्ते स्वेन धाम्नोपवेक्ष्यति ॥ २४ ॥
समेष्यन्ति तदा सर्व्वा जातयस्तस्य सन्निधौ ॥ २५ ॥
करोति रक्षको दक्षो यथाविभजतः पृथक् ।
करिष्यति तथान्योन्यं स तदा ताः पृथक् पृथक् ॥ २६ ॥
आत्मनो दक्षिणे मेषानजान् वामे विधानवित् ।
स राजा स्थापयित्वाथ दक्षिणस्थान् वदिष्यति ॥ २७ ॥
आगच्छत महाभागाः पितुः प्रियतमा मम ।
भवताखण्डराज्यस्य यूयमेवाधिकारिणः ॥ २८ ॥

अयच्छत यतोभक्ष्यं क्षुधया पीड़िताय मे।
पानार्थं तृष्यते मह्यं सलिलं च सुशीतलम्॥
वस्त्रहीनाय वासांसि स्थानमभ्यागताय मे।
पीड़िताय़ौषधं काराभवनस्थाय चाभयम्॥ २९॥
तदा तद्वचनं श्रुत्वा तं वदिष्यन्ति धार्म्मिकाः।
कदैतत् सर्व्वमस्माभिः कृतं तत्रैव बुध्यते॥ ३०॥
तेषां तद्वचनं श्रुत्वा तदा राजापि वक्ष्यति।
भ्रातॄणां यन्ममैतेषामेकं दीनतमं प्रति॥
भवद्भिर्दर्शिता भक्तिर्दानमानोत्तमाश्रयैः।
मम सेवा कृता तेन सत्यमतद् ब्रवीम्यहम्॥ ३१॥
वदिष्यति ततो राजा वामभागस्थितान्जनान्।
अभिशप्ता अरे यूयं दूरं मत्तोऽपगच्छत॥ ३२॥
दुर्व्वृत्तस्य सदूतस्य कृते यो ज्वालितो महान्।
तस्मिन् पतत घोराग्नौ समिद्धे शाश्वतीः समाः॥ ३३॥
यूयं नादत्त यद्भक्ष्यं क्षुधातिव्यथिताय मे।
पानार्थं तृष्यते मह्यं सलिलं च सुशीतलम्॥
वस्त्रहीनाय वासांसि स्थानमभ्यागतायच।
पीड़िताय़ौषधं काराभवनस्थाय चाभयम्॥ ३४॥
तदा तद्वचनं श्रुत्वा तं वदिष्यन्ति ते जनाः।
कदैतन्न कृतं सर्व्वमस्माभि स्तन्न बुध्यते॥ ३५॥
तेषां तद्वचनं श्रुत्वा तदा राजापि वक्ष्यति।
भ्रातॄणां यन्ममैतेषामेकं दीनतमं प्रति॥
युष्माभिर्नकृतं किञ्चिद्दानमानोत्तमाश्रयैः।
तेन मे न कृता सेवा सत्यमेतद् ब्रवीम्यहम्॥ ३६॥
ततो दुष्टाः पतिष्यन्ति शाश्वते नरकेऽशुचौ।
धर्म्मात्मानस्तु लप्स्यन्ते शाश्वतं जीवनं शुभम्॥ ३७॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितखीष्टोपनिषदि पञ्चविंशोऽध्यायः॥

षड्विंशोऽध्यायः ।

St. Matthew. Chapter 26. [ The rulers conspire against Christ. The woman anointeth his head. Judas selleth him. Christ eateth the passover : instituteth his holy supper : prayeth in the garden : and being betrayed with a kiss, is carried to Caiaphas, and denied of Peter. ]

समाप्यैताः कथाः सर्व्वा यीशुः शिष्यानथाब्रवीत् ।
यूयं सर्व्वे विजानीथ बहुकालादनुष्ठितम् ॥
शुभ निस्तारपर्व्वोपसमागन्ता द्व्यहात् परम् ।
अचिरान्नरपुत्रोऽपि बधार्थमर्पयिष्यते ॥ १ ॥
तस्मिन्नेव ततःकाले सहवृद्धैः पुरोहिताः ।
गता याजकमुख्यस्य कायाफाख्यस्य वेश्मनि ॥ २ ॥
ते चक्रुः संवृताकारा मन्त्रं मन्त्रविदो जनाः ।
छलेनैव विनाशाय यीशोः कल्याणकर्म्मणः ॥ ३ ॥
जनमध्ये विनाशात्तु कलहः संभविष्यति ।
अतस्ते विरता हन्तुं यीशुं निस्तारपर्व्वणि ॥ ४ ॥
यीशुर्बैथनियां गत्वा शिमोनस्याथ कुष्ठिनः ।
भवने सह तच्छिष्यै र्भोजनायोपविष्टवान् ॥ ५ ॥
तस्मिन्नेव ततःकाले रमणी काचिदागता ।
तैलं श्वेताश्मपात्रस्थं महार्घ्यं गन्धसंयुतम् ॥
स्रावयामास यत्नेन मानवात्मजमस्तके ॥ ६ ॥
तद्दृष्ट्वा कुपिताः सर्व्वे तच्छिष्या इदमब्रुवन् ।
तैलस्यास्य महार्हस्य कथमेष व्ययो वृथा ॥
यन्मूल्येन कृतार्थाःस्यु र्दरिद्रा बहवो जनाः ॥ ७ ॥
यीशुस्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
न स्त्रीयमपवादार्हा कृतं कर्म्मानयोत्तमम् ॥ ८ ॥
साहचर्य्यं दरिद्राणां सर्व्वदा वो भवेदिह ।
नतु मां प्राप्स्यथ द्रष्टुं सर्व्वे ययमतः परम् ॥ ९ ॥

आसिच्य श्रद्धया तैलं योषेयं मम मूर्द्धनि ।
व्यदधादग्रिमं कृत्यं समाधेर्भाविनो मम ॥ १० ॥
पृथिव्यां यत्र कुत्रापि कथेयं प्रचरिष्यति ।
तत्रेदं कार्य्यमेतस्याः स्मृत्यर्थं कीर्त्तितं भवेत् ॥ ११ ॥
तदेष्कारियेदुपाख्यो यिहुदाः पापकृत्तमः ।
प्रधानानुपसङ्गम्य याजकानिदमब्रवीत् ॥ १२ ॥
किं मह्यं दातुमिच्छन्ति सत्यमेव वदन्तु माम् ।
धृत्वाहमर्पयिष्यामि तं योशुं भवतां करे ॥ १३ ॥
तत्कालसदृशं श्रुत्वा वचस्तस्य पुरोहिताः ।
त्रिंशद्रजतखण्डानि तस्मै ते मानतो ददुः ॥ १४ ॥
स तत्कालप्रभृत्येव तस्यानिन्दितकर्म्मणः ।
ग्रहणायोत्तमं कालमन्ववैक्षत यत्नवान् ॥ १५ ॥
अथाद्यदिवसे शिष्या निष्किण्वापूपपर्व्वणः ।
योशोः सन्निधिमागत्य पप्रच्छुर्विनयान्विताः ॥ १६ ॥
भगवन् कुत्र निस्तारपर्व्वीयं भोजनं वयम् ।
त्वदर्थं कल्पयिष्यामः कृपया वक्तुमर्हसि ॥ १७ ॥
सोऽब्रवीद् यात तस्यैव गृहे नगरमध्यगे ।
तं ब्रूत चोपसंगम्य ममेदमनुशासनम् ॥ १८ ॥
"गुरुर्वक्ति समासन्नः कालो मे भवति ध्रुवम् ।
त्वद्गृहे पालयिष्यामि सशिष्यः पार्व्वणं व्रतम् ॥ १९ ॥
ते गुरोरिङ्गितं बुद्धा गत्वा तस्य निकेतनम् ।
विधिवत् कल्पयामासुः पार्व्वणं भक्ष्यमुत्तमम् ॥ २० ॥
अथ द्वादशभिः शिष्यैः सायं भोक्तुमुपागतः ।
योशुर्वाक्यमुवाचेदं स्वशिष्यान् परमात्मजः ॥ २१ ॥
युष्माकं मम शिष्याणामेको विश्वासघातकः ।
मां धृत्वा वैरिणां हस्ते नूनमेवार्पयिष्यति ॥ २२ ॥
ते तस्य वचनं श्रुत्वा पप्रच्छुर्दुःखिता भृशम् ।
शिष्या एकैकशोऽभेत्य "सोऽहं किं भगव"न्निति ॥ २३ ॥

योशुः प्राशान्नपात्रे मे यस्तु पाणिं समार्पयत् ।
स एव द्विषतां हस्ते ध्रुवं मामर्पयिष्यति ॥ २४ ॥
यथैव लिखितं शास्त्रे तथैव मानवात्मजः ।
प्रयात्यर्पयिता तस्य किन्तु सन्तापभाग्भवेत् ॥ २५ ॥
नाभविष्यत्तदुत्पत्तिर्यद्यस्मिन् धरणीतले ।
अभविष्यत् परं क्षेमं तस्य दुष्कृतकारिणः ॥ २६ ॥
यिहूदास्तद्वचः श्रुत्वा "सोऽहं कि"मिति पृष्टवान् ।
"सत्यमेव ब्रवीषि त्वं"तमिदं योशुरब्रवीत् ॥ २७ ॥
अथ पूपं समादाय शिष्येभ्यो योशुरब्रवीत् ।
"अयं मे गृह्यतां देहो भक्ष्यतां च विभागशः ॥ २८ ॥
पानपात्रं पुनर्दत्वा धन्यवादपुरःसरम् ।
उक्तवान् पिबतेदं च मम देहस्य शोणितम् ॥ २९ ॥
नवीननियमस्येदं स्रावितं मम शोणितम् ।
भविष्यति जगत्यस्मिन् बहूनां पापमुक्तये ॥ ३० ॥
अद्यप्रभृति नैवेमं पिबेयं गोस्तनीरसम् ।
पास्याम्यभिनवं स्वर्गे युष्माभिर्मिलितः पुनः ॥ ३१ ॥
तेऽथ स्तोत्रं समुच्चार्य्य जग्मुर्जैतुनपर्व्वतम् ।
बभाषे तत्र शिष्येभ्यो वचनं परमात्मजः ॥ ३२ ॥
मत्तोऽद्य स्खलिता यूयं सर्व्वे रात्रां भविष्यथ ।
भाव्येऽस्मिन् विषये यस्मादिदं व्याहरति श्रुतिः ॥ ३३ ॥
"अहमेवाहनिष्यामि व्रजस्य प्रतिपालकम् ।
तेन सुरः स्खलिता मेषा व्रजस्यास्य न संशयः" ॥ ३४ ॥
उत्थितस्तु गमिष्यामि गालीलमहमात्मवान् ।
युष्माकं गमनात् पूर्व्वं सत्यमेतद् ब्रवीम्यहम् ॥ ३५ ॥
पितरस्त्वेवमित्याह स्खलन्तु सकला जनाः ।
अहमस्खलितो भूत्वा स्थास्यामि तव सन्निधौ ॥ ३६ ॥
योशुस्तमवदत् पित्र पूर्व्वं कुक्कुटशब्दनात् ।
अद्य रात्रां त्रिकृत्वो मां त्वं परित्यक्ष्यसि ध्रुवम् ॥ ३७

पित्रस्तत्रोत्तरं प्राह तच्छिष्यैरपरैः सह ।
त्वया सार्द्धं मरिष्यामि न त्वां त्यक्ष्याम्यहं ध्रुवम् ॥ ३८ ॥
ततो गेतश्मिमान्याख्यं स्थानं गत्वा स आत्मवित् ।
निजशिष्यान् समाहूय व्याकुलोवाक्यमब्रवीत् ॥ ३९ ॥
गत्वा यावदमुत्राहं प्रार्थये स्थिरमानसः ।
तावदत्रैव तिष्ठन्तु भवन्तो मम शासनात् ॥ ४० ॥
अथ पित्रं पुरस्कृत्य तथा सिबद्दियात्मजौ ।
गच्छन् दुःखाभिभूतोऽसौ विषोदन्निदमब्रवीत् ॥ ४१ ॥
दुःखेन महता युक्तमास्तयोऽहं दयं मम ।
सुप्रबुद्धा मया सार्द्धं यूयमत्रैव तिष्ठत ॥ ४२ ॥
अथ गत्वा ततः किञ्चिद्दूरं परमतत्त्ववित् ।
पतित्वाधोमुखो भूमौ प्रार्थयन्निदमब्रवीत् ॥ ४३ ॥
पानपात्रं विनिर्यातु यदीदं तात सम्भवेत् ।
तवेच्छया भवत्वेतन्न कदाचिन्ममेच्छया ॥ ४४ ॥
अथासौ पुनरागत्य निद्रितानवलोक्य तान् ।
पित्रमुत्थापयन्नाह किमेतद्वो विचेष्टितम् ॥ ४५ ॥
घटिकामपि यूयं किं मदर्थं जागराक्षमाः ।
जाग्रत प्रार्थयध्वं च पराजेतुं प्रलोभनम् ॥ ४६ ॥
आत्मा समुत्सुकः सत्यं पिशितं किन्तु दुर्ब्बलम् ।
इत्युक्त्वासौ पुनस्तत्र गत्वाराध्येदमब्रवीत् ॥ ४७ ॥
न सत्त्यश्चेत् प्रयातीदं पात्रं पानं विना मम ।
तर्हि स्यात् सफला तात तवेच्छैव बलीयसी ॥
इत्युक्त्वा पुनरागत्य निद्रितांस्तान् स दृष्टवान् ॥ ४८ ॥
स तांस्त्यक्त्वा पुनस्तत्र गत्वाराध्य परेश्वरम् ॥
भूय एव समागत्य स्वशिष्यानिदमब्रवीत् ॥ ४९ ॥
यूयं स्वपिथ विस्रब्धं कालोऽयं समुपागतः ।
अधुनैव समर्प्येत वैरिभ्यो मानवात्मजः ॥ ५० ॥

उत्तिष्ठत गमिष्यामः सर्व्वे वयमतः परम्।
तं पश्यत समायान्तं यो मां छलार्पयिष्यति॥ ५१॥
इत्युक्तावन्तमाचार्य्यं यिहुदाः प्रत्युनन्दनः।
यीशुमभ्याययो चिप्रं सशस्त्रै र्बहुभिर्जनैः॥ ५२॥
मिथ्याचारं समाश्रित्य सङ्केतं पूर्व्वभाषितम्।
दर्शयन् यीशुमालक्ष्य प्रणनाम चुचुम्ब च॥ ५३॥
यीशुस्तमवदद् बन्धो कार्य्यं कर्म्म समाचर।
जगृहुस्तत्क्षणादेव तेच तं परमात्मजम्॥ ५४॥
तस्मिन्नेव ततःकाले यीशोः कश्चित् प्रियोजनः।
महायाजकदासस्य कर्णं खेनासिनाच्छिनत्॥ ५५॥
यीशुस्तं वारयन्नाह खड्गः कोषे निधीयताम्।
ते हि खड्गेन नश्यन्ति ये नराः खड्गधारिणः॥ ५६॥
किमेतन्नाभिजानासि याचेऽहं पितरं यदि।
दूतान् द्वादशसंख्यातवाहिनीभ्योऽधिकानिह॥
अवश्यं मम रक्षार्थं सोऽधुना प्रेषयिष्यति॥ ५७॥
तथा चेदाप्तवाक्यानां कथं स्यात् परिपूर्णता।
यानि सम्पूरणीयानि भवेयुर्विधयानया॥ ५८॥
यीशुः प्राह ततो मुख्य-याजकप्रेषिताञ्जनान्।
दस्युं यथा ग्रहीतुं मां सशस्त्राः कथमागताः॥ ५९॥
धर्म्मधामगतो नित्यं विज्ञानमहमुक्तवान्।
विनायासेन तत्राहं युष्माभिर्न धृतः कथम्॥ ६०॥
आप्तानां श्रुतिरेतेन प्राप्नोति परिपूर्णताम्।
इत्युक्तावन्तमाचार्य्यं तच्छिष्याः परितत्यजुः॥ ६१॥
गृहीतं यीशुमानिन्यु स्ततस्ते प्रेषिता जनाः।
धर्म्मयाजकमुख्यस्य कायाफाख्यस्य सन्निधिम्॥ ६२॥
तत्र संमिलितास्तस्थुः सर्व्वे मुख्यपुरोहिताः।
उपाध्यायाश्च वृद्धाश्च तथा मन्त्रविशारदाः॥ ६३॥
यीशोः परिणतिं द्रष्टुं गत्वा पित्रोऽपि दूरतः।
पदातिभिः स्थित स्तत्र मुख्ययाजकचत्वरे॥ ६४॥

ततस्ते याजका मुख्याः मकलाश्च महासभाः ।
योशुं हन्तुं मृषासाच्यं मृग्यन्तोऽपि न लेभिरे ॥ ६५ ॥
द्वौ जैनौ तत आगतौ मिथ्येदं वाक्यमूचतुः ।
“ईशस्य मन्दिरं भङ्क्त्वा त्रिदिनाभ्यन्तरे पुनः ॥
निर्म्मातुमस्ति मे शक्ति”रित्ययं प्रोक्तवान् वचः ।
तच्छ्रुत्वा याजको मुख्यः समुत्थायेदमब्रवीत् ॥ ६६ ॥
त्वद्विरुद्धमिदं साक्ष्यं वक्तव्यमस्ति तेऽत्र किम् ।
योशुस्तूष्णीं स्थितस्तत्र न किञ्चिदपि चाब्रवीत् ॥ ६७ ॥
तं तूष्णीं स्थितमालोक्य बभाषे मुख्ययाजकः ।
जीवदीश्वरनाम्ना त्वां शापयाम्यहमत्र भोः ॥ ६८ ॥
ब्रूहि सत्यं स एव त्वं ख्रीष्टः किं परमात्मजः ।
सत्यमेव ब्रवीषि त्वमिति तं योशुरब्रवीत् ॥ ६९ ॥
अद्यारभ्य प्रभावस्य दक्षिणे द्रक्ष्यसि स्थितम् ।
आयान्तं च नभोमेघरथेन मानवात्मजम् ॥ ७० ॥
तच्छ्रुत्वा स्वीयवासांसि विदीर्य्य मुख्ययाजकः ।
“ईशनिन्दां चकारायं”मित्याहोपस्थिताञ्जनान् ॥ ७१ ॥
इतस्त्वधिकसाक्ष्यस्य नास्ति नोऽत्र प्रयोजनम् ।
भवद्भिरीशनिन्दाया योग्यो दण्डो विधीयताम् ॥ ७२ ॥
वध्योऽयमिति ते प्राहुर्मानवा मुख्ययाजकम् ।
न्यष्ठीवंश्च मुखे तस्य तमाजघ्नुश्च मुष्टिभिः ॥ ७३ ॥
तं प्रहृत्य परे प्राहुर्हे ख्रीष्ट वद नः श्रुतिम् ।
के च त्वां प्रहरन्तीह त्वमरे ब्रूहि साम्प्रतम् ॥ ७४ ॥
दासी काचित्ततः पित्रमुवाच प्राङ्गणस्थितम् ।
गालिलीयस्य योशोस्त्वं सहायोऽभून्न संशयः ॥ ७५ ॥
विस्मितः सतु सर्व्वेषां समक्षमिदमब्रवीत् ।
त्वं किं वदसि मां दृष्ट्वा नैव जानामि किञ्चन ॥ ७६ ॥
तस्मात् स्थानात्ततः पित्रं दृष्ट्वा गोपुरमागतम् ।
“योशोः सहाय एषोऽभू”दित्यन्यादासिकाब्रवीत् ॥ ७७ ॥

पित्रस्तु वचनं तस्या नाङ्गीचक्रे कथंचन ।
तमहं न विजानामि वचनं चेदमब्रवीत् ॥ ७८ ॥
ततः पथि स्थिताः केचिदिदं पित्रमभाषत ।
तेषामेकतमोऽसि त्वं त्वद्गीरेवानुमोयते ॥ ७९ ॥
सोऽभिशापं समुच्चार्य्य शपथं च पृथग्विधम् ।
अब्रवीन्नाभिजानामि मानवं तं त्वयागतम् ॥ ८० ॥
इति ब्रुवति पित्रे तु सद्यो रौतिस्म कुक्कुटः ।
स्मारं स्मारं गुरोर्वाक्यं स रुरोद च निर्गतः ॥ ८१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषदि षड्विंशोऽध्यायः ।

---

## सप्तविंशोऽध्यायः ।

St. Matthew. Chapter 27. [ Christ is delivered bound to Pilate. Judas hangeth himself. Pilate, admonished of his wife, washeth his hands: and looseth Barabbas. Christ is crowned with thorns, crucified, reviled, dieth, and is buried; his sepulchre is sealed, and watched. ]

मन्त्रयित्वा प्रभातेऽथ सवृद्धा मुख्ययाजकाः ।
योशुं बद्ध्वा वधार्थाय पीलाताय समार्पयन् ॥ १ ॥
ज्ञात्वा तस्य वधादेशं योहूदाः पापकृत्तमः ।
अनुशोच्य महात्मानं योशुं शान्तमकल्मषम् ॥
आत्मनोऽसदृशं कर्म्म प्रकटीकृत्य दुष्कृतम् ।
मुख्ययाजकवृद्धेभ्यो लब्धा मुद्राः पुनर्ददौ ॥ २ ॥
ते तु प्रत्यर्पिता मुद्राः प्रत्याख्यायेदमब्रुवन् ।
त्वमेव त्वत्कृतं कर्म्म विजानीषे शुभाशुभम् ॥ ३ ॥

स तच्छ्रुत्वा विनिक्षिप्य ता मुद्रा धर्म्ममन्दिरे ।
ततराजोलम्बितः प्राणान् योहदाः पापकृत्तमः ॥ ४ ॥
अथ मुद्राः समादाय ते वाक्यमिदमब्रुवन् ।
एता भाण्डे न संस्थाप्या रक्तमूल्यतयार्ज्जिताः ॥ ५ ॥
मन्त्रयित्वा ततस्ताभिर्मुद्राभिर्मुख्ययाजकाः ।
अक्रीषुः कुम्भकृद्भूमिं वैदेशिकसभाधये ॥ ६ ॥
इदानीमपि तत् क्षेत्रं रक्तमूल्यतयार्ज्जितम् ।
रक्तक्षेत्रं जनाः सर्व्वे कथयन्ति परस्परम् ॥ ७ ॥
अवश्यम्भाविनैतेन कार्य्येण नरघातिनाम् ।
श्रुतिश्चानुगच्छेत्तेयं यिरामीयाह्वभाषिता ॥ ८ ॥
"त्रिंशन्निर्द्धारिता मुद्रा तस्य मूल्यतया जनैः ।
इस्रायेलसुता एव जगृहुस्ताश्च केचन ॥ ९ ॥
ताभिः कुम्भकृतः क्षेत्रं क्रीतवन्तो निरूप्य ते ॥
सर्व्वं तथैव सम्पन्नं यथा मां प्रभुरादिशत्" ॥ १० ॥
अथावस्थितमालोक्य पुरतः परमात्मजम् ।
"यिहूदीनां नृपः किं त्व" मिति देशाधिपोऽब्रवीत् ॥ ११ ॥
"भवता सत्यमेवोक्त" मिति तं यीशुरुक्तवान् ।
वृद्धाद्यैरभियुक्तस्तु नोत्तरं वाक्यमब्रवीत् ॥ १२ ॥
प्राणान्तकेऽभियोगेऽपि यीशुं दृष्ट्वा निरुत्तरम् ।
पीलातो विस्मितस्तस्थौ यिहूदीदेशशासकः ॥ १३ ॥
कारामुक्तिमनुस्मृत्य ततः पार्व्वणकालिकीम् ।
देशाध्यक्षोऽवदद्वन्दिमुक्तिकालोऽयमागतः ॥ १४ ॥
"बाराब्बा" मोक्ष्यते ख्रीष्टो यीशुर्व्वा ब्रूत साम्प्रतम् ।
इत्युक्त्वोपाविशद्देशशासकः शासनासने ॥ १५ ॥
तस्मिन् काले सुविश्वस्तं प्रेष्य दूतं त्वरान्वितम् ।
इदमुक्तवती तस्य धर्म्मपत्नी यशस्विनी ॥ १६ ॥
स्वप्ने ह्यद्य महद्दुःखं प्राप्तं तस्य कृते मया ।
नातस्त्वयाऽप्रियं कार्य्यं तस्मिन् परमधार्म्मिके ॥ १७ ॥

मुख्ययाजकवृन्दैस्तु जनसंघाः प्रणोदिताः ।
बाराब्बामुक्तिमावेद्य योशोर्हतरां ययाचिरे ॥ १८ ॥

पोलातेन पुनः पृष्टा प्रोक्तवन्तस्तदेव ते ।
पोलातः पृष्टवान् भूयो योशोः स्यात्तर्हि का गतिः ॥ १९ ॥

"क्रुशे योशुं समारोप्य विनाशायानुमन्यताम्" ।
इत्यूचुस्ते महोल्लासाज्जनसंघाः पुनः पुनः ॥ २० ॥

पोरुषं निष्फलं मत्वा श्रुत्वाच जनशब्दनम् ।
प्रक्षाल्य सलिलैर्हस्तं पोलातो वाक्यमब्रवीत् ॥ २१ ॥

विनाशे धार्म्मिकस्यास्य नापराधो भवेन्मम ।
युष्माभिरेव भोक्तव्यं युष्माकं कर्म्मणः फलम् ॥ २२ ॥

पोलातस्य वचः श्रुत्वा त ऊचुरिदमुत्तरम् ।
मूर्ध्नस्माकं सवंश्यानां रक्तपातोऽस्य वर्त्तताम् ॥ २३ ॥

पोलातो वचनात्तेषां बाराब्बामुक्तिमादिशत् ।
आदिशत् सकशाघातं क्रुशे योशोर्विनाशनम् ॥ २४ ॥

शासकस्य ततः सेना योशुं नीत्वा नृपालयम् ।
सैन्यानि स्थापयामास समग्राणि तदन्तिके ॥ २५ ॥

परिधेयानि वस्त्राणि योशोराक्षय देहतः ।
तस्याङ्गं वेष्टयामास रक्तप्रावरणेन च ॥ २६ ॥

मुकुटं कण्टकस्याथ निदधौ तस्य मस्तके ।
दण्डं संस्थापयामास हस्तेच तस्य दक्षिणे ॥ २७ ॥

सैन्यानि पुरतस्तस्य पातयित्वाथ जानुनी ।
"नमोयोहूद्यधीशाये"तरवत्तस्य बभाषिरे ॥ २८ ॥

निष्टीवमक्षिपं स्तस्य" क्रुशविद्धे कलेवरे ।
तद्धस्तदण्डमादाय प्रजह्रुस्तस्य मस्तके ॥ २९ ॥

मोचयित्वा ततस्तस्य शरीराल्लोहिताम्बरम् ।
तं क्रुशेऽर्पयितुं निन्युः परिधाप्य निजाम्बरम् ॥ ३० ॥

कुरीनीयं शिमोनाख्यं पथि वीक्ष्य वहिर्गताः ।
सैनिकास्तं समादिश्य क्रुशस्य वहनाय तु ॥
कपालस्थलमानिन्युरर्थोंशु ं ते गल्‌गथाह्वयम् ॥ ३१ ॥
पानाय च ददुस्तस्मै सपित्तं गोस्तनीरसम् ।
स च स्तोकं तदास्वाद्य न पपौ परमात्मजः ॥ ३२ ॥
क्रुशे ततः समारोप्य सैनिकाः परमात्मजम् ।
व्यभजंस्तस्य वस्त्राणि गुटिकापातपूर्व्वकम् ॥ ३३ ॥
"अयं योशुरितिख्यातो यिहूदीयप्रजाधिपः" ।
इति दोषयुतं वाक्यं बबन्धुस्तस्य मस्तके ॥ ३४ ॥
बबन्धुस्तेच दस्यू द्वौ योश्चोर्दक्षिणवामयोः ॥ ३५ ॥
सामर्थ्यं तस्य निन्दन्तो भ्रूकुटीकुटिलाननाः ।
मस्तकं चालयित्वाच पथिका इदमब्रुवन् ॥ ३६ ॥
"ईशस्य मन्दिरं भङ्क्त्वा त्रिदिनाभ्यन्तरे पुनः ।
निर्म्मातुमपि शक्नोमी"त्युक्तवांस्त्वं वचो न किम् ॥ ३७ ॥
रक्ष त्वमात्मनात्मानं यदि त्वमीश्वरात्मजः ।
विनियुज्येशसामर्थ्यमवरोह स्वयं क्रुशात् ॥ ३८ ॥
हन्ता याजकमुख्याश्च सोपाध्यायाः पुरोहिताः ।
तमित्थमुपहस्येव तदानीं वाक्यमब्रुवन् ॥ ३९ ॥
इस्रायेलाधिपोऽरक्षीदयमन्यान् स्वशक्तितः ।
स्वशक्त्या कथमात्मानं नाभिरक्षति साम्प्रतम् ॥ ४० ॥
विश्वासो वर्द्धतां नोऽस्मिन्नवरोहेदयं क्रुशात् ।
भगवांस्त्रायतामेनं स यदि त्रातुमिच्छति ॥ ४१ ॥
ईशेह्यस्य परा भक्तिः पुत्रोऽयमीश्वरस्यच ।
दस्यू विद्धौ तेन सार्द्धमित्थं तं विनिनिन्दतुः ॥ ४२ ॥
मध्यन्दिनादथारभ्य कालं त्रिघटिकामितम् ।
अभवन्निखिलो देशो घोरेण तमसावृतः ॥ ४३ ॥
तृतीयप्रहरे प्राह योशुरुच्चैरिदं वचः ।
"त्वया कथमहं त्यक्तो मदीश्वर मदीश्वर" ॥ ४४ ॥

तदाकर्ण्याब्रुवन् केचित्तदानीं तत्र संस्थिताः ।
"अयमेलियमाहूय त्यजत्यन्ते कलेवरम्" ॥ ४५ ॥
इत्याकर्ण्य वचस्तेषां कश्चित्तत्रत्यमानवः ।
पानाय प्रददौ तस्मै काञ्जिकं नलमध्यगम् ॥ ४६ ॥
निवर्त्तस्व त्वमित्याहुरपरे तत्र संस्थिताः ।
पश्यामोऽमुं परित्रातुमेलियोऽभ्येति वा नवा ॥ ४७ ॥
अथोच्चैः पुनरुत्क्रुश्य देहधृक् परमात्मजः ।
देहाद्वियुक्तमात्मानमार्पयत् परमात्मने ॥ ४८ ॥
तत्क्षणादग्रतोमूलं यावत्तस्य वियोगतः ।
अभूद् यवनिका दीर्णा धर्म्ममन्दिरसंस्थिता ॥ ४९ ॥
विभिदुः सकलाः शैलास्वकम्पेच वसुन्धरा ।
उदमुच्यन् समस्तानि शवागाराणि तत्क्षणात् ॥ ५० ॥
चिरनिद्रागता देहा बहवः पूतचेतसाम् ।
दिव्यं स्वरूपमाश्रित्य सहचेतनयोत्थिता ॥ ५१ ॥
यीशोः पुनः समुत्थानात् परं तान् वहिरागतान् ।
बिभ्रती नगरं पुण्यं ददृशुर्बहवोजनाः ॥ ५२ ॥
धराकम्पादिकं सर्व्वं यीशोर्वीक्ष्य निरीक्षकाः ।
"परमेश्वरपुत्रऽयमासी" दित्यब्रुवन् समम् ॥ ५३ ॥
गालीलाद् योषितो याश्च यीशोः सेवार्थमागताः ।
ताःसर्व्वा ददृशुः सर्व्वं दूरतः समवस्थिताः ॥ ५४ ॥
तासु सर्व्वासु विख्याता इमाः सेवापरायणाः ।
मरीयम् नाम कन्याणी मग्दलग्रामवासिनी ॥ ५५ ॥
योषियाकबयोर्माता मरीयम् चापरा स्मृता ।
माताच सिबदीयस्य पुत्रयोर्धर्म्मचारिणी ॥ ५६ ॥
अथारिमाथियावासी योषेफोनाम धार्म्मिकः ।
यीशोःकश्चिद्धनी शिष्यः सायं तत्र समाययौ ॥ ५७ ॥
ततः स उपसंगम्य पीलातं देशशासकम् ।
यीशोरचेतनं देहं ययाचे विनयान्वितः ॥ ५८ ॥

पीलातेनाभ्यनुज्ञातो योषेफो विधिपूर्व्वकम् ।
वेष्टयित्वाखिलं देहं शुचिना नववाससा ॥
स्वार्थं विनिर्म्मिते शैलखभ्रे संस्थाप्य यत्नतः ।
प्रस्तरेण मुखं तस्य रुद्धाच प्रहिराययौ ॥ ५९ ॥
मरीयम्मग्दलिनीतु सार्द्धं मरीयमान्यया ।
श्मशानस्थे समासीना शवागारस्य दूरतः ॥ ६० ॥
क्रुशार्पणाद्दितीयेऽह्नि फरीशिमुख्ययाजकाः ।
पीलातमुपसंगम्य तं वाक्यमिदमब्रुवन् ॥ ६१ ॥
प्रभो स वञ्चकस्तस्य मृत्योः प्रागिदमुक्तवान् ।
"दिनत्रयात् परं मृत्योरुत्थास्याम्यहमात्मवान्" ॥ ६२ ॥
इति तस्य वचो धीमन् स्मरामः सर्व्वथा वयम् ।
तस्माद्दिनत्रयं कार्य्यं तस्य देहस्य रक्षणम् ॥ ६३ ॥
नोचेत्कुर्वं हरिष्यन्ति तच्छिष्या नक्तमागताः ।
मृतोत्थितं च वक्ष्यन्ति जनेभ्यस्तद्विभुतये ॥ ६४ ॥
तथा सति भ्रमादाद्यात् स्यादनिष्टतरोऽन्तिमः ।
विमृश्य तदशेषेण यदिष्टं तद्विधीयताम् ॥ ६५ ॥
तेषां तद्वचणं श्रुत्वा पीलात इदमब्रवीत् ।
संरक्षन्तु शवागारं भवतामेव यामिकाः ॥ ६६ ॥
तच्छ्रुत्वा तत्र ते गत्वा यामिकैः सह संस्थिता ।
मुद्रयित्वा शवागारं ररक्षुर्निजमुद्रया ॥ ६७ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मथिभाषितख्रीष्टोपनिषद्भि सप्तविंशोऽध्यायः ।

---

## अष्टाविंशोऽध्यायः ।

St. Matthew. chapter. 28. [ Christ's resurrection is declared by an angel to the women. He himself appeareth unto them. The high priests give the soldiers money to say that he was stolen out of his sepulchre. Christ appeareth to his disciples, and sendeth them to baptize and teach all nations. ]

प्रातर्विश्रामवारान्ते ते द्वे मरियमी ततः ।
गते द्रष्टुं शवागारं सप्ताहप्रथमेऽहनि ॥ १ ॥
चचाल वसुधाऽकस्मात्तयोस्तत्र समागमे ।
विभोरादेशतःकश्चित् स्वर्दूतोऽवरुरोह च ॥ २ ॥
सोऽवक्षिप्य शवागारद्वारस्थप्रस्तरं ततः ।
तस्योपरि समासीनो विद्युदाभो व्यराजत ॥ ३ ॥
तस्य दिव्यानि वस्त्राणि तुषार इव रेजिरे ।
तं दृष्टा यामिकाः सर्व्वे भीता निपतिता भुवि ॥ ४ ॥
अथ ते योषितौ वीक्ष्य स दूत इदमब्रवीत् ।
माभैष्टमवगच्छामि युवयोरत्र चेष्टितम् ॥ ५ ॥
युवां क्रुशहतं यीशुं मृग्यथोऽवटसंस्थितम् ।
स नास्त्यत्रोदतिष्ठच्च मृत्योः पूर्व्वं यथावदत् ॥ ६ ॥
ईक्षेथामेत्य तत् स्थानं यत्राशेतात्मवान् प्रभुः ।
शीघ्रं ब्रूतं च संवादमिमं तच्छिष्यसत्तमान् ॥ ७ ॥
युवयोः सोऽग्रतो याति गालीलं त्वरया प्रभुः ।
युवां तं द्रक्ष्यथस्तत्र सत्यमेव ब्रवीम्यहम् ॥ ८ ।
ततस्ते योषितौ तस्य शिष्येभ्यस्तन्निवेदितुम् ।
शवागारात् प्रतस्थाते हर्षभीतिसमन्विते ॥ ८ ॥
तयोराविरभूत् ख्रीष्ट आशीर्व्वादमुदीरयन् ।
ते च तच्चरणौ धृत्वा नेमतुः श्रद्धयान्विते ॥ १० ॥
अथ ख्रीष्टोऽब्रवीत्ताभ्यां माभूद् वां मनसो भयम् ।
गच्छतं ब्रूतमेतच्च भ्रातृभ्यो मामकं वचः ॥ ११ ॥

गालोलं यान्तु ते सर्व्वे मिलिता भ्रातरो मम ।
अहं तत्र गमिष्यामि द्रक्ष्यन्ति तेच तत्र माम् ॥ १२ ॥
अथ ते यामिकाः केचिच्छिन्नं नगरमागताः ।
सर्व्वं याजकमुख्येभ्यो यथावृत्तं न्यवेदयन् ॥ १३ ॥
ते वृद्धैः सह सङ्गम्य मन्त्रयित्वा पुरोहिताः ।
पर्य्याप्तं रूप्यकं दत्त्वा सैन्येभ्य इदमब्रुवन् ॥ १४ ॥
युष्माभिरत्र वक्तव्यं तच्छिष्या नक्तमागताः ।
अपजह्रुः शवं तस्य यदा निद्रागता वयम् ॥ १५ ॥
अन्तर्धानमिदं तस्य देशाध्यक्षः शृणोति चेत् ।
वयमेवापनेष्यामो युष्माकं मनसो भयम् ॥ १६ ॥
ते स्ततो धनमादाय यथादेशमनुष्ठितम् ।
तन्मूला विद्यतेऽद्यापि यिहूदीषु जनश्रुतिः ॥ १७ ॥
अथगालोलदेशस्थं यीशुर्निर्द्दिष्टपर्व्वतम् ।
एकादशानुसंप्राप्ताः शिष्या स्तद्गतमानसाः ॥ १८ ॥
ते नेमुस्तत्र तं दृष्ट्वा केचित्तु संशयान्विताः ।
तज्ज्ञात्वान्तिकमागत्य यीशुस्तानिदमब्रवीत् ॥ १९ ॥
कर्त्तृत्वं स्वर्गमेदिन्योः सर्व्वं मह्यं समर्पितम् ।
तस्मात् सर्व्वमनुष्याणां शुभदोक्ता विधीयताम् ॥ २० ॥
पितृपुत्रपवित्रात्मप्रोत्यै पूतवारिणा ।
स्नाप्यन्तां श्रेयसे चैव पृथिव्यां सर्व्वमानवाः ॥ २१ ॥
आज्ञा याश्च मया प्रोक्ता युष्मभ्यं धर्म्मसम्मताः ।
युष्माभिरुपदेष्टव्यं तासामेवानुपालनम् ॥ २२ ॥
यावच्चन्द्रश्च सूर्य्यश्च यावत्तिष्ठति मेदिनी ।
तावत् स्थास्यामि युष्माभिः सह सत्यं ब्रवीम्यहम् ॥ २३ ॥

इति भारतवर्षीयचट्टग्रामजिलान्तर्गतमादार्सांग्रामनिवासिना
श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमन्मथिभाषितख्रीष्टोपनिषदि अष्टाविंशोऽध्यायः ।

---

# CHRISTOPANISAT

## श्रीमन्मर्ग भाषिता

### प्रथमोऽध्यायः

St. Mark. Chapter 1: [The office of John the Baptist. Jesus is baptized, tempted, he preacheth: Calleth Peter, Andrew, James and John: healeth one that had a devil, many diseased persons, and cleanseth the leper.]

अथमारभ्यते यस्य संवादः सत्प्रकाशकः ।
यीशुख्रीष्ट इति ख्यातः स आसीत् परमात्मजः ॥ १ ॥
स्मृत्वा पूर्व्वं निमित्तानि यिशायाह्वो महामुनिः ।
इत्थं व्याहृतवान् ख्रीष्टधरावतरणे वचः ॥ २ ॥
"तवाविर्भावतः पूर्व्वं स्वदूतं प्रेषयाम्यहम् ।
स एव तव पन्थानं मर्त्त्ये सज्जीकरिष्यति ॥ ३ ॥
प्रान्तरे मरुदेशस्य कस्यचिच्छ्रूयते रवः ।
भवद्भिः प्रभोर्मार्गो युष्माभिः क्रियतामिति" ॥ ४ ॥
श्रुतिमेतामनुस्मृत्य साधुः स्नापकयोहनः ।
मरुप्रान्तरमभ्येत्य जनानां पापमुक्तये ॥
तथा संशोधनार्थं च मनसः पापकर्म्मणाम् ।
बहु प्रचारयामास पवित्रमवगाहनम् ॥ ५ ॥
यिरुशालेमवास्तव्या यिहूदीयास्थिताश्च ये ।
स्नापितास्तेन ते सर्व्वे पापाङ्गीकरणात् परम् ॥ ६ ॥
उष्ट्रलोममयं वासःपरिधाय च योहनः ।
इदमाघोषयामास पतङ्गमधुभोजनः ॥ ७ ॥
"योमत्तः परमायाति स मत्तः शक्तिमत्तरः ।
नाहं योग्योऽस्मि मोचेऽपि बन्धन्योस्तदुपानहः ॥ ८ ॥

मया तु दीक्षिता यूयं सलिलेनैव केवलम् ।
किन्तु पूतात्मसंयोगात् स युष्मान् दीक्षयिष्यति ॥ ९ ॥
तस्मिन् नासरतात् काले यीशुर्गालीलमागतः ।
यर्द्दनस्यामले तोये योहनेनावगाहितः ॥ १० ॥
सोऽपश्यत्तीरमागच्छन् विभक्तं गगनं द्विधा ।
कपोताकार आत्मा च तत्क्षणात्तं समाविशत् ॥ ११ ॥
"अनेनाहं परं प्रीतः पुत्त्रश्चायं प्रियो मम" ।
इत्यैश्वरी तदा वाणी त्रिदिवेऽपि समुत्थिता ॥ १२ ॥
तमात्मा प्रेषयामास गहने प्रान्तरे ततः ।
चत्वारिंशदहस्तत्र यीशुः सेहे प्रलोभनम् ॥ १३ ॥
आरण्यपशुभिः सार्द्धं तत्र वासमकल्पयत् ।
तं तदा परिचेरुश्च दूताः स्वर्गात् समागताः ॥ १४ ॥
योहनस्य ततः श्रुत्वा कारागारनिवेशनम् ।
यीशुर्गालीलमागत्य सद्वाक्यमिदमुक्तवान् ॥ १५ ॥
"कालः सम्पूर्णतामाप राज्यमैश्वरमागतम् ।
मनः शोधयत स्नानं भवतेश्वरतत्परा" ॥ १६ ॥
ततः स भ्रातरौ वीक्ष्य शिमोनान्द्रियनामकौ ।
गालीलीयोदधौ जालं क्षिपन्तौ मत्स्यधारिणौ ॥
प्राह तौ "शीघ्रमायातं यान्तं मामनुगच्छतम् ।
युवामहं करिष्यामि धीवरौ नरधारिणौ" ॥ १७ ॥
तस्य तद्वचनं श्रुत्वा तत्प्रभावप्रभावितौ ।
स्वस्वजालं तु तौ हित्वा सद्यस्तमनुजग्मतुः ॥ १८ ॥
यीशुः स्तोकं ततो गत्वा विलोक्य नावमाश्रितौ ।
विदीर्णजालसंस्कारनिरतौ भ्रातरावुभौ ॥
आत्मजौ सिवदीयस्य नाम्ना याकोबयोहनौ ।
आहूतवानुभौ तच्च समाकर्ण्य सहोदरौ ।
तातं भृत्येषु विन्यस्य शीघ्रं तमनुजग्मतुः ॥ १९ ॥

ततः कफरनाहूमं प्रविश्य परमात्मजः ।
विश्रामदिवसे धर्म्मगृहे ज्ञानमुपादिशत् ॥ २० ॥
श्रोतारस्तस्य सज्ज्ञानमध्यापकविलक्षणम् ।
निशम्य विस्मिता स्तस्थुः प्रभावेणेव मोहिताः ॥ २१ ॥
ततः प्रपीड़ितः कश्चिन्नरो भूताभिषङ्गतः ।
यीशुं तत्र समालोक्य साक्रोशमिदमब्रवीत् ॥ २२ ॥
"अस्माकं कोऽस्ति, सम्बन्धो हे योशो भवता सह ।
किमस्माकं विनाशाय भवानत्र समागतः ॥ २३ ॥
स एव परमः शुद्धस्त्वं जातः परमात्मनः ।
इत्यहं प्रविजानामि मम शक्तिप्रभावतः" ॥ २४ ॥
यीशुस्तमुक्तवान् "मौनी भवास्माद् वहिरेहि" च ।
सच संकोच्य तस्याङ्गं सोचनादं वहिर्ययौ ॥ २५ ॥
एतानि तस्य कर्म्माणि कथयन्तः परस्परम् ।
तुष्टुवुर्यीशुसामर्थ्यं विस्मिताः सकला जनाः ॥ २६ ॥
तस्यालौकिककर्म्माणि ततः प्रभृति वार्त्तया ।
जनाः प्रचारयामासुः कृतस्ने गालीलमण्डले ॥ २७ ॥
अथ धर्म्मगृहात् तस्मान्निष्क्रम्य परमात्मजः ।
शिमोनान्द्रिययोर्गेहं सहशिष्यः प्रविष्टवान् ॥ २८ ॥
तत्र वोक्ष्य शिमोनस्य श्वश्रूं ज्वरनिपीड़िताम् ।
हस्तेनोत्थापयामास यीशुस्तामतिदुर्व्वलाम् ॥ २९ ॥
सद्योज्वरविनिर्म्मुक्ता साच तस्य प्रसादतः ।
श्रद्धया पर्य्यचारीत्तानागतानतिथीन् प्रियान् ॥ ३० ॥
आगतायां तु सन्ध्यायां जना भूतनिपीड़िताः ।
बहवोऽप्रकृतिस्थाश्च समवेतास्तदन्तिके ॥ ३१ ॥
तान् सर्व्वान् सुस्थितान् कृत्वा भूतान् कृत्वा हतप्रभान् ।
प्रत्यूषसि समुत्थाय यीशुः प्रार्थयितुं गतः ॥ ३२ ॥
अनुसृत्य शिमोनस्तं स्वजनैरपरैः सह ।
लब्ध्वा च निर्जने स्थाने तमिदं वाक्यमब्रवीत् ॥ ३३ ॥

"अन्विष्यन्ति जनाः सर्व्वे भवन्तं द्रष्टुमिच्छया" ।
यीशुरेतद्वचः श्रुत्वा तानिदं वाक्यमब्रवीत् ॥ ३४ ॥
"यूयमायात गच्छामो ग्रामान् निकटवर्त्तिनः ।
तेषु कर्म्म करिष्यामि तदर्थं निर्गतोऽस्म्यहम् ॥ ३५ ॥
इत्युक्त्वा स विनिष्क्रम्य कृत्स्ने गालीलमण्डले ।
भूतग्रस्तान् समुद्धृत्य धर्म्मं ज्ञानमुपादिशत् ॥ ३६ ॥
कुष्टी कश्चित्तदागत्य तं प्रणम्येदमुक्तवान् ।
"यदि ते मय्यनुक्रोशः पवित्रं कुरु मां प्रभो" ॥ ३७ ॥
स तस्य वचसा प्रीत"स्तथास्त्वि"ति वचोऽब्रवीत् ।
स्पृष्ट्वाच निजहस्ताभ्यां तं चकार निरामयम् ॥ ३८ ॥
अथ तं प्रस्थितं वीक्ष्य प्रोवाच परमात्मजः ।
"मा वादीस्त्वमिदं वृत्तं हर्षादपरमानवम् ॥ ३९ ॥
गच्छ त्वं याजकस्थानं निजरूपं प्रदर्शय ।
नैवेद्यं मोशिनादिष्टं याजकेभ्यः प्रयच्छ च" ॥ ४० ॥
स तु प्रचारयामास सर्व्वमेतद्विशेषतः ।
एतत्कारणतोऽन्यत्र प्रकाशं सच नागमत् ॥ ४१ ॥
ततः प्रभृति निष्क्रान्तः स स्थानं निर्ज्जनं ययौ ।
नानादिग्देशतस्तत्राप्यभूज्जनसमागमः ॥ ४२ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्ग्भाषित-खीष्टोपनिषदि प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः

St. Mark. Chapter 2. [ Christ healeth one sick of the palsy, calleth Matthew from the receipt of custom, eateth with publicans and sinners, excuseth his disciples for not fasting, and for plucking the ears of corn on the sabbath day. ]

ततः कफरणाहूममागतं परमात्मजम् ।
गृहे तिष्ठन्तमाकर्ण्य जनसङ्घाः समागताः ॥ १ ॥
स गृहाद् वहिरन्तश्च दृष्ट्वा जनसमागमम् ।
तत्र प्रचारयामास ज्ञानं धर्म्मार्थ-साधकम् ॥ २ ॥
तस्मिन्नेव ततः काले पक्षाघातगदार्दितम् ।
नरमेकं समानिन्युश्चत्वारस्तत्र वाहकाः ॥ ३ ॥
जनावमर्द्दसंरुद्धास्ते भित्वा गृहमस्तकम् ।
सपर्य्यङ्कं नरं निन्युर्यत्र योशुरवस्थितः ॥ ४ ॥
योशुस्तेषां परां श्रद्धां ज्ञात्वा रोगिनमब्रवीत् ।
"तव वत्स क्षमा जाता पापानां महतामिह ॥ ५ ॥
उपाध्यायास्तदाकर्ण्य वचनं योशुभाषितम् ।
मनसा तर्कयामासुः किमयं प्रोक्तवानिति ॥ ६ ॥
विनिन्दतीश्वरं साक्षादयमुक्त्वेदृशं वचः ।
समर्थः पापनाशाय कोविना परमेश्वरम् ॥ ७ ॥
योशुस्तेषामभिप्रायं विदित्वेदमभाषत ।
"कथं विप्रतिपद्यन्ते भवन्तो वचने मम ॥ ८ ॥
'पापानां ते क्षमा जाता' 'शय्यामादाय गच्छ वा' ।
वाक्ययोरनयोर्मध्ये कतरच्छोभनं भवेत् ॥ ९ ॥
'नराणां पापनाशाय शक्तोऽयं मानवात्मजः ।
भवतामवबोधाय सोऽब्रवीदृशं वचः" ॥ १० ॥
इत्युक्त्वा रोगिणं प्राह "त्वमुत्तिष्ठ निजं गृहम् ।
गच्छ पर्य्यङ्कमादाय स्वयं हि शिरसा वहन्" ॥ ११ ॥
स च पर्य्यङ्कमादाय समक्षं परिपश्यताम् ।
अगच्छत् सुस्थितो भूत्वा व्यस्मयन्त च दर्शकाः ॥ १२ ॥

योशुस्ततः परं तस्मात् समुद्रतटमागतः ।
शिचयामास धर्म्मात्मा सर्व्वाननुगताञ्जनान् ॥ १३ ॥
ततो गच्छन् स ऐच्चिष्ट पुरुषं लेविनामकम् ।
गाम्भीर्य्यात् प्राह तं "शीघ्रमेहि त्वं मामनुव्रज" ॥ १४ ॥
स तथैवानुवव्राज लेविः परमधार्म्मिकः ।
योशुः स्थं मनः कुर्व्वन् नान्यत् किञ्चिद्विचारयन् ॥ १५ ॥
योशुर्भोजनकालेऽथ लेविगेहमुपागतः ।
सन्निष्ठः पापिभिः सार्द्धं करसंग्राहिभिस्तथा ॥ १६ ॥
तच्छिष्यान् परिपप्रच्छुः सोपाध्यायाः फरीशिनः ।
"आचार्य्यो भवतां भुङ्क्ते कथमेभिर्नराधमैः" ॥ १७ ॥
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
"व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ १८ ॥
परित्राणाय साधूनां नाहं पृथ्वीं समागतः ।
पापिनां मनसः शुद्ध्यै मयात्रागमनं कृतम्" ॥ १९ ॥
ततः केचित् समागत्य मानवा योशुसन्निधिम् ।
उपवासविधावेतत् पप्रच्छु र्मानवात्मजम् ॥ २० ॥
"उपवासं भवच्छिष्या न कुर्व्वन्ति कथं प्रभो ।
परं स क्रियतेऽस्माभिर्व्वहुशः सफरीशिभिः" ॥ २१ ॥
विदित्वा संशयं तेषां योशुरुत्तरमब्रवीत् ।
किं भक्ष्यमनुशोचन्ति वरेण सह यात्रिणः ॥
ते भक्ष्यमनुशोचन्ति वरसङ्गविवर्जिताः ॥ २२ ॥
जीर्णेन वसनेनापि नववस्त्रं न सीव्यते ।
नूतनेऽपि महच्छिद्रं तेन संजायते यतः ॥ २३ ॥
नवो वा वारुणीमण्डो जीर्णकूप्यां न धीयते ।
तथा कृते स्रवेन्मद्यं कूपो च दीर्णतां व्रजेत् ॥ २४ ॥
यद्यसौ सन्निधीयेत नव कूप्यां सुयत्नतः ।
न मद्यं वहिरागच्छेत् कूपो न दीर्णतां व्रजेत्"॥ २५ ॥

योशुर्व्विश्रामवारेऽथ सशिष्यः शिष्यवत्सलः ।
प्रान्तरे स्वेच्छया भ्राम्यन् शस्यक्षेत्रेण निर्ययौ ॥ २६ ॥
क्षुधार्त्तास्तत्र तच्छिष्यान् भुञ्जानाञ् शस्यमञ्जरीः ।
दृष्ट्वा फरीशिनो योशुं वाक्यमेतद् बभाषिरे ॥ २७ ॥
"अविधेयं भवच्छिष्या विश्रामदिवसे कथम् ।
आचरन्ति सुधीश्रेष्ठ भुक्त्वेमाः शस्यमञ्जरीः ॥ २८ ॥
तेषां तद् वाक्यमाकर्ण्य योशुरुत्तरमब्रवीत् ।
"भवद्भिर्व्विधितत्त्वज्ञै र्दायूदःस्मर्य्यते न किम् ॥ २९ ॥
अवियाथरकालेऽसौ प्रविश्य धर्म्ममन्दिरम् ।
दृश्यपूपं समादाय सशिष्यो भुक्तवान्नकिम् ॥ ३० ॥
यस्त्वासीत् खलु भोक्तव्यः केवलं धर्म्मयाजकैः ।
स पूपः खादितस्तेन विलङ्घ्य-शास्त्र-शासनम् ॥ ३१ ॥
किञ्च विश्रामवारोऽस्ति नराणामिष्टसिद्धये ।
नहि विश्रामवाराय कल्पिता मानवा इह ॥ ३२ ॥
किं भवेद् बहुनेतेन ख्यातेन भवतामिह ।
विश्रामदिवसस्यापि यतः कर्त्ता नरात्मजः ॥ ३३ ॥

इति श्रीताराचरणचक्रवर्त्तिकृतदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्ग भाषितखोष्टोपनिषदि द्वितीयोध्यायः ।

---

## तृतीयोऽध्यायः

St. Mark. Chapter 3. [ Christ healeth the withered hand, and many other infirmities: rebuketh the unclean spirits: chooseth his twelve apostles; convinceth the blasphemy of casting out devils by Beelzebub; and sheweth who are his brother, aister and mother. ]

स प्रविश्य पुनर्धर्म्मगृहमात्मवतां वरः ।
दृष्टवान् मानवं कञ्चित् क्षीणहस्तमवस्थितम् ॥ १ ॥

तस्याभियोगमिच्छन्तः समवेताः फरीशिनः ।
विश्रामदिवसे वर्ज्जमैच्छन्त यीशुचेष्टितम् ॥ २ ॥
यीशुर्जगाद "सर्व्वेषां मध्ये त्वं तिष्ठ निर्भयः" ।
फरीशिनश्च सम्बोध्य पप्रच्छेदं विदांवरः ॥ ३ ॥
"किं कार्य्यं किमकार्य्यं च विश्रामदिवसे जनैः ।
किं सत् कार्य्यमनुष्ठेयमसत् कार्य्यमथापि वा ॥ ४ ॥
प्राणा रक्ष्या विनाश्या वा कथ्यतां युक्तमुत्तरम्" ।
तस्य तद्वाक्यमाकर्ण्य न किञ्चित्ते वचोऽब्रुवन् ॥ ५ ॥
सक्रोधं स च तान् वीक्ष्य जनाँश्चौष्ठसमाक्रान्तान् ।
शुष्कहस्तं नरं प्राह "तव हस्तः प्रसार्य्यताम्" ॥ ६ ॥
स तथा कृतवांस्तस्य हस्तोजातः पुनर्ब्बली ।
लेभे चादानसामर्थ्यं तस्यान्यतरहस्तवत् ॥ ७ ॥
फरीशिनश्च तद् दृष्ट्वा यीशोः कार्य्यमलौकिकम् ।
तद्वधाय मतिञ्चक्रुर्हेरोदीयजनैः सह ॥ ८ ॥
यीशुश्च जलधेस्तीरं गतः शिष्यसमन्वितः ।
तस्मिन् काले च गालीलाज्जनसङ्घाः समाययुः ॥ ९ ॥
श्रुत्वालौकिककर्म्माणि यीशोस्तत्र समुत्सुकाः ।
केचिद् यिहूदियादेशाद् यिरूशालेमतस्तथा ।
यर्द्दनापरपारस्थदेशेभ्यो बहवोऽपरे ।
सोरसीदनयोश्चैव चतुर्द्दिग्भ्यः समागताः ॥ १० ॥
प्रभुः प्राह ततः शिष्यान् जनपीडानिवृत्तये ।
मदर्थमेव नौरेका तिष्ठत्वत्र सुसज्जिता ॥ ११ ॥
व्याधितान् सुस्थितान् वीक्ष्य जनाः सर्व्वे समागताः ।
देहे तस्य पतन्तिस्म स्प्रष्टुं तं सुखदायकम् ॥ १२ ॥
अविशुद्धास्तथात्मानो यदैच्छन्त परात्मजम् ।
"ईशपुत्रो भवानित्यब्रुवन् नत्वातिभक्तितः ॥ १३ ॥
भर्त्सयित्वा स तानेतदब्रवीत् परमात्मजः ।
प्रकाश्यो नहि युष्माभिर्लोके परिचयो मम" ॥ १४ ॥

ततः पर्व्वतमारुह्य स्वेच्छया योशुरात्मवान् ।
द्वादशाभिमतान् शिष्यानाजुहाव स्वसन्निधौ ॥ १५ ॥
ततोऽन्तेवासिरूपेण तान् शिष्यान् स नियुक्तवान् ।
भूतादिप्रतिकाराय प्रचाराय च कर्म्मणाम् ॥ १६ ॥
पित्र इत्यपरं नाम शिमोनाय स दत्तवान् ।
याकोबं योहनं चैव सिबदीयसुतावुभौ ॥
मेघनादसुतौ नाम्ना चकार परमात्मजः ॥ १७ ॥
आन्द्रियःफिलिपश्चैव मथिश्च बर्थलोमयः ॥
थोमाश्चाल्फेयियाकोबस्थद्देयश्च महामतिः ।
शिमोनः कानानिश्चैव यिहूदाश्च तथैव च ॥
इति नामानि शिष्याणां योशुश्चक्रे यथायथम् ॥ १८ ॥
यिहूदास्तु गुरुं धृत्वा रिपवे तं समार्पयत् ॥ १९ ॥
ततस्तेषु प्रविष्टेषु भोजनार्थं निकेतनम् ।
जनौघा बहुदेशेभ्यो योशुं द्रष्टुं समागताः ॥ २० ॥
बभूवुर्व्विरतास्ते च भोजनाज्जनशब्दनैः ।
दुद्रुवुःसुहृदश्चैके योशुं मत्वा हतौजसम् ॥ २१ ॥
यिरूशालेमतो येच विदस्तत्र समागताः ।
त जचु "स्ताड़यत्येष भूतान् भूतपतेर्ब्बलात् ॥ २२ ॥
योशुः स्वान्तिकमाहूय तदा तानिदमब्रवीत् ।
"स्वयं दुष्टः कथं दुष्टमिह ताड़यितुं क्षमः ॥ २३ ॥
राज्यं चेत् प्रतिकूलत्वमाचरेत् क्वचिदात्मनः ।
कथं संस्थास्यते नाम तद्राज्यं सुस्थिरं चिरम् ॥ २४ ॥
यदि संजायते क्वापि गृहे वैरं परस्परम् ।
कथं संस्थास्यते नाम तद्गृहं सुस्थिरं चिरम् ॥ २५ ॥
तथा दुष्टोऽपि दुष्टस्य कुर्य्याच्चेत् प्रतिकूलताम् ।
नैव स्थास्यति दुष्टत्वं तस्य दुष्टात्मनश्चिरम् ॥ २६ ॥
न बद्ध्वादौ सुदुर्धर्षं बलवन्तं गृहाधिपम् ।
कथं तद्गृहवस्तूनां सम्भवेन्नाम लुण्ठनम् ॥ २७ ॥

ध्रुवमस्ति क्षमा लोके सर्व्वेषां पापकारिणाम् ।
पापात् पूतात्मनिन्दाया नचास्ति निष्कृतिः क्वचित् ॥ २८ ॥
यीशुमुद्दिश्य यश्चैच दुष्टात्मेति वचोऽवदन् ।
तेषामेव विबोधाय यीशुरेतद् वचोऽब्रवीत् ॥ २९ ॥
इत्येवं भाषमाणं तं सर्व्वलोकहितैषिणम् ।
उवाच वाक्यमागत्य कश्चित्तत्सम्मतो जनः ॥ ३० ॥
भ्रातृभिः सह ते माता गुरो द्वारेऽवतिष्ठते ।
वक्तुकामा त्वया सार्द्धं यथेष्टमनुमन्यताम् ॥ ३१ ॥
सोऽब्रवीन् मम का माता केच वा भ्रातरो मम ।
ममैते मातरः मिथ्या भ्रातरश्च मम प्रियाः ॥ ३२ ॥
यो ममाजमनादिंच तातं समनुतिष्ठते ।
स एव जननी भ्राता भगिनी च मम प्रिया ॥ ३३ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गभाषितख्रीष्टोपनिषदि तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः

St. Mark. Chapter 4. [ The parable of the sower and the meaning thereof. We must communicate the light of our knowledge to others. The parable of the seed growing secretly, and of the mustard seed. Christ stiileth the tempest on the sea. ]

पुनस्तद्दिवसे ख्रीष्टं सागरानूपसंस्थितम् ।
द्रष्टुकामा जनाः केचित् समाजग्मुस्तदन्तिके ॥ १ ॥
ततोनावं समारुह्य यीशुस्तत्रोपविष्टवान् ।
दृष्टान्तमधुरं वाक्यमब्रवीच्च तटस्थितान् ॥ २ ॥
"प्रयाति कृषकः क्षेत्रे शस्यबीजानि रोपितुम् ।
पतितानि पथःपार्श्वे तेषु बीजेषु कानिचित् ॥ ३ ॥

भक्षितानि ततस्तानि पक्षिसंघैरुपागतैः ।
अश्ममय्यां पुनस्तेभ्यः कानिचिन्न्यपतन् भुवि ॥ ४ ॥
विशुष्काणि रवेर्भाभिस्तानि जाताङ्कुराण्यपि ।
मूलाल्पत्वान्मृदोऽल्पत्वाज्जलाभावतयापिच ॥ ५ ॥
पतित्वा कण्टकाकीर्णभूमौ बीजानि कानिचित् ।
बभूवुरवसन्नानि वृक्षकण्टकबाधया ॥ ६ ॥
सुभूमौ पुनरन्यानि पतितानि विभागशः ।
सहकारिबलात् फेलुः शतशोऽथ सहस्रशः ॥ ७ ॥
दृष्टान्तोक्तिं समाश्रित्य यदिदं प्रोक्तवानहम् ।
शृण्वन्तु येषां कर्णोऽस्ति जनास्ते शुभबुद्धयः" ॥ ८ ॥
ततस्तं निर्जने स्थाने विलोक्य समवस्थितम् ।
उक्तदृष्टान्ततात्पर्यं पप्रच्छुः शिष्यदर्शकाः ॥ ९ ॥
स उक्तवान् परं तत्त्वं युष्मभ्यं प्रोक्तवानहम् ।
दृष्टान्तवचसान्येभ्यो व्यामिश्रवचमोच्यते ॥ १० ॥
"दृष्टाप्यमी यथा मूढा नावगच्छन्ति तत्त्वतः ।
श्रुत्वापि नैव मन्यन्ते यथा कामवशंगताः ॥ ११ ॥
परमानन्दलाभार्थं नावर्त्तन्ते यथा पुनः ।
यथा ते न विमुञ्चन्ति दृढं पापस्य बन्धनम् ॥" १२ ॥
ततोदृष्टान्ततात्पर्य्यावगता संशयं गतान् ।
शिष्यान् प्रोवाच तात्पर्य्यं दृष्टान्तवचसः प्रभुः ॥ १३
"य स्वर्गस्य कथां श्रुत्वा तत्त्वतो नावबुध्यते ।
श्रुतार्थं हरते तस्मात् पापात्मा कश्चिदागतः ॥ १४ ॥
प्रनष्टज्ञानविज्ञानस्तथा विभ्रान्तमानसः ।
सम्मूढोऽथं पथःपार्श्वे धरण्यां पतितोयथा॥ १५ ॥
यः श्रुत्वा परमं तत्त्वं दुःखैः समवसीदति ।
स्वल्पमृत्प्रस्तरप्राप्तबीजतुल्यः स मानवः ॥ १६ ॥
यो बुद्ध्वा परमं तत्वं संसारमनुधावति ।
यतते च न संसिद्धो मायाकण्टकबाधितः ॥

कण्टकक्षेत्रसम्भूतं हृच्चकण्टकनिर्जितम् ।
बीजं यथा तथा श्रेयो गुणहीनः स मानवः ॥ १७ ॥
श्रवणे मननेचैव मतिर्यस्य न हीयते ।
सत्यवाक् सत्यसङ्कल्पः स मे युक्ततमो मतः ॥ १८ ॥
खट्टाधो द्रोण्यधो वापि किं प्रदीपोऽवतिष्ठते ।
दीपाधारस्थितो नित्यं स प्रदीपो विराजते ॥ १९ ॥
न किञ्चिदावृतं तिष्ठेत् प्रकाशेताखिलं भुवम् ।
शृणोतु स इदं सर्व्वं यस्यास्ति श्रवणेन्द्रियम् ॥ २० ॥
शृण्वन्त्वे तद् भवन्तश्च मन्यन्ताञ्च पुनः पुनः ।
मननादिह लप्स्यन्ते श्रवणादधिकं फलम् ॥ २१ ॥
यस्यान्तर्निहितं तत्त्वं लप्स्यते सोऽधिकं फलम् ।
न मूढ़ो लप्स्यते किञ्चित् सर्व्वथासौ नशिष्यति ॥ २२ ॥
भूय एवानया वाचा स्वाराज्यमुपमीयताम् ।
क्षेत्रे वपति बीजानि यत्नतः कृषको यथा ॥ २३ ॥
नक्तन्दिवं प्रस्वपिति कामतश्च प्रबुध्यते ।
अथ तानि प्ररोहन्ति वर्द्धन्ते नच वेत्त्यसौ ॥ २४ ॥
प्राक् फलाभिगमाच्चैव ततो वसुमती स्वयम् ।
क्रमाच्चकुड्मलां मञ्जरीं च सफलां जनयत्यसौ ॥ २५ ॥
ततः शस्यप्रपाकान्ते कृषकः शस्यतत्त्ववित् ।
शस्यच्छेदनकालोऽयमिति मत्वा छिनत्त्यदः ॥ २६ ॥
सर्व्वथानुपमेयोऽयमीशः केनोपमीयते ।
नच दृष्टान्तवद्वाक्यं तं व्यनक्ति कथञ्चन ॥ २७ ॥
क्षुद्रसर्षपबीजेन स तथाप्युपमीयते ।
यत् क्षेत्रे सूक्ष्ममुप्तं यथाकालं प्रवर्द्धते ॥
शाखां यस्य समाश्रित्य परिश्रान्ताः पतत्रिणः ।
संप्राप्ता महतीं छायां विश्राम्यन्ति यथासुखम् ॥" २८ ॥
दृष्टान्तैः केवलं प्राह ताञ्जनान् स यथाश्रुति ।
स्वशिष्यान् निर्ज्जने स्थाने स्पष्टोक्त्या पुनरब्रवीत् ॥ २९ ॥

अथ नावं समारुह्य योशुः शिष्यसमन्वितः ।
मध्ये समुद्रमागत्य निद्रावशमुपागतः ॥ ३० ॥
ततः पवनसंक्षुब्धसागरोर्म्मिप्रकम्पिताम् ।
नावं दृष्ट्वा परां भीतिं संप्राप्ताः शिष्यसत्तमाः ॥ ३१ ॥
अथ सुप्तप्रबुद्धोऽसौ शिष्याणामार्त्तशब्दनैः ।
समुद्रं तर्जयामास वातं च परमात्मजः ॥ ३२ ॥
सागरः प्रकृतिं प्राप तत्क्षणात्तस्य तर्जनैः ।
प्रबलो मातरिश्वाच शान्तवेगः शिवो ववौ ॥ ३३ ॥
सम्बोध्य च ततः शिष्यानुवाच परमात्मजः ।
"कीदृशं वो भयं वत्सा विश्वासो वापि कीदृशः" ॥ ३४
ते श्रुत्वा वचनं तस्य भयेनातीव विह्वलाः ।
योशुमद्भूतकर्म्माणमस्तुवन्छिष्यसत्तमाः ॥ ३५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्गभाषितखीष्टोपनिषदि चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः

St. Mark. Chapter 5. [ Christ delivering the possessed of the legion of devils, they enter into the swine. He healeth the woman of the bloody issue, and raiseth from death Jairus his daughter. ]

ततोऽब्धेः परपारस्थां गादारीयभुवं गतम् ।
योशुं वीक्ष्यायर्यौ कश्चिद् भूतोन्मत्तः शवालयात् ॥ १ ॥
उवास शवगेहेऽसावबध्यः शृङ्खलादिभिः ।
अभिभूय जनान् सर्व्वान् करावोच्चैर्निरन्तरम् ॥ २ ॥
सोऽताड़यन्निजं देहं प्रस्तरैर्भीमदर्शनः ।
सर्व्वदास्त शवागारे तथाच गिरिकन्दरे ॥ ३ ॥

स दूरादभिदुद्राव वीक्ष्य योशुं परात्मजम्।
नत्वाच श्रद्धयाविष्ट इदमुच्चैर्व्वचोऽब्रवीत्॥ ४॥
"त्वया मे कोऽस्ति सम्बन्धो भो योशो परमात्मज।
ईशेन शापयामि त्वां नहि मां त्वं प्रपीड़य॥" ५॥
प्रोक्तस्तु योशु"नेत्यस्मान्नाम ते ब्रूहि मामिति"।
बहुत्वाद् वाहिनीर्संज्ञामात्मनः स न्यवेदयत्॥ ६॥
"यदि कश्चिदनुक्रोशो मयि ते परमात्मज।
मास्मात् स्थानाद् वहिः कार्षीस्तवाग्रे समवस्थितान्॥ ७॥
शूकरा विचरन्त्यत्र पुरतः पर्व्वतान्तिके।
नयास्मांस्तान् महाभाग निवसामो यथासुखम्॥ ८॥
तथास्त्विति समादिश्य स तथा कृतवान् प्रभुः।
आविशंस्तेऽयतात्मानो वेगेन शूकरव्रजम्॥ ९॥
शूकराश्च सहस्रे द्वे वेगात् सागरमाविशन्।
पलाय्य रक्षकाश्चैतत् पुरं गत्वान्यवेदयन्॥ १०॥
ते पुरो वहिरागत्य सर्व्वे नगरवासिनः।
तं भूतपीड़ितं शान्तं दद्दृशुर्योशुसन्निधौ॥ ११॥
अथ पौरजना भीताः श्रुत्वा सर्व्वं यथायथम्।
नत्वा तं देशसीमायाः परित्यागं ययाचिरे॥ १२॥
अथ नौकागतं क्रोष्टं भूतमुक्तः स मानवः।
ययाचे तस्य सान्निध्यं विनयेन समन्वितः॥ १३॥
योशुस्तं वारयित्वाह गच्छ त्वं स्वजनान्तिकम्।
त्वत्कृते प्रभुणा यद्यत् कृतं तत्तच्च घोषय॥ १४॥
तन्निशम्य प्रतस्थेऽसौ दिकापल्यां यथामति।
ज्ञापयामास कर्म्माणि प्रभुनानुष्ठितानिच॥ १५॥
अथोदधेः परं पारं प्राप्ते नावा परात्मजे।
जनौघाः पुनरागत्य समवेतास्तदन्तिके॥ १६॥
कश्चिद् यायीर नामाथ धर्म्माध्यक्षः समागतः।
योशोः पादद्वयं स्पृष्ट्वा भक्त्या तमिदमब्रवीत्॥ १७॥

भगवंस्त्यजति प्राणानवशा मम कन्यका ।
स्पृष्ट्वा तां करयुग्मेन त्वं जीवयितुमर्हसि ॥ १८ ॥
तेन सार्द्धं समुत्थाय योशौ शीघ्रं गते सति ।
पीड़ां तस्य समुत्पाद्यानुजग्मुर्बहवो जनाः ॥ १९ ॥
तस्मिन् काले समागत्य काचित् प्रदरपीड़िता
दुःखेन महता युक्ता प्रत्याख्याता चिकित्सकैः ॥
विश्वासमेकमाश्रित्य योशोर्वसनमस्पृशत् ।
तेनासौ तत्क्षणाज्जाता प्रकृतिस्था निरामया ॥ २० ॥
योशुर्ज्ञात्वात्मनः शक्तिमकस्माद् बहिरागताम् ।
शिष्यान् प्रोवाच "मद्वासः कोऽत्र संस्पृष्टवानि"ति ॥ २१ ॥
शिष्यास्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रुवन् ।
"न जानीमो जनौघे को भवन्तं स्पृष्टवानिति" ॥ २२ ॥
तच्छ्रुत्वा प्रतिबोधार्थं योशुर्हि तु निरैक्षत ।
तदा तं भक्तितो नत्वा सा नारी सर्व्वमब्रवीत ॥ २३ ॥
योशुस्तामब्रवीत् कन्ये विश्वासात्त्वं निरामया ।
सञ्जाता शान्तितो गच्छ चिरं तिष्ठ यथासुखम् ॥ २४ ॥
तदानीं केचिदागत्य धर्म्माध्यक्षस्य गेहतः ।
अब्रुवं "स्ते मृता कन्या क्लिश्नासि त्वं गुरुं कथम्" ॥ २५ ॥
योशुः प्रोवाच "माभैषीस्त्वं विश्वसिहि केवलम् ।
विश्वासाज्जायते दृष्टिः कर्म्मसिद्धिप्रकाशिनी" ॥ २६ ॥
इत्युक्त्वा केवलं पित्रं याकोवं च सयोहनम् ।
परिगृह्याभ्यगात् ख्रीष्टो धर्म्माध्यक्षनिकेतनम् ॥ २७ ॥
तत्र कोलाहलं श्रुत्वा दृष्ट्वा च क्रोशतो जनान् ।
"कथं रुदिथ" स प्राह "स्वपितीयं मृता नहि" ॥ २८ ॥
तद्वाक्यमुपहासाय तैर्जनैः परिकल्पितम् ।
योशुरेतत् परिज्ञाय जनान् सर्व्वान् निराकरोत् ॥ २९ ॥
पितृभ्यामथ कन्यायाः सङ्गिभिश्च समन्वितः ।
प्रविश्य बालिकागेहं स्पृष्ट्वा तां परमात्मजः ॥

"मम वाक्यात्त्वमुत्तिष्ठे"त्यब्रवीदुग्रतापसः ।
उत्थाय तत्क्षणात् साच विचचार जनान्तिके ॥ २० ॥
अलौकिकं तु तद् दृष्ट्वा जाताः सर्व्वेऽतिविस्मिताः ।
सचास्य गुप्तये प्रोच्य कन्यायै चान्नमादिशत् ॥ २१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरूपनिबद्धायां श्रीमन्मर्गभाषितख्रीष्टोपनिषदि पञ्चमोऽध्यायः ।

---

षष्ठोऽध्यायः

St. Mark. Chapter 6. [ Christ is contemned of his countrymen. He giveth the twelve power over unclean spirits. Divers opinions of Christ. John Baptist is beheaded, and buried. The apostles return from preaching. The miracle of five loaves and two fishes. Christ walketh on the sea ; and healeth all that touch him. ]

तस्माद्देशादपाक्रम्य प्रभुः शिष्यसमन्वितः ।
धर्म्मगेहं स्वदेशस्थं गत्वा ज्ञानं प्रदत्तवान् ॥ १ ॥
तज्ज्ञात्वा विस्मितास्तस्थुः सर्व्वे ग्रामनिवासिनः ।
योशुं च तर्कयामासुस्ते वचोभिर्जगत्प्रभुम् ॥ २ ॥
कुतोऽयं लब्धवान् ज्ञानं सहवाक्यैरलौकिकैः
किं नायं सौत्रधारिः स योशुर्म्मरियमात्मजः ॥ ३ ॥
किमेते भ्रातरो नास्य याकोबयोहनादयः ।
भगिन्यश्च किमेतस्य ग्रामेऽस्मिन्नहि संस्थिताः ॥ ४ ॥
इत्थं ते स्खलितास्तस्मिन् नापूपूजन् परात्मजम् ।
योशुर्ज्ञात्वाशयं तेषामिदं वचनमब्रवीत् ॥ ५ ॥
"स्वदेशात् स्वकुलाच्चैव वहिरासः प्रपूज्यते ।"
इत्युक्त्वा न प्रभुश्चक्रे तत्र कार्य्यमलौकिकम् ॥ ६ ॥

व्याधितान् मानवान् कांश्चित् कराभ्यां केवलं स्पृशन्।
प्रभुर्निरामयांश्चक्रे दयालुः परमात्मजः ॥ ७ ॥

स्वजनानामविश्वासात् स्वदेशाद्बहिरागतः।
पर्य्यटन् परितो ग्रामाञ् ज्ञानं तत्रोपदिष्टवान् ॥ ८ ॥

अथ द्वादश ताञ्छिष्यानाहूय परमात्मजः।
दिक्षु प्रेषितुमारेभे द्वौ द्वौ कृत्वा प्रचारवित् ॥ ९ ॥

स शक्तिमार्पयत् तेभ्यः शासनायायतात्मनाम्।
इदञ्चाज्ञापयद् धीमान् विशेषमनुशासनम् ॥ १० ॥

"युष्माभिः केवलं यष्टिर्यात्रायामिह गृह्यताम्।
मुद्राः पूपादयो वर्ज्या भिक्षाधारादयस्तथा ॥ ११ ॥

पादयोः सन्निबद्धव्ये काष्ठनिर्म्मितपादुके।
शरीरादतिरिक्तैव परिधेयेऽह केवलम् ॥ १२ ॥

यत्रैव कस्यचिद् गेहं विशेत स्थितिहेतवे।
पुनःप्रस्थानपर्य्यन्तं तिष्ठेत तस्य सद्मनि ॥ १३ ॥

यो यत्र वो न गृह्णन्ति नच शृण्वन्ति वो वचः।
तत्कृते साक्षिणः सन्तु धूता वः पादरेणवः ॥ १४ ॥

स देशश्चरमे कालेऽधिकं दण्डं सहिष्यते।
सदोमघोमराभ्यांच सत्यमेतद् वदाम्यहम् ॥ १५ ॥

ततस्ते प्रस्थिताः शिष्या यीशोरादेशमाश्रिताः।
सर्व्वत्र घोषयामासुश्चित्तशुद्धेः प्रकृष्टताम् ॥ १६ ॥

भूतान् निःसारयामासुस्तैलस्य मर्द्दनेन च।
प्रशान्तिं गमयामासुर्व्याधिग्रस्तान् बहून् नरान् ॥ १७ ॥

हेरोदोऽभाषताकर्ण्य यीशोः ख्यातिं महीयसीम्।
"योहनःस्नापकः सर्व्वं करोतीदं मृतोत्थितः" ॥ १८ ॥

अन्ये तमेलियं प्राहुरासं तमपरे जगुः
भाविन सदृशं केचित्तं प्राहुश्च मनीषिणः ॥ १९ ॥

हेरोदो मैवमित्याह योहनः स समुत्थितः।
यहं कारागृहे यस्य शिरश्छेदमकारयम् ॥ २० ॥

हेरोदो बन्धयित्वाच योहनं ज्ञानिनां वरम् ।
भ्रातृजायाविनिर्देशात् कारागारे समार्पयत् ॥ २१ ॥
हेरोदियाभिधानाया भार्य्याया भ्रातुरात्मनः ।
पतित्वं त्वविधेयं स्यादिति तं योहनोऽब्रवीत् ॥ २२ ॥
हेरोदिया तदाकर्ण्य योहनस्य वचोऽप्रियम् ।
योहनं हन्तुमिच्छन्ती नाशक्नोद्‌ राजबाधया ॥ २३ ॥
हेरोदो धार्म्मिकं मेने पवित्रं चैव योहनम् ।
तेन तस्याः सदा भीतस्तमरक्षन्नराधिपः ॥ २४ ॥
अकरोद् बहुकार्य्याणि नृपतिर्योहनाज्ञया ।
वाक्याणि च तदुक्तानि परया श्रद्धयाग्रहीत् ॥ २५ ॥
अथ जन्मदिने राज्ञो राजकीये महोत्सवे ।
अतिथीनां कृते राजा नैशभोज्यमकल्पयत् ॥ २६ ।
हेरोदियासुता तत्र नृत्यन्ती सदसि स्थिता ।
राज्ञो राजातिथीनांच प्रीतिं समुदपादयत् ॥ २७ ॥
तेनातिप्रीतिमान् राजा तामुवाच प्रतिज्ञया ।
यथेच्छं वरमन्विच्छ राज्यार्द्धमपि वा मम ॥ २८ ॥
सा मातुराज्ञया कन्या श्रुत्वा राज्ञः प्रतिश्रुतिम् ।
ययाचे मस्तकं छिन्नं योहनस्य तपस्विनः ॥ २९ ॥
तेनातिदुःखितो राजा वरदानमनुस्मरन् ।
सभ्यानांचाशयं वीक्ष्य शिरश्छेदं समादिशत् ॥ ३० ॥
पवित्रं योहनस्याथ छित्वा कारागृहे शिरः ।
पात्रे कृत्वा ददौ तस्यै साच मात्रे समार्पयत् ॥ ३१ ॥
ततः शिष्याः समागत्य योहनस्य तपस्विनः ।
शरीरं निदधुस्तस्य शवागारे विनश्वरम् ॥ ३२ ॥
अथ संप्रेषिताः शिष्या अभ्येत्य परमात्मजम् ।
तस्मै निवेदयामासुः स्वानि कर्म्माण्यशेषतः ॥ ३३ ॥
यीशुर्जनौघमालोक्य शिष्यांश्चाकृतभोजनान् ।
कस्मिंश्चित् संवृते स्थाने विश्रामाय समादिशत् ॥ ३४ ॥

निर्जनं स्थानमुद्दिश्य ततस्ते नौकया ययुः ।
जनौघा स्तदभिप्राय द्रुतं तत्र समाययुः ॥ ३५ ॥
मेषानिव जनान् वीक्ष्य रक्षकेन विना स्थितान् ।
योशुस्तेभ्यो ददौ शिक्षां कारुण्यात् परमात्मजः ॥ ३६ ॥
ततस्तमुपसङ्गम्य शिष्या वचनमब्रुवन् ।
"इदं सुनिभृतं स्थानं भास्करोऽस्तमुपागतः ॥
सन्ध्या समागता घोरा ग्रामं यान्त्वागता जनाः ।
क्रीणन्त्वभ्यवहार्य्याणि क्रयालयमुपागताः" ॥ ३७ ॥
योशुः प्राह "नगन्तव्यमितोऽन्यत्र समागतैः ।
इहैव भोजनं तेषां युष्माभि रुपकल्प्यताम्" ॥ ३८ ॥
तेऽब्रुवन् "पादमुद्राणां द्विशतैः किं क्रयालयात् ।
पूपान् क्रीत्वा प्रदास्याम एतेभ्यो भोजनं वयम्" ॥ ३९ ॥
सोऽवदत् सन्ति वः पूपाः कति गत्वा प्रपश्यत ।"
"मीनौ द्वौ पञ्च पूपाश्च सन्ति"ते सममब्रुवन् ॥ ४० ॥
ततोवैदूर्य्यवर्णेषु तृणेषु प्राङ्गणेषु च ।
सर्व्वेषामादिशद् धीमान् पङ्क्त्या पङ्क्त्योपवेशनम् ॥ ४१ ॥
ततः शतशयार्द्धाभ्यां संख्यातास्ते समागताः ।
पङ्क्तिभिः सुविभक्ताश्च भोजनार्थमुपाविशन् ॥ ४२ ॥
तान् पूपान् मीनकौ तौच संगृह्य परमात्मजः ।
स्वर्गमालोकयन् धीमानूर्द्ध्वं प्रणिहितेक्षणः ॥
आशीर्व्वचनमुच्चार्य्य कृतवांस्तांश्च खण्डशः ।
अतिथिभ्यश्च दानाय शिष्यानाज्ञापयत् प्रभुः ॥ ४३ ॥
अवाप्नुवन् परां तृप्तिं भुक्त्वा भोज्यानि मानवाः ।
शिष्या द्वादश शिष्टानि डल्लकानि समादधुः ॥
मत्स्यानामवशिष्टानां कियतः शकलांस्तथा ॥ ४४ ॥
पुरुषास्तत्र भोक्तारः पञ्चसाहस्रसंख्यकाः ॥ ४५ ॥
विसृज्याथ जनान् सर्व्वान् योशुस्तानिदमब्रवीत् ।
"तरित्वा सागरं नावा यूयं गच्छत वैत्सदाम्" ॥ ४६ ॥

इत्युक्त्वा गिरिमारुह्य प्रार्थनां कृतवान् प्रभुः ॥ ४७ ॥
अथ तीरं गते तस्मिन् नौकाब्धेर्मध्यमागता ॥
पुरोवातसमुद्भुतसागरोर्म्मिसमाकुला ॥ ४८ ॥
शिष्याणामभवत् क्लेशस्तरणोपरिचालने ॥
तदालोक्य विभावर्य्याश्चतुर्थप्रहरे प्रभुः ।
सागरोपर्य्यभिक्रम्य तेषामन्तिकमाययौ ॥ ४९ ॥
तस्मिञ्छिष्यानतिक्रम्य सहसा गन्तुमुद्यते ।
अपच्छायेति चुक्रुशुस्ते सर्व्वे भीतिविह्वलाः ॥ ५० ॥
शीघ्रं सम्बोध्य शिष्यान् स एतद्वचनमब्रवीत् ।
"मा भैष्टायमहं वत्साः समाश्वसित सुव्रताः" ॥ ५१ ॥
ततः स नावमारूढो मातरिश्वा शशामंच ।
ते सर्व्वे विस्मितास्तस्थु यीशोरैशप्रभावतः ॥ ५२ ॥
पूर्व्वं दृष्टापि पूपानां व्यापारं जडबुद्धयः ।
ते विज्ञातुं न शक्तास्तं तेनेदं कृतवान् प्रभुः ॥ ५३ ॥
ततोनावं बबन्धुस्ते गिनेशरदमागताः ।
यीशुं तत्र समालोक्याजग्मुश्च बहवोजनाः ॥ ५४ ॥
पर्य्यङ्के स्थापयित्वाचानिन्युरस्तत्रामयार्द्दितान् ।
नगरे निगमे ग्रामे प्राविशद् यत्र स प्रभुः ॥ ५५ ॥
ततोरुग्नाः परिस्पृश्य यीशोर्व्वस्त्रप्रलम्बकम् ।
लेभिरे परमं शर्म्म जाताः सर्व्वे निरामयाः ॥ ५६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्ग भाषितख्रीष्टोपनिषदि षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः

St. Mark. Chapter 7. [The Pharisees find fault at the disciples for eating with unwashen hands. They break the commandment of God by the traditions of men. Meat defileth not the man. He healeth the Syrophenician woman's daughter of an unclean spirit, and one that was deaf, and stammered in his speech.]

अथ तं द्रष्टुमिच्छन्तः समाजग्मुस्तदन्तिके ।
यिरूशालेमतः केचित् सोपाध्यायाः फरोशिनः ॥ १ ॥
ततश्चाधौतहस्तेन भुञ्जानाञ्शिष्यसत्तमान् ।
समालोक्य निनिन्दुस्ते सदाचारपरायणाः ॥ २ ॥
प्राचीनाचारसम्पन्ना योहूदीयाः फरीशिनः ।
नहि खादन्ति भक्ष्याणि हस्तप्रक्षालनं विना ॥ ३ ॥
हट्टादागत्यचास्नात्वा नभुञ्जन्ते कदाचन ।
तैजसानि घटादीनि नित्यं प्रक्षालयन्ति च ॥ ४ ॥
योशुख्रीष्टमपृच्छंस्ते सोपाध्यायाः फरीशिनः ।
"लङ्घयन्ति भवच्छिष्याः प्राचीनानां विधिं कथम् ॥ ५ ॥
अप्रक्षाल्य कथं हस्तमश्नन्तीमे विदां वराः ।"
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ६ ॥
"भवतामवबोधार्थं मायोपहतचेतसाम् ।
यिशायाह्वोऽवदद्वाक्यमिदं लोकचरित्रवित् ॥ ७ ॥
'वाक्छलैर्विदधत्येते मत्तुष्टिं छद्मचारिणः ।
मनसा मां विनिन्दन्ति दूरात् परिहरन्तिच ॥ ८ ॥
व्यर्थेनाध्यवसायेन ध्यायन्तोमामुपासते ।
धर्म्मोपदेशव्याजेन लोकोक्तिमनुशासति" ॥ ९ ॥
विहाय परमेशाज्ञां शिक्षामाश्रित्य लौकिकीम् ।
प्रक्षालयथ पात्राणि कुरुथान्याः क्रियास्तथा ॥ १० ॥
इत्थं परम्पराप्राप्ताचारसंस्थितिहेतवे ।
विलङ्घ्यन्ते भवद्भिस्तु परमेश्वरदेशना ॥ ११ ॥

तनया येऽवजानन्ति मातरं पितरं तथा ।
मोशिराज्ञोपयत्तेषां मृत्युरदण्डमसंशयम् ॥ १२ ॥
युष्माभिस्तूच्यते नास्ति कर्त्तव्यं पितरौ प्रति ।
पितृभ्यां देयमासीद्यदीश्वराय तदर्पितम् ॥ १३ ॥
इत्थं परम्पराप्राप्तैर्लौकिकैर्व्बहुकर्म्मभिः ।
युष्माभिः परमेशाज्ञा नित्यमेव विलङ्घ्यते ॥ १४ ॥
ततः प्रभुः समाहूय जनान् सर्व्वान् समागतान् ।
उवाच "श्रूयतां वाक्यंममेदं मन्यतां तथा ॥ १५ ॥
तन्नरं नाशुचिं कुर्य्याद्याति यत्तस्य कोष्ठके ।
कोष्ठाद्यत्तविनिर्याति तत् कुर्य्यादशुचिं नरम्" ॥ १६ ॥
ततो जनालयात्तस्मिन् गृहमध्यं समागते ।
तस्य वाक्यस्य तात्पर्य्यं पप्रच्छुः शिष्यसत्तमाः ॥ १७ ॥
स उवाच "किमेतस्य तात्पर्य्यं नावगच्छथ" ।
अत्र विप्रतिपन्नाश्चेच्छृणवन्तु कथयाम्यहम् ॥ १८ ॥
यद्वस्तुजातं देहस्य मध्यं विशति वाह्यतः ।
नरं तदशूचिं कर्त्तुं न शक्नोति कदाचन ॥ १९ ॥
न याति हृदयं तत्तु केवलं याति तूदरम् ।
तत्रोष्मणा मलीभूतं वर्च्चःस्थानं प्रयाति च ॥ २० ॥
यन्नरेभ्यो वहिर्याति तदेति हृदयाद्ध्रुवम् ।
हृदयं मनसः स्थानं तनुते कल्मषं मनः ॥ २१ ॥
नरहत्यादिभिः पापैर्लिप्यन्ते मानवास्ततः ।
अशौचकारणं तस्मादशुद्धं मन उच्यते ॥ २२ ॥
ततो योशुः समुत्थाय सोरां सीदोनसोरयोः ।
अभ्येत्यालक्षितः स्थातुं कस्यचिद् गृहमाविशत् ॥ २३ ॥
जात्याथ सुरफैनीकी काचिद्यूनानदेशजा ।
स्वकन्यार्थं समागत्य तं प्रणमैयदमब्रवीत् ॥ २४ ॥
"भगवन् मामिका कन्या भूतापस्मारपीड़िता ।
भूतं तस्या विनिःसार्य्य तां कुरु त्वं निरामयाम्" ॥ २५ ॥

"प्रथमं मम सन्तानाः प्रीयन्ता"मिति सोऽब्रवीत्।
"नहि सन्तानभक्ष्याणि कुक्कुरोभोक्तुमर्हति॥" २६॥
तस्य तद्वाक्यमाकर्ण्य सा योषिदिदमब्रवीत्।
"सन्तानोच्छिष्टद्रव्याणि भुङ्क्ते श्वापि न किं प्रभो" ॥ २७॥
यीशुस्तामब्रवीद्वत्से याहि शीघ्रं निजालयम्।
द्रक्ष्यसि त्वद्वयेच्छया तव कन्यां निरामयाम्" ॥ २८॥
ततः सा परमप्रीता गत्वा शीघ्रं निजालयम्।
ददर्श सुस्थितां कन्यां शयानां भूतवर्जिताम्॥ २९॥
अतिक्रम्य ततः सीमां यीशुः सोदोनसोरयो।
दिकापलग्रास्तु मध्येन गालीलाब्धितटं गतः॥ ३०॥
जनास्तत्रैकमानीय बधिरं गद्गदस्वरम्।
यीशोर्हस्तार्पणं तस्य देहे नत्वा ययाचिरे॥ ३१॥
गृहीत्वाथ जनौघात्तं स्थापयित्वा च निर्जने।
स्वाङ्गुलीः कर्णयोस्तस्य निधाय परमात्मजः॥
निष्ठीवंश्चोर्द्ध्वमालोक्य स्वर्गप्रणिहितेक्षणः।
"मुच्यस्वे"ति वदंस्तस्य जिह्वां पस्पर्श पाणिना॥ ३२॥
तेनापुः प्रकृतिं तस्य जिह्वा श्रोत्रे च तत्क्षणात्।
स्पष्टया शुद्धया वाचा स वक्तुमशकत्ततः॥ ३३॥
ततः सर्व्वान् समाहूय यीशुरभ्यागताञ्जनान्।
"नेदं कुत्रापि वक्तव्य"मिति तानादिशत् प्रभुः॥ ३४॥
यत्र यत्र न्यषेधत् स कथनाय परात्मजः।
सकलं तत्र तत्रैव जनाः कार्य्यमघोषयन्॥ ३५॥
अतीव विस्मिताः सर्व्वे वाक्यमेतत् समब्रुवन्।
"अयं सम्पादयामास सर्व्वमेतद्यथायथम्॥ ३६॥
शब्दश्रवणसामर्थ्यं बधिराय प्रदत्तवान्।
ददौ कथनसामर्थ्यं मूकाय स्वप्रभावतः" ॥ ३७॥

इति श्रीताराचरणचक्रवर्त्तिकर्दमगणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गभाषितख्रीष्टोपनिषदि सप्तमोऽध्यायः।

## अष्टमोऽध्यायः

St. Mark., Chapter 8. [Christ feedeth the people miraculously, refuseth to give a sign to the Pharisees; admonisheth his disciples to beware of the leaven of the Pharisees, and of the leaven of Herod; giveth a blind man his sight; acknowledgeth that he is the Christ, who should suffer and rise again; and exhorteth to patience in persecution for the profession of the gospel ]

अथाभुक्ताञ्जनान् सर्व्वानालोक्य परमात्मजः ।
कृपया परयाविष्टः स्वशिष्यानिदमब्रवीत् ॥ १ ॥
"वत्सा दिनत्रयं यावदेतेऽभ्यागतमानवाः ।
मम सङ्गं न मुञ्चन्ति त्यक्तसर्व्वपरिग्रहाः ॥ २ ॥
एषां न सन्ति भक्ष्याणि केचिद्दूरात् समागताः ।
अभुक्ता यदि गच्छेयुर्भवेयुः पथि मूर्च्छिताः" ॥ ३ ॥
शिष्या ऊचु"रिदं स्थानमत्यन्तं निर्जनं गुरो ।
पूपान् क्रीत्वा कुतः कोऽत्र जनानेतान् प्रतर्पयेत्" ॥ ४ ॥
योशुस्तानवदत् "पूपाः सन्ति वः कति साम्प्रतम् ।"
ते प्राहुः "सन्ति नः पूपा इह सप्तैव केवलम्" ॥ ५ ॥
उपवेशनमादिश्य जनानां मृत्तिकोपरि ।
पूपान् विभज्य मन्त्रेण शिष्येभ्यो दत्तवान् प्रभुः ॥ ६ ॥
कतिचित् क्षुद्रमत्स्यांश्च शिष्यदत्तान् परात्मजः ।
पूर्व्ववत् खण्डशः कृत्वा प्रदानाय समादिशत् ॥ ७ ॥
कामं चतुःसहस्राणि तत्रपुस्तत्र मानवाः ।
शिष्याः समादधुः शिष्टान् गृहीत्वा सप्तपेटकान् ॥ ८ ॥
ततस्तान् विसृजंस्तत्र सह शिष्यैः परात्मजः ।
आययौ नौकया स्थानं दाल्मानुथेति नामकम् ॥ ९ ॥
विवादं योशुना सार्द्धं तत्रारभ्य फरीशिनः ।
ऊचुः "प्रकाशयाकाशे स्वीयमैश्वरलक्षणम्" ॥ १० ॥
योशुर्जगाद निःश्वस्य "चिह्नमाधुनिकाः कथम् ।
याचन्ते वस्तुतश्चिह्नं नकिञ्चिद्दर्शयाम्यहम्" ॥ ११ ॥

इत्युक्त्वा तान् परित्यज्य सशिष्यः परमात्मजः ।
तत्क्षणाद्भावमाकृष्य परं पारमुपागतः ॥ १२ ॥
तदानीमेक एवासीत् पूपस्तच्छिष्यसन्निधौ ।
विस्मृत्य नानीताः पूपा यत स्तैर्नावमागतैः ॥ १३ ॥
यीशुस्तानवदत्स्थेयं युष्माभिर्दूरतः सदा ।
किण्वात् फरीशिनां तावद्धेरोदस्य च किण्वतः ॥ १४ ॥
एतद् वचनतात्पर्य्यं तर्कयन्तः परस्परम् ।
न पूपाः सन्ति नोऽत्रेति शिष्यास्तं सममब्रुवन् ॥ १५ ॥
यीशुस्तेषां मनोभावं ज्ञात्वा संशयदूषितम् ।
सन्देहपरिहारार्थमिदं वचनमब्रवीत् ॥ १६ ॥
"अज्ञात्वा मम माहात्म्यं तर्कयन्तः परस्परम् ।
अभावं भक्ष्यपूपानां विज्ञापयथ मां कथम् ॥ १७ ॥
किमज्ञत्वाज्जड़त्वाद्वा बुद्धेर्मां नावगच्छथ ।
न किं शृणुथ सश्रोत्राः सनेत्राः किं न पश्यथ ॥ १८ ॥
पञ्च पूपानहं भङ्क्त्वा पञ्चसाहस्रभुक्तये ।
दत्तवानिति किं यूयं नैव स्मरथ चेतसा ॥ १९ ॥
भग्नांशैः परिपूर्णानि डल्लकानि तदा कति ।
उद्धृत्य स्थापितानीति स्मृत्वा मां ब्रूत तत्त्वतः" ॥ २० ॥
"आसन् द्वादशसंख्यातुडल्लकानीति तेऽब्रुवन् ।
तेषां तद्वाक्यमाकर्ण्य यीशुस्तान् पुनरब्रवीत् ॥ २१ ॥
"सप्त पूपानहं भङ्क्त्वा चतुःसाहस्रभुक्तये ।
दत्तवानितिचावश्यं स्मरथेह स्मृतिर्यदि ॥ २२ ॥
भग्नांशैः परिपूर्णाश्च तदासन् पेटकाः कति ।
इति मां तत्त्वतो ब्रूत स्मृत्वा सर्व्वं यथायथम्" ॥ २३ ॥
"आसंश्च पेटका सप्त" यदा ते सममब्रुवन् ।
"कथं तर्हि न जानीथ" यीशुस्तानवदत्तदा ॥ २४ ॥
यीशौ ततोविनिर्याय सशिष्ये वैत्सदां गते ।
अन्धस्य कस्यचिद्देहे तत्स्पर्शो याचितोजनैः ॥ २५ ॥

योशुस्तस्य करं धृत्वा नीत्वाच ग्रामतो बहिः।
निष्ठीव्य नेत्रयोस्तस्य स्पृष्ट्वा तं पृष्टवानिदम्॥ २६॥
"किमत्र तव चक्षुर्भ्यां सौम्य त्वं परिपश्यसि।"
प्रोक्तवान् स इदं वाक्यमूर्द्धं प्रणिहितेक्षणः॥ २७॥
"पश्यामि मानवानेतांश्चरतः पादपानिव।"
योशुस्तद्वाक्यमाकर्ण्य तन्नेत्रे पुनरस्पृशत्॥ २८॥
तेनासौ लब्धवान् दृष्टिं सुस्थिरामान्ध्यवर्जिताम्।
यथावदचिरात् स्पष्टंचापश्यत् सर्व्वमानवान्॥ २९॥
योशुस्तमब्रवीत् "सौम्य गच्छ गोत्रं निजालयम्।
इदं कमपि मावोचो नगरीमपि मा गमः" ॥ ३०॥
तस्मात् स्थानाद् विनिर्याय योशुः शिष्यसमन्वितः।
कैसरीयफिलीपाख्यं नगरं गतवान् प्रभुः॥ ३१॥
पथि शिष्यान् समाहूय पप्रच्छेदं परात्मजः।
"तत्ततो ब्रूत तत्सर्व्वं मानवाः किं वदन्ति माम्" ॥ ३२॥
ते प्रोचु "स्त्वां वदन्त्येके स्नापकं योहनं प्रभो।
केचिदेलियमप्याहुरपरमन्ये वदन्ति च" ॥ ३३॥
सोऽब्रवीच्"छ्रोतुमिच्छामि युष्माकमवधारणम्।"
तस्य तद्वाक्यमाकर्ण्य पितरो वचनमब्रवीत्॥ ३४॥
"यमामनन्ति शास्त्राणि चेतनामयमीश्वरम्।
तस्य पुत्रोभवान् ख्रीष्टो ध्रुवैषा मामकी मतिः॥ ३५॥
तस्य तद्वचनं श्रुत्वा योशुस्तमिदमादिशत्।
"मा वोचो मम वृत्तान्तमिमं कमपि मानवम्" ॥ ३६॥
ततः प्रभृति शिष्याणां बोधाय परमात्मजः।
आत्मनो दुःखमाश्रित्य समारेभे कथामिमाम्॥ ३७॥
"अतः परं महद्दुःखं लप्स्यते मानवात्मजः।
तद्दुःखं जनयिष्यन्ति वृद्धोपाध्याययाजकाः॥ ३८॥
तेच तं घातयिष्यन्ति प्रत्याख्याय जनान्तिके।
स तृतीयदिने मृत्योः पुनरुत्थास्यति स्वयम्" ॥ ३९॥

तच्छ्रुत्वान्तिकमानीय तं पित्रोऽतर्जयद्भृशम् ।
योशुस्तं प्राह "याहि त्वमीशेच्छां बाधसे यतः ॥ ४० ॥
यदि मां मम भक्तेषु कश्चिदन्वेतुमिच्छति ।
सोऽभिमानं परित्यज्य सक्रुशो मामनुव्रजेत् ॥ ४१ ॥
प्राणेषु वासना यस्य स प्राणान् परिहास्यति ।
प्राणेभ्यो न वियुज्येत मदर्थे त्यक्तजीवितः ॥ ४२ ॥
इदं कृत्स्नं जगल्लब्ध्वा प्राणेभ्यश्चेद् वियुज्यते ।
किं लब्धं तेन वा प्राणप्राप्तये किं प्रदास्यते ॥ ४३ ॥
पापात्मानो नरा येच येच वा व्यभिचारिणः ।
मां वा मम मतं वापि नानुतिष्ठन्ति लज्जया ॥ ४४ ॥
तदाहं तान् वदिष्यामि मानवान्निरपत्रपान् ।
यदाहं संभविष्यामि स्वर्गराज्ये प्रतापवान् ॥ ४५ ॥
य इमेऽवस्थिताः शिष्या निरता ज्ञानकर्म्मणोः ।
मृत्युं तेऽतितरिष्यन्ति सत्यमेतद् वदाम्यहम्" ॥ ४६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मसीहभाषित-ख्रीष्टोपनिषदि अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः

St. Mark. Chapter 9. [Jesus is transfigured. He instructeth his disciples concerning the coming of Elias : casteth forth a dumb and deaf spirit ; foretelleth his death and resurrection ; exhorteth his disciples to humility : bidding them not to prohibit such as be not against them, nor to give offence to any of the faithful.]

अतीतेषु ततः षट्सु दिवसेषु परात्मजः ।
त्रिभिः परिवृतः शिष्यैः पितरयाकोबयोहनैः ॥
गिरिमेकान्तमारुह्य दिव्यदेहं समाश्रितः ।
अलौकिकप्रभो भूत्वा शुभ्रवासा व्यराजत ॥ १ ॥

मोश्रिराविरभूत्तेषामेलियेन सहात्मवान् ।
तावुभौ योशुना सार्द्धमालापमपि चक्रतुः ॥ २ ॥
पित्रो योशुं तदोवाच "स्थितिस्यादत्र नः शुभा ।
कृतेऽत्रभवतामत्र निर्म्मामः कुटिरत्रयम् ॥ ३ ॥
भवदीयं भवत्येकं मोशिरेकं तथा विभोः ।
एलियस्य तथैकं स्यादत्र का भवतो मतिः" ॥ ४ ॥
तदैवाविरभूदेकं शुभ्रजीमूतखण्डकम् ।
भेजि तांश्छायया सर्व्वांस्तच्च खे सहसोत्थितम् ॥ ५ ॥
इयमप्युत्थिता वाणी "शृणुतास्यानुशासनम् ।
अयं मम प्रियः पुत्रः प्रीतिरस्मिन् सदा मम" ॥ ६ ॥
गिरेरधः समेत्याथ सशिष्यः परमात्मजः ।
आत्मनो गुप्तिमाश्रित्य स्वशिष्यानिदमब्रवीत् ॥ ७ ॥
"यदेतद्दर्शनं लब्धं भवद्भिर्भावितात्मभिः ।
कुत्रापि तन्न वक्तव्यं यावन्मृत्योर्म्ममोत्थितिम् ॥ ८ ॥
ते मृतोत्थितितात्पर्य्यं तर्कयन्तः परस्परम् ।
अज्ञात्वा तत्र सिद्धान्तं पप्रच्छुः परमात्मजम् ॥ ९ ॥
"उपाध्याया जगुः पूर्व्वं भगवन्नेलियागतिम् ।"
"विद्वद्भिः सत्यमेवोक्त"मिति तान् योशुरब्रवीत् ॥ १० ॥
"भगवानेलियोऽभ्येत्य समस्तं संस्करिष्यति ।
दुःखं मनुष्यपुत्त्रस्तु लप्स्यते श्रुतिशासनात् ॥ ११ ॥
यथाश्रुति समागत्य भगवानेलियो गतः ।
ये यथेषुस्तथा चेरुस्तं समुद्दिश्य वस्तुतः" ॥ १२ ॥
समीपमथ शिष्याणां समागत्य स दृष्टवान् ।
पण्डिताञ्जनसंघांश्च सह शिष्यैः प्रजल्पतः ॥ १३ ॥
तं तत्रागतमालोक्य जनसङ्घाः ससंभ्रमम् ।
उत्थाय स्वस्तिवादेन तं प्रणम्याभ्यवादयन् ॥ १४ ॥
स शास्त्राध्यापकानाह "ममान्तेवासिभिः सह ।
कं नाम पक्षमाश्रित्य प्रजल्पथ परस्परम्" ॥ १५ ॥

तस्मिन् कालेऽवदत् कश्चिज्जनसंघस्थितो नरः ।
भगवन् रोगमुक्त्यर्थमानीतो मम पुत्रकः ॥ १६ ॥
स मूकेनात्मनाविष्ट एषोऽग्रे तव तिष्ठति ॥ १७ ॥
यदासौ संश्रयेदेनं परिघर्षेद्बलात्तदा ।
दण्डवत् कठिनं चास्य शरीरमुपजायते ॥ १८ ॥
दन्तैर्घर्षति दन्तांश्च फेनोद्गमो भवत्यपि ।
तस्य निःसारणायाहं त्वच्छिष्येभ्यो न्यवेदयम् ॥ १९ ॥
बहुशो यतमानास्ते न तं ताड़यितुं क्षमाः ।
यीशुस्तानवदच्छिष्यान् श्रद्धारहितमानसान् ॥ २० ॥
"कियत् कालं सहिष्येऽहं युष्माकं शक्तिहीनताम् ॥"
यीशोरादेशतस्तेऽथ तं तस्यान्तिकमानयन् ॥ २१ ॥
असावात्मापि तं दृष्ट्वा क्षिप्रं बालमधर्षयत् ।
स तेन पीड़ितो बालो मूर्च्छितो न्यपतद्भुवि ॥ २२ ॥
फेनिलामुद्वमँल्लालां देहं क्षिप्त्वा लुलोठ च ॥ २३ ॥
"क्लिश्यतेऽयं कियत्काल" मितिजिज्ञासितस्तदा ।
यीशुना तत्पितावादो"दैतस्याशैशवा"दिति ॥ २४ ॥
स आत्माग्नौ जलेचैनं बहुकृत्वो दुरत्ययः ।
विनिहन्तुं निचिक्षेप रक्षैतं त्वं क्षमो यदि" ॥ २५ ॥
यीशुस्तमवदत् "सौम्य सामर्थ्यं किं विकल्पसे ।
सर्व्वमेव हि विश्वासात् पृथिव्यां याति साध्यताम्" ॥ २६ ॥
तन्निशम्याश्रुपूर्णाक्षः स जगादैदमुच्चकैः ।
"विश्वसिम्यहमेषोऽत्राविश्वासं मेऽपसारय" ॥ २७ ॥
यीशुस्ततः समालोक्य द्रुतमागच्छतो जनान् ।
मलिनात्मानमाहूय तर्जयित्वेदमब्रवीत् ॥ २८ ॥
"रे मूक बधिरात्मंस्त्वं निर्गच्छास्मान्ममाज्ञया ।
शरीरं पुनरेतस्य मा विश त्वं कदाचन" ॥ २९ ॥
स तस्य शासनादात्मा क्रोशित्वा भृशमुच्चकैः ।
निपीड्य बालदेहंच निःससार बहिस्तदा ॥ ३० ॥

तेनासौ मृतवद्बालः पपात धरणीतले ।
"अयं बालो ममारे"ति प्रोचुश्च बहवो जनाः ॥ ३१ ॥
योशुरुत्थापयामास तं धृत्वा निजपाणिना ।
उदतिष्ठत्तदा बालः सचेताः प्रकृतिं गतः ॥ ३२ ॥
ततः सम्मिलिताः शिष्या योशुं भवनमागतम् ।
अशक्तेः कारणं स्वेषां पप्रच्छुर्भूततोडने ॥ ३३ ॥
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
"ईदृशा अपसर्पन्ति ध्यानेनानशनेन च ॥ ३४ ॥
तस्मात् स्थानाद्विनिर्गत्य योशुः शिष्यसमन्वितः ।
संरक्षन्नात्मनो गुप्तिं गालोलेन विनिर्ययौ ॥ ३५ ॥
स एतदात्मनः शिष्याननेकश उपादिशत् ।
"यन्मनुष्यात्मजोऽर्प्येत मनुष्याणां करे ध्रुवम् ॥ ३६ ॥
स धृतो विनिहन्येत नरैर्दुष्कृतकारिभिः ।
तृतीयदिवसे मृत्योः पुनरुत्थास्यति ध्रुवम्" ॥ ३७ ॥
एतद्वचनतात्पर्यं तच्छ्रुत्वा बोद्धुमक्षमाः ।
न पुनः परिपप्रच्छुस्तं भयाकुलचेतसः ॥ ३८ ॥
ततः कफरणाहूमागत्य परमात्मजः ।
गृहमध्यं समागम्य स्वशिष्यान् पृष्टवान् प्रभुः ॥ ३९ ॥
"वादाः सप्रतिवादाः के युष्माभिः पथि जल्पिताः" ।
उत्तरं तस्य वाक्यस्य न किञ्चिदपि तेऽवदन् ॥ ४० ॥
श्रेष्ठत्वविषये तेषां वादं ज्ञात्वा परात्मजः ।
शिष्यान् द्वादशसंख्यातान् प्राह स्वान्तिकमानयन् ॥ ४१ ॥
"यदि कामयते कश्चित् सर्व्वप्रथमतामिह ।
सोऽन्त्यस्थानं समाश्रित्य सर्व्वेषां सेवको भवेत्" ॥ ४२ ॥
शिशुमेकं समादाय क्रोड़े संस्थाप्य चात्मवान् ।
शिष्याणामवबोधार्थमेतद् वचनमब्रवीत् ॥ ४३ ॥
"एतद्बालोपमं कश्चिच्छिशुं यदि मदर्थतः ।
अथवा कोऽपि गृह्णाति स मां गृह्णाति सर्व्वथा ॥ ४४ ॥

यश्च मामेव गृह्णाति सदा मद्भावभावितः ।
स मे पितरमादत्ते सत्यमेतन्न संशयः" ॥ ४५ ॥
ततो योहन आगत्य परमात्मजमब्रवीत् ।
"भगवन् भवतो नाम्ना भूतनिःसारणे रतम् ॥
नरमेकं न्यषेधाम भवद्धर्म्माद् बहिःस्थितम् ।
तस्य निष्ठा गुरौ काचिदस्ति किं भवतो मते" ॥ ४६ ॥
यीशुस्तमवदत् "सौम्य तं जनं मा निवारय" ॥ ४७ ॥
ज्ञात्वा प्रभावसिद्धानि कर्म्माणि मम नामतः ॥
नहि निन्दति मां कश्चित् सर्व्वभूतहिते रतः ॥ ४८ ॥
अस्मान् यो मानवो द्वेष्टि विपक्षः सहि नो ध्रुवः ॥ ४९ ॥
"यूयं खीष्टस्य सन्ताना" इत्युक्त्वा यदि कश्चन ।
दत्ते पानाय युष्मभ्यं जलं चषकसम्मितम् ॥
स आत्मकर्म्मणो लब्ध्वा पर्य्याप्तं पारितोषिकम् ।
मोदिष्यतेऽक्षये स्वर्गे सत्यमेतद्ब्रवीम्यहम् ॥ ५० ॥
लघिष्ठं मम भक्तेषु यश्चैकमपि बाधते ।
गलबद्धाश्मनस्तस्य श्रेयः सागरमज्जनम् ॥ ५१ ॥
स्वकीयं हस्तपादं ते विघ्नमुत्पादयेद्यदि ।
तत्क्षणादुभयं छित्त्वा पापसङ्गमिव त्यजेः ॥ ५२ ॥
निक्षेपाज्ज्वलनेऽनन्ते हस्तपादान्वितस्य ते ।
विकलाङ्गस्य खञ्जस्य श्रेयसी शाश्वती स्थितिः ॥ ५३ ॥
इदं नेत्रद्वयं विघ्नं यदीहोत्पादयेत्तव ।
तत्क्षणादुभयं त्याज्यमङ्गुलीवोरगक्षता ॥ ५४ ॥
निपातान्नरकेऽनन्ते हिनेत्रसहितस्य ते ।
अनन्तजीवनं श्रेयो वरं ह्येकेन चक्षुषा ॥ ५५ ॥
असह्यः सर्व्वभूतानां नरकः संप्रकीर्त्तितः ।
म्रियन्ते यत्र नो जीवा वह्निश्च न लयं व्रजेत् ॥ ५६ ॥
लवणेनाग्निरूपेण युक्ताः स्युः सकला जनाः ।
सर्व्वे यज्ञोपहाराश्च भवेयुर्लवणान्विताः ॥ ५७ ॥

अवश्यं लवणं भद्रं तच्चेल्लवणतां त्यजेत्।
द्रव्येषु लवणास्वादः कथं नामोपजायते ॥ ५८ ॥
लवणं सुप्रयत्नेन स्वेषु रक्षत सर्व्वदा।
परस्परं महोदारा शान्तिश्च भुवि पाल्यताम् ॥ ५९ ॥

• इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्गभाषितख्रीष्टोपनिषदि नवमोऽध्यायः।

---

## दशमोऽध्यायः

St. Mark. Chapter 10. [ Christ disputeth with the Pharisees touching divorcement : blesseth the children that are brought unto him : resolveth a rich man how he may inherit life everlasting : telleth his disciples of the danger of riches : Promiseth rewards to them that forsake anything for the gospel : foretlleth his death snd resurrection : biddeth the two ambitious suitors to think rather of suffering with him : and restoreth to Bartimæus his sight ]

यर्द्दनस्य परं पारं गत्वाथ परमात्मजः।
तस्य सीम्ना यिहूदीनां प्रदेशं समुपागतः ॥ १ ॥
ततो बहूञ्जनान् वीक्ष्य यीशुः सन्निधिमागतान्।
ज्ञानं विज्ञानसहितं यथारीत्युपदिष्टवान् ॥ २ ॥
परीक्षकास्ततः केचित् पप्रच्छुस्तं फरीशिनः।
भगवन्निह किं भार्य्या परित्यज्येत भर्त्तृभिः ॥ ३ ॥
यीशुस्तानुत्तरं प्राह भवद्भिः स्मर्य्यते यदि।
उच्यतामत्र किं प्राह मोशिस्तस्यानुशासने ॥ ४ ॥
तेऽवदन् "त्यागपत्रेण स्त्रीत्यागो मोशिसम्मतः"।
यीशुः प्राह "तदोयोक्तिर्युष्मत् क्रूरमनोऽनुगा ॥ ५ ॥
वस्तुतस्तु जगत्स्रष्टा सिसृक्षुर्द्विविधाः प्रजाः।
ससर्ज स्त्र्याकृतीः काश्चित् काश्चिच्च पुरुषाकृतीः ॥ ६ ॥

मातरं पितरं चैव तस्मात्त्यजति मानवः ।
न जहाति स्त्रियं कश्चिन्नरो धातृ-विधानतः ॥ ७ ॥
अभिन्नाङ्गतयाचैव तयोर्नास्ति विभिन्नता ।
तस्माद्विधातृ-संयोग-वियोगो न मयेष्यते ॥ ८ ॥
पप्रच्छुर्भूय एवेदं शिष्यास्तं गृहमागतम् ।
सोऽपि तेषां विबोधार्थमिदं वचनमब्रवीत् ॥ ९ ॥
"यः स्वभार्यां परित्यज्य मानवोऽन्यां समुद्वहेत् ।
स नरो व्यभिचारेण लिप्यते नात्र संशयः ॥ १० ॥
या स्त्री पूर्वं पतिं त्यक्त्वा पतिमन्यं वृणोति च ।
लिप्यते व्यभिचारेण सापीति मम शासनम्" ॥ ११ ॥
ततस्तत् पुरतः केचिच्छिशवः सौम्यदर्शनाः ।
समानीताः प्रसादार्थमाशिषे च तथा विभोः ॥ १२ ॥
शिष्यास्तान् भर्त्सयामासुः शिशून् दृष्ट्वा समागतान् ।
वारयित्वा तु शिष्यांस्तान् यीशुर्वचनमब्रवीत् ॥ १३ ॥
"आगच्छन्तु महाभागाः शिशवो मम सन्निधिम् ।
ईदृशा हि प्रयास्यन्ति स्वर्गराज्यं सनातनम् ॥ १४ ॥
न येषां लौकिकी निष्ठा शिशुवत्सरला भवेत् ।
न प्राप्नुवन्ति ते स्वर्गं सत्यमेतद्वदाम्यहम्" ॥ १५ ॥
इत्युक्त्वा तान् निजक्रोड़े गृहीत्वा परमात्मजः ।
अभिनन्द्य शुभाशीर्भिस्ताञ्छिशून् पर्यतोषयत् ॥ १६ ॥
तं गन्तुकामं संबोध्य पृष्टवान् कश्चिदागतः ।
"अनन्तजीवनं लप्स्ये कर्मणा केन सद्गुरो ॥" १७ ॥
यीशुस्तमवदत्" सौम्य सन्तं वदसि मां कथम् ।
भद्र सन्नेक एवास्ति तं विद्धि परमेश्वरम् ॥ १८ ॥
नरहत्यां मृषासाक्ष्यं चौर्यं परप्रवञ्चनम् ।
विहाय व्यभिचारं च लभस्वानन्तजीवनम् ॥ १९ ॥
पितरं मातरं चैव पूजयित्वातिभक्तितः ।
दुःखक्षयकरं भद्र लभस्वानन्तजीवनम्" ॥ २० ॥

सोऽब्रवीत् "सर्व्वमेवैतत् सर्व्वथानुष्ठितं मया।
भूयः कथय किं कर्म्म कर्त्तव्यमवशिष्यते"। २१॥
यीशुः प्रेम्ना समालोक्य तमिदं वाक्यमब्रवीत्।
"विक्रीय तव सर्व्वस्वं दरिद्रेभ्यः प्रदीयताम्॥ २२॥
तथाकृते धनं स्वर्गे प्रभूतमर्जयिष्यसि।
त्यक्त्वाच विषयान् सर्व्वान् मामिकं शरणं व्रज"॥ २३॥
स तस्य वचनं श्रुत्वा मत्वाच स्वंधनं बहु।
विषण्णवदनो दुःखी तस्मात् स्थानाद् विनिर्ययौ॥ २४॥
दृक्पातं परितः कृत्वा सोऽथ शिष्यानभाषत।
"धनिभिर्दुर्लभः स्वर्गः सत्यमेतद्ब्रवीम्यहम्"॥ २५॥
श्रुत्वैतद्विस्मितान् वीक्ष्य स शिष्यान् पुनरब्रवीत्।
दुष्प्राप्यो हि नृणां स्वर्गः सम्पदासक्तचेतसाम्॥ २६॥
उष्ट्रेस्तु सूचिकारन्ध्रे प्रवेशः सुकरो भवेत्।
धनिभि दुर्लभः स्वर्गः पुनरेतद्ब्रवीम्यहम्"॥ २७॥
आश्चर्य्यवदिदं श्रुत्वा शिष्यास्तमवदन् वचः।
"तर्हि केषां परित्राणं भवेत्तद् ब्रूहि नः प्रभो"॥ २८॥
सोऽवद"त्तन्मनुष्याणां दुष्प्राप्यं नात्र संशयः।
तथापि सुलभं तत् स्यादीश्वरस्य प्रसादतः॥" २९॥
तस्य तद्वाक्यमाकर्ण्य पितो वचनमब्रवीत्।
"पश्यास्मांस्त्यजतः सर्व्वान् गुरो त्वामनुगच्छतः॥ ३०॥
यीशुस्तमवदत् "सौम्य सत्यमेतद् ब्रवीम्यहम्।
नास्ति तावन्नरः कश्चिदिह लोके तथाविधः॥
सुसंवादप्रचारार्थं मदर्थमपि योऽत्यजत्।
अनासक्तमना नित्यं सर्व्वानेव परिग्रहान्॥
नच त्यागाच्छतगुणां सम्पदं लप्स्यते ध्रुवम्।
अनन्तजीवनं भूयः कल्पान्ते तस्य सिद्ध्यति॥ ३१॥
भोगैश्वर्य्यप्रसक्तानां येषामग्रे यह संस्थितिः।
परिणामे गतिस्तेषां भविष्यत्येव चावरा॥ ३२॥

येषां स्यादवरा लोके निष्ठेश्वरसमाधिजा।
भविष्यति गतिस्तेषां चरमे सर्व्वथोत्तमा ॥ ३३ ॥
ततस्ते यीशुना सार्द्धं गच्छन्तः शिष्यसत्तमाः।
यिरूशालेममुद्दिश्य दृष्ट्वा तं यान्तमग्रतः ॥
स्मृत्वा तन्मृत्युवृत्तान्तं विस्मयं परमं गताः।
तस्यानुगमने चैव बभूवुर्भीतिविह्वलाः ॥ ३४ ॥
ततो द्वादश ताञ् शिष्यानाहूय परमात्मजः।
अवश्यम्भाविनीं वार्त्तामिमां तत्त्वविदब्रवीत् ॥ ३५ ॥
"अतः परं वयं यामो यिरूशालेमपत्तनम् ॥ ३६ ॥
उपाध्यायास्ततस्तत्र सह मुख्यपुरोहितैः ॥
मारणायार्पयिष्यन्ति परजात्यै नरात्मजम् ॥ ३७ ॥
ते च तं निहनिष्यन्ति कषाघातैः सतर्जनैः ॥
स तैर्व्विनिहतः क्रूरै भूगर्त्ते निहितोऽपि सन्।
तृतीयदिवसे मृत्योः पुनरुत्थास्यति स्वयम्" ॥ ३८ ॥
याकोबयोहनौ नाम ततः सिबदियात्मजौ।
यीशोरन्तिकमागत्य वाक्यमिदमूचतुः ॥ ३९ ॥
"आवां त्वत्सन्निधौ यद् यत् प्रार्थयिष्यावहे गुरो।
यथा लप्स्यावहे तत्तत्तथा त्वं कुरु यत्नवान्" ॥ ४० ॥
यीशुस्ताववदत् "सौम्यौ युवां किमिह वाञ्छथः।
किं नामाहं करिष्यामि कर्त्तव्यं युवयोः कृते" ॥ ४१ ॥
तावाहतु"स्तव स्याच्चेदावां प्रति परा दया।
प्रदाय वरमेतं नावनुकम्पितुमर्हसि ॥ ४२ ॥
भवतः स्वर्गसाम्राज्ये स्याद् भ्रात्रोरावयोर्द्वयोः ॥
एकस्य भवतो वामे दक्षिणेऽन्यस्य संस्थितिः" ॥ ४३ ॥
यीशुस्तावब्रवी"न्नास्ति बोधो वां वरयाचने।
सुदुष्प्राप्यं वरं यस्माद् युवां मत्तोऽभिवाञ्छथः ॥ ४४ ॥
यत्पात्रस्थितपानीयं पातुं गच्छामि साम्प्रतम्।
तत्पात्रस्थितपानीयं पातुं वां शक्तिरस्ति किम् ॥ ४५ ॥

येन वा स्नापनेनाहं स्नातुं गच्छामि साम्प्रतम् ।
स्नापनेनास्ति किं तेन युवयोः शुद्धियोग्यता"॥ ४६ ॥
"बाढ" मितुप्रत्तयोर्भ्रात्रोर्यीशुर्व्वचनमब्रवीत् ।
"एवं स्याच्चेत् पितुः कल्ये नास्ति काचित् क्षतिर्मम ॥ ४७ ॥
गुरोरिदं वचः श्रुत्वा विषये शिष्ययो र्द्वयोः ।
यीशोर्दशापरे शिष्याः समं क्रोधवशं गताः ॥ ४८ ॥
यीशुस्तान् सान्त्वयित्वाह "यथेमे परजातयः ।
प्रभुत्वमभिवाञ्छन्ति युष्माकं तन्नशोभनम् ॥ ४९ ॥
महत्वं भवतां मध्ये कश्चिच्चेदभिकाङ्क्षति ।
स भवेन्निरहङ्कारो युष्माकं परिचारकः ॥ ५० ॥
यथा न परिचर्य्यार्थी पृथिवीमहमागतः ।
आत्मदानेन सेवार्थमागतः परमुक्तये ॥
तथा सर्व्वेषु कालेषु मामनुस्मृत्य सर्व्वथा ।
यूयं भवथ सर्व्वेषां मुक्तये परिचारकः" ॥ ५१ ॥
ततो यिरीहुमागत्य विनिर्यातं पुनस्ततः ।
जनाश्च बहवोऽन्वीयुः सशिष्यं परमात्मजम् ॥ ५२ ॥
अन्धो वर्त्तीमयो नाम तदानीं तीमयात्मजः ।
यीशोरुपस्थितिं श्रुत्वा भिक्षमाणः पथिस्थितः ॥
क्रोशन् गदितुमारेभे "प्रभो दायूदनन्दन ।
"कृपया परया दृष्टिं देहि मह्यमचक्षुषे ॥" ५३ ॥
तं क्रोशन्तं तथा दृष्ट्वा बहवोऽनुगता जनाः ।
तर्जयित्वादिशन् "मौनं शीघ्रमालम्बताता"मिति ॥ ५४ ॥
तेनासावधिकं क्रोशन् पुनरेवेदमब्रवीत् ।
"प्रभो दायूदसन्तान दयस्वास्य विचक्षुषः ॥" ५५ ॥
यीशुस्तत्र क्षणं स्थित्वा तस्यानयनमादिशत् ।
ज्ञापयित्वा तदादेशं जनास्तं शीघ्रमाह्वयन् ॥ ५६ ॥
सचोत्पत्य परित्यज्य निजवस्त्राणि तत्क्षणात् ।
आश्रित्य महतीं श्रद्धां यीशोरन्तिकमागतः ॥ ५७ ॥

तं तथोपस्थितं दृष्ट्वा यीशुर्व्वचनमब्रवीत् ।
"त्वत्कृते किं करिष्यामि किंवा त्वमभिवाञ्छसि" ॥ ५८ ॥
"भगवन् देहि मे दृष्टि"मिति सोऽन्धस्तमुक्तवान् ।
यीशुराह "प्रयाहि त्वं विश्वासेन सुखीभव" ॥ ५९ ॥
सचान्धस्तत्क्षणात् प्राप दृष्टिशक्तिं तदाज्ञया ।
हर्षेण महता युक्तो यीशुमन्वगमत्ततः ॥ ६० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्ग्भाषितख्रीष्टोपनिषदि दशमोऽध्यायः ।

---

## एकादशोऽध्यायः

St. Mark. Chapter 11. [ Christ rideth with triumph into Jerusalem : curseth the fruitless leafy tree : purgeth the temple : exhorteth his disciples to stedfastness of faith, and to forgive their enemies : and defendeth the lawfulness of his actions, by the witness of John, who was a man sent of God ]

ततो यीशुरनुप्राप जैतुनाख्यगिरौ स्थिताम् ।
बैत्फगीं बैथनीयांच यिरूशालेमसन्निधौ ॥ १ ॥
ततोद्वावादिशच्छिष्यौ प्राप्तकालमिदं प्रभुः ।
"पुरोग्राममसुं तूर्णं युवां यातं ममाज्ञया ॥ २ ॥
तत्र च द्रक्ष्यथो बद्धमेकं गर्द्दभशावकम् ।
पृष्ठं नारूढ़वान् यस्य कदाचित् कोऽपि मानवः ॥ ३ ॥
तमिहानयतं मुक्त्वा कश्चिद्यद्यत्र बाधते ।
तं ब्रूतं विद्यतेऽनेन प्रभोः किञ्चित् प्रयोजनम् ॥ ४ ॥
प्रेषयिष्यति तच्छ्रुत्वा स तं गर्द्दभशावकम् ॥" ५ ॥
तावस्माद् वचनात्तत्र गत्वा सर्व्वमपश्यताम् ।
प्राबर्त्ततां ततो मोक्तुं तौ तं गर्द्दभशावकम् ॥ ६ ॥
तद्वीक्ष्य परिपप्रच्छु र्जनास्तन्मुक्तिकारणम् ।
तावनूद्य गुरोर्व्वाक्यमुक्तवन्तौ यथायथम् ॥ ७ ॥
तयोस्तद्वचनं श्रुत्वा ते तत्रानुमतिं ददुः ॥ ८ ॥

यीशोर्म्मिलकमानीय ततस्तौ खरशावकम् ।
तस्य पृष्ठे स्ववस्त्राणि निदधातेऽतिभक्तितः ॥ ९ ॥
तत्रोपविश्य गच्छन्तमालोक्य परमात्मजम् ।
पथि संस्थापयामासुः स्व स्व वस्त्राणि दर्शकाः ॥ १० ॥
अन्ये विस्तारयामासुः पथि पादपपल्लवान् ।
अभिनन्द्य जयाशीर्भिरुच्चकै रपरेऽब्रुवन् ॥ ११ ॥
"जयोऽस्तु स्वर्गे धन्यस्य गच्छतो विभुनामतः ।
तातदायूदसाम्राज्यं धन्यमायाति यत्पुरः ॥" १२ ॥
ततः शिष्यैः सहाभेत्य यिरुशालेममन्दिरम् ।
सर्व्वमालोक्य सन्ध्यायां यीशुर्व्वैथनियां गतः ॥ १३ ॥
तस्मात् स्थानाद् विनिर्याय प्रभाते परमात्मजः ।
दूरात् स दृष्टवान् वृक्षं नाम्नोदुम्बरमेककम् ॥ १४ ॥
क्षुधार्त्तः फललाभाय गत्वा वृक्षान्तिकं प्रभुः ।
अकालात् फलहीनं तमालोक्य पत्रमण्डितम् ॥
"न खादतु नरः कोऽपि फलानि तव पादप ।"
इति शापं ददौ तच्च शुश्रुवुः शिष्यसत्तमाः ॥ १५ ॥
सशिष्यस्तत आगत्य यिरुशालेममन्दिरम् ।
बहिश्चकार धर्म्मात्मा क्रयविक्रयकारिणः ॥ १६ ॥
कपोतवणिजां चैव छित्वा पारावताश्रयान् ।
मुद्राविनिमयाधारान् न्युब्जयामास कोपतः ॥ १७ ॥
भाराणां वहनं धर्म्मगृहमध्ये न्यवारयत् ।
इमाञ्चाम्नश्रुतिं सर्व्वाञ्ज्ञापयामास तत्त्ववित् ॥ १८ ॥
"ईश्वराराधनायैव केवलं यद्गृहं कृतम् ।
तदद्य खलु दस्यूनां गुहेव प्रतिभाति मे ॥" १९ ॥
तदाकर्ण्य वचस्तस्य सोपाध्यायाः पुरोहिताः ।
सर्व्वे सम्मिलितास्तस्य वधोपायमचिन्तयन् ॥ २० ॥
यत् तेन वचसा तस्य जना जाताश्चमत्कृताः ।
तस्मात्तेऽबिभयुर्लोकप्रतिष्ठालोपशङ्कया ॥ २१ ॥

सन्ध्यायां नगरात्तस्मात् सशिष्यो बहिरागतः ।
रजनीं यापयित्वाथ पथा प्रातर्जगाम च ॥ २२ ॥
अथ दृष्ट्वा विशुष्कं तमुदुम्बरमहीरुहम् ।
स्मृत्वा च पूर्ववृत्तान्तं पितरो वचनमब्रवीत् ॥ २३ ॥
"गुरो पश्य विशुष्कं तमुदुम्बरमहीरुहम् ।
फलाभावादशप्यद् यं गतेऽहनि भवानिह ॥ २४ ॥
तस्य तद्वचनं श्रुत्वा यीशुरुत्तरमब्रवीत् ।
"शरणं व्रजतेशस्य विश्वासेनैव केवलम् ॥ २५ ॥
स्यात् सिद्धावात्मनः शक्त्या विश्वासो यदि कस्यचित् ।
तिष्ठेयुः शासने तस्य सागराद्रिवसुन्धराः ॥ २६ ॥
लब्धमेवेति विश्वासो यदि चेतसि वो भवेत् ।
यच्च किञ्चित् प्रियं वस्तु तदवश्यमवाप्स्यथ ॥ २७ ॥
प्रार्थनासमये चित्ते वैरं चेत् किञ्चिदापतेत् ।
क्षमध्वं तद्विशेषेण जगदीशक्षमाप्तये ॥" २८ ॥
यिरूशालेममागत्य पुनर्धर्म्मगृहे प्रभुम् ।
विहरन्तं समालोक्य प्राचीनाद्यास्तमूचिरे ॥ २९ ॥
"त्वयैतत् क्रियते सर्व्वं कस्याः शक्तेः प्रयोगतः ।
कुतो वैताद्दशीं शक्तिमलब्धाः कथयस्व तत् ॥" ३० ॥
स प्राह "यूयमाख्यात योहनस्नापनं कुतः ।
आगतं किं मनुष्येभ्य उत वा परमेश्वरात् ॥" ३१ ॥
तस्य तद्वाक्यमाकर्ण्य ते जाताः संशयाकुलाः ॥ ३२ ॥
"स्वर्गं चेत्तेऽनुमन्येरं स्तस्यावज्ञा भवेद्वृथा ।
लोकं चेदनुमन्येरँल्लोकभीःस्याद्वलीयसी ॥ ३३ ॥
लोके हि विविदुः सर्व्वे योहनं तत्त्वविद्वरम् ॥" ३४ ॥
एवं ते मनसि ध्यात्वा प्राहुस्तमात्मनोऽज्ञताम् ।
"वक्तुं नाहमपीच्छामि स्वशक्ति"मिति सोऽब्रवीत् ॥ ३५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमन्मङ्गलभाषितख्रीष्टोपनिषदि एकादशोऽध्यायः ।

## द्वादशोऽध्याय:

St. Mark. Chapter 12. [In a parable of the vineyard let out to unthankful husbandmen, Christ foretelleth the reprobation of the Jews, and the calling of the Gentiles. He avoideth the snare of the Pharisees and Herodians about paying tribute to Cæsar: convinceth the error of the Sadducees, who denied the resurrection: resolveth the scribe, who questioned of the first commandment: refuteth the opinion that the scribes held of Christ: bidding the people to beware of their ambition and hypocrisy: and commendeth the poor widow for her two mites, above all.]

भूय एव समाहूय तान् सर्व्वान् परमात्मज: ।
दृष्टान्तवदिदं वाक्यमुवाच प्रतिबुद्धये ॥ १ ॥
"द्राक्षाक्षेत्रपति: कश्चिद्द्राक्षाक्षेत्रं समन्तत: ।
आवेष्ट्य यत्नतो वृत्या द्राक्षावृक्षं समुप्तवान्" ॥ २ ॥
कुण्डं तत्र खनित्वाच द्राक्षानिष्पेषणार्थकम् ।
मद्यानां रक्षणार्थं च गृहमुच्चं विनिर्म्ममे ॥ ३ ॥
तत: करदरक्षिभ्य: कृषकेभ्य: समर्प्य तत् ।
क्षेत्रस्वामी जगामासौ देशान्तरमशङ्कित: ॥ ४ ॥
अथासौ फलपाकान्ते करदान् कृषकान् प्रति ।
स्वदासं प्रेषयामास निजांशं लब्धुमिच्छया ॥ ५ ॥
कृषका: करदातारो दृष्ट्वा तं प्रेषितं जनम् ।
व्यसृजन् रिक्तहस्तं तं ताड़यित्वा विशेषत: ॥ ६ ॥
तत: क्षेत्रपति र्दासं प्रेषयामास चापरम् ।
ते बभञ्जु: शिरस्तस्य विदधुश्चावमाननाम् ॥ ७ ॥
अथान्यं प्रेषयामास दासं क्षेत्राधिप: पुन: ।
न किञ्चिच्चिन्तयन्तस्ते निजघ्नु स्तंच तत्क्षणात् ॥ ८ ॥
इत्थं कांश्चित् प्रहारेण ताड़नेन तथापरान् ।
प्रभोर्दासान् विनिर्जित्य निजघ्नु: कृषका मदात् ॥ ९ ॥

ततः स प्रेषयामास सद्बुद्ध्या पुत्रमात्मनः ।
जघ्नु स्तमपि दुर्वृत्ता अधिकारिणमुत्तरम् ॥ १० ॥
स क्षेत्रपतिरागत्य किं करिष्यत्यतःपरम् ।
तान्विहत्य ध्रुवं क्षेत्रमपरेभ्यः प्रदास्यति ॥ ११ ॥
पठितं किं न युष्माभिः शास्त्रं यदिह विद्यते ।
श्रूयतां तत्समुद्धृत्य मया युष्मभ्यमुच्यते ॥ १२ ॥
'प्रस्तरःशिल्पिसंघै र्यो हेलया समुपेक्षितः ।
स एव प्रस्तरो मुख्यभित्तिरूपेण संस्थितः ॥ १३ ॥
स्वयमेषा परेशस्य सर्व्वशक्तिमतः कृतिः ।
वयं यामनुपश्याम आश्चर्य्यमिव चापरम् ॥' १४ ॥
ते कथामथ तां श्रुत्वा तानुद्दिश्य प्रवर्त्तिताम् ।
योग्यमादातुकामाश्च प्रस्थिता जनशङ्किताः ॥ १५ ॥
अथ ते प्रेषयामासु र्हेरोदीयफरोशिनः ।
सत्यार्थवादिनस्तस्य परिभाषाय वाक्छलैः ॥ १६ ॥
त आगतत्र सदाचारैरभिनन्द्य जगत्प्रभुम् ।
पप्रच्छु र्वाग्भिरर्थ्याभिः संशयं पूर्व्वकल्पितम् ॥ १७ ॥
"भगवन्नवगच्छामो भवन्तं सत्यदर्शिनम् ।
उदासीनमभीतं च परमात्मप्रकाशकम् ॥ १८ ॥
गुरो त्वं ब्रूहि राजस्वं कैसोरोऽर्हति वा नवा ।
किं राजस्वं प्रदास्यामः कैसोराय नवा वयम् ॥" १९ ॥
सोऽब्रवी"त्परीक्ष्योऽहं भवद्भिर्दुष्टमायया ।
यस्य नाम्नाङ्किता मुद्रा करस्तस्मै प्रदीयताम् ॥ २० ॥
केसोरस्यात्र यत् प्राप्यं केसोरस्तु तदर्हति ।
यत् प्राप्यं परमेशस्य तस्मै तद्दीयतां सदा ॥" २१ ॥
श्रुत्वा तद्वचनं तस्य राजभक्तिसमन्वितम् ।
मेनिरे परमाश्चर्य्यं सर्व्वे ते प्रेषिता जनाः ॥ २२ ॥
अथ सद्दूकिनोऽभिरत्यापुनरुत्थानवादिनः ।
प्रदर्श्य विनयाचारौ पप्रच्छुः परमात्मजम् ॥ २३ ॥

"मोशिमाय' समादिष्टो नियोगविषये विधिः॥ २४ ॥
"निरपत्ये मृते ज्येष्ठे तत्पत्नीं तस्य सोदरः॥
स्वभ्रातु र्वंशवृद्धयर्थं नियुञ्ज्याद्दारकर्म्मणि ॥" २५ ॥
अस्त्यत्र संशयोऽस्माकं महांस्तस्यावधारणे ॥ २६ ॥
सप्तानामग्रजो भ्राता विवाहानन्तरं मृतः ।
अग्रहीद्वंशवृद्धयर्थं तत्पत्नीं तस्य चानुजः ॥ २७ ॥
मृतेषु पूर्व्वं पूर्व्वेषु क्रत्वैवमवरेऽवरे ।
निरपत्या मृताःकाले ततो नारी ममार सा ॥ २८ ॥
कस्यैषा पुनरुत्थाने भ्रातुः पत्नी भविष्यति । २९ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
"भवन्तो न हि जानन्ति शास्त्रमीशस्य वा बलम् ॥ ३० ॥
न हि केचित् प्रकुर्व्वन्ति विवाहं पुनरुत्थिताः ।
न विवाह्या च नारी स्यात् सन्ततेरप्रयोजनात् ॥ ३१ ॥
समस्ताश्चोपतिष्ठन्ते दूतवत् परमेश्वरम् ॥ ३२ ॥
ईश्वरः पुनरुत्थाने सत्यमेतद्वचोऽब्रवीत् ।
"अब्राहामेश्वरं विद्धि यथामामजमव्ययम् ॥
इसहाकस्येश्वरं विद्धि तथा मां शाश्वतं विभुम् ।
एवमेवेश्वरं विद्धि याकोबस्यापि मां प्रभुम् ॥ ३३ ॥
ईश्वरो जीवतामेव मृतानां नेश्वरो ध्रुवम् ॥ ३४ ॥
युष्माकं भ्रान्तिमालोक्य विस्मयो मे महानिह ॥" ३५ ॥
सदूकिनामथ श्रुत्वा प्रश्नस्य युक्तमुत्तरम् ।
आगत्याध्यापकः कश्चि"दाद्याज्ञा के"ति पृष्टवान् ॥ ३६ ॥
यीशुरैकान्तिकीं कृत्वा श्रुतिं श्रोतृहितैषिणीम् ।
अब्रवी"दियमाद्याज्ञा धर्म्मधाराप्रवर्षणी ॥ ३७ ॥
'इस्रायेलसुताः शृणुतैको नः परमेश्वरः ।
तमेवैकमुपासीरन् बुद्धिप्राणमनोबलैः ॥' ३८ ॥
द्वितीयाज्ञामिमां प्राहुः सर्व्वज्ञाः परमर्षयः ।
'आत्मवत् परमा प्रीति र्विधेया देशवासिषु ॥' ३९ ॥

एतदाम्नाद्वयं धन्यमायुष्यं कीर्त्तिवर्द्धनम् ।
लोके सर्व्वाभ्य आम्नाभ्यः श्रेष्ठं परममुच्यते ॥ ४० ॥
आकर्ण्याध्यापकः प्राह "युक्तमुक्तं त्वयागुरो ।
अद्वितीयः स एवेश स्तदन्यो नास्ति कश्चन ॥ ४१ ॥
तस्यैवाराधनं श्रेयो बल-विज्ञान-मानसैः ।
श्रेष्ठार्श्चाहुतियागेभ्यः प्रियता प्रतिवेशिनाम् ॥" ४२ ॥
योशुस्तस्योत्तरं मत्वा ज्ञानविज्ञानवर्द्धनम् ।
ईश्वराज्यादद्दूरेत्व"मित्युवाच महामनाः ॥ ४३ ॥
तदा प्रभृति जिज्ञासुनद्दष्टा योशुरात्मवान् ।
उपदेशच्छलेनेदं धर्म्मधाम्नि वचोऽब्रवीत् ॥ ४४ ॥
खीष्टं दायूदसन्तानं वदन्त्यध्यापकाः कथम् ।
दायूदस्त्विदमेवाह पवित्रात्माज्ञया स्वयम् ॥ ४५ ॥
'प्रभुर्म्मम प्रभुं प्राह तिष्ठ त्वं मम दक्षिणे ।
यावन्नाहमरातीं स्ते करोमि तव पादगान्' ॥ ४६ ॥
दायूदो व्याहरत् खीष्टं प्रभुशब्देन चेत्स्वयम् ।
दायूदात्मजनाम्ना च कथं खीष्टं ब्रुवन्ति ते ॥ ४७ ॥
अथ शिष्यान् समाहूय प्रोवाच परमात्मजः ।
"आत्मानमभिरक्षेत शिक्षकेभ्यो निरन्तरम् ॥ ४८ ॥
विचरन्ति हि राष्ट्रेषु तेऽतिदीर्घपरिच्छदाः ।
हट्टेषु चाभिकाङ्क्षन्ति जनानामभिनन्दनम् ॥ ४९ ॥
समाजभवने तेऽधिकुर्व्वन्ति श्रेष्ठमासनम् ॥ ५० ॥
प्रधानमासनं चापि काङ्क्षन्ति सहभोजिषु ॥ ५१ ॥
विधवा-स्वं ग्रसन्ते ते प्रार्थयन्ते-बहुक्षणम् ।
विचारसमये दण्डं प्राप्सन्त्येते भयावहम् ॥ ५२ ॥
उपविश्य धनागारसम्मुखे स ततःपरम् ।
निरैक्षत धनागारे मुद्रानिक्षेपणक्रमम् ॥ ५३ ॥
तत्रेत्य धनिनःसर्व्वे स्वाः स्वा मुद्रा निचिक्षिपुः ।
ताम्रमुद्राद्वयं क्षुद्रं काचिच्च विधवा ददौ ॥ ५४ ॥

समाहूय ततः शिष्यान् यीशुरेतद्वचोऽवदत् ।
अधिकं विधवा दानमदादत्र न संशयः ॥ ५५ ॥
धनं प्रयोजनोद्वृत्तं सर्व्वे हि धनिका ददुः । •
एषा तु विधवा प्रादात् समग्रामात्मजीविकाम् ॥ ५६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मार्कभाषित-ख्रीष्टोपनिषदि द्वादशोऽध्यायः ।

---

## त्रयोदशोऽध्यायः

St. Mark. Chapter 13. [ Christ foretelleth the destruction of the temple : the persecutions for the gospel : that the gospel must be preached to all nations : that great calamities shall happen to the Jews : and the manner of his coming to judgment : the hour whereof being known to none, every man is to watch and pray, that we be not found unprovided, when he cometh to each one particularly by death. ]

धर्म्मधाम्नोऽथ निष्क्रम्य चलिते परमात्मजे ।
तच्छिष्योऽदर्शयत् कश्चिद् दृढ़ां धर्म्मगृहस्थितिम् ॥ १ ॥
यीशुस्तमवदद् वत्स किं दार्ढ्यमिह पश्यसि ।
समूलमस्य विध्वंसो भवेत् सत्यं ब्रवीम्यहम् ॥ २ ॥
धर्म्मधाम्न उपविष्टेऽथ यीशौ जैतुनपर्व्वते ।
सान्द्रियाः पितरयाकोबयोहना इदमब्रुवन् ॥ ३ ॥
अदूरवर्त्तिनीनां यत् सिद्धीनां स्पष्टलक्षणम् ।
तत् सर्व्वं लयकालं च जगतो ब्रूहि नः प्रभो ॥ ४ ॥
सोऽब्रवीन्न भ्रमः कार्य्यो भ्रमोऽवश्यं समापतेत् ।
बहवो भ्रमयिष्यन्ति ख्रीष्टोऽहमिति वादिनः ॥ ५ ॥
युद्धनाम्नो न भेतव्यं न भाव्यं व्याकुलैरपि ।
भाव्यमेतेन सर्व्वेण समाप्तिस्तु सुदुर्लभा ॥ ६ ॥
राष्ट्रं राष्ट्रस्य जातिश्च जातेर्घोरविरोधिताम् ।
करिष्यति धराकम्पो दुर्भिक्षं च भविष्यति ॥ ७ ॥

कल्पः स एष उद्दिष्टो यातनानामिहादिमः ।
सावधानैरतोभाव्यं युष्माभिरात्मरक्षणे ॥ ८ ॥
विचारसमिती युष्मानर्पयिष्यन्ति मानवाः ।
निर्द्दयं प्रहरिष्यन्ति तथा धर्म्मनिकेतने ॥ ९ ॥
मत्कृते साक्ष्यदानार्थं राजद्वारे प्रयास्यथ ।
घोषनीयः सुसंवाद आदौतु सर्व्वजातिषु ॥ १० ॥
राजद्वारेऽभियोगार्थं यदा नेष्यन्ति वो जनाः ।
युष्माभिर्न तदा कार्य्यं साक्ष्यवाक्यस्य चिन्तनम् ॥ ११ ॥
युष्माकं हृदये स्थित्वा यद्वाक्यं वाचयेद्विभुः ।
वाच्यं तदेव युष्माभि स्तदा तद्गतमानसैः ॥ १२ ॥
विषये व्यवहर्त्तव्ये युष्माभिर्यद्वदिष्यते ।
तत् पवित्रात्मनो वाक्यमिति सत्यं ब्रवीम्यहम् ॥ १३ ॥
भ्राता सोदरमासाद्य तस्मिन्काले हनिष्यति ।
पिता धृत्वा स्वयं पुत्रं निधनायार्पयिष्यति ॥ १४ ॥
पितरौ घातयिष्यन्ति तनयाः प्रतुपक्षगाः ।
यूयं चानादृता लोके मम हेतो र्भविष्यथ ॥ १५ ॥
तदेश्वरं समाश्रित्य ये च स्थास्यन्ति निश्चलाः ।
परिणामे परित्राणं लप्स्यन्ते ते च मानवाः ॥ १६ ॥
यदातु ध्वंसकृद्दस्तु दानीयेलेन वर्णितम् ।
अवस्थाहैमनिर्व्वाच्यं द्रक्ष्यथास्थानसंस्थितम् ॥
तदा नगं पलायन्तां यिहूदियास्थिता जनाः ।
नाधो गच्छन्तु कार्य्यार्थं प्रासादस्योपरि स्थिताः ॥ १७ ॥
गृहे नायान्तु कार्य्यार्थं क्षेत्रस्था कृषकाः जनाः ।
भविष्यन्ति सुसन्तप्ता गर्भिण्यः स्तनदाश्च याः ॥ १८ ॥
प्रार्थयध्वमिदं यूयं युष्माकं गमनं यथा ।
न भवेच्छीतकाले तु विश्रामदिवसेऽपिवा ॥ १९ ॥
जगत्सृष्टेः समारभ्य क्लेशो नायात ईदृशः ।
जगतः प्रलयं यावन्न कदापि भविष्यति ॥ २० ॥

नाकरिष्यद्दिभुस्तस्य कालस्य स्वल्पतां यदि ।
नास्थास्यद् जीवितः कश्चित् समग्रे चितिमण्डले ॥ २१ ॥
मनोनीतजनानां तु शिवाय जगतः प्रभुः ।
न्यूनीचकार घोराणि तान्यहानि निजेच्छया ॥ २२ ॥
"तत्र ख्रीष्ट" "इह ख्रीष्ट" इति कश्चिद्वदेद् यदि ।
न विश्वसित तद्वाक्ये यूयं सत्ये व्यवस्थिताः ॥ २३ ॥
छद्मात्मा बहवश्छद्मख्रीष्टाश्च विभ्रमाय वः ।
दर्शयिष्यन्ति चिह्नानि विचित्राणि बहूनि च ॥ २४ ॥
सावधानैरतो भाव्यं युष्माभि र्भावितात्मभिः ।
युष्मभ्यं सर्व्वमाख्यातं पूर्वं विस्तरशो मया ॥ २५ ॥
तस्मिन् सुदारुणे काले सूर्य्यश्च तमसावृतः ।
न भास्यत्यम्बरे चन्द्रो हीनरश्मिर्भविष्यति ॥ २६ ॥
पतिष्यन्त्यम्बरात्तारा अभ्रं विकृतिमाप्स्यति ॥ २७ ॥
दिव्येन मेघयानेन यशोविक्रमभूषितः ।
दृश्येतावतरन् मर्त्त्यं तदासौ मानवात्मजः ॥ २८ ॥
ततस्तत्प्रेरिता दूताः सीम्नो भूमिविहायसोः ।
स्वजनान् संग्रहीष्यन्ति नाभमानिलसंस्थितान् ॥ २९ ॥
यथोदुम्बरवृक्षस्य दृष्ट्वाभिनवपल्लवम् ।
युष्माभिर्ज्ञायते ग्रीष्मः समेष्यत्यचिरादिति ॥ ३० ॥
तथाभिज्ञानमालोक्य यथावदिह वर्णितम् ।
ज्ञास्यते स्वगृहद्वारे स एवागतवानिति ॥ ३१ ॥
यावन्नैवानुतिष्ठन्ति सर्वा एताः प्रवृत्तयः ।
ब्रवीम्यवितथं तावन्नोत्सत्स्यन्ति प्रजा इमाः ॥ ३२ ॥
लोपो द्यावापृथिव्योश्च भविष्यत्यन्तिमे दिने ।
न भवेन्मम वाक्यानां कदाचिदयथार्थता ॥ ३३ ॥
तत्कालं न विजानन्ति स्वर्दूतास्तु मानवाः ।
केवलं स पिता वेत्ति स्वर्गस्थः परमेश्वरः ॥ ३४ ॥

भवतावहिता यूयं जाग्रत ध्यानतत्पराः ।
यतो यूयं न जानीथ प्रभोरागमनक्षणम् ॥ ३५ ॥
यथा भृतेषु विन्यस्य स्वगृहं भवनाधिपः ।
निरूप्य भृत्यकार्य्यं च विदेशं प्रति प्रस्थितः ॥
आज्ञया तस्य ते दासा अहोरात्रं प्रजाग्रति ।
तथा भवत यूयं च सदा जागरतत्पराः ॥ ३६ ॥
न युष्माभिर्यतोज्ञातं गृहाध्यक्षागतेः क्षणम् ।
तस्मात् सर्व्वेषु कालेषु तच्चित्ता एव तिष्ठत ॥ ३७ ॥
स आगत्य यथाऽकस्माद् युष्मान् पश्येन्न निद्रितान् ।
तथा यूयं सदा तिष्ठतैवं तिष्ठन्तु चापरे ॥ ३८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्गभाषितखीष्टोपनिषदि त्रयोदशोऽध्यायः ।

---

## चतुर्द्दशोऽध्यायः

St. Mark. Chapter 14. [A conspiracy against Christ. Precious ointment is poured on his head by a woman. Judas selleth his Master for money. Christ himself foretelleth how he shall be betrayed of one of his disciples : after the passover prepared, and eaten, instituteth his supper : declareth aforehand the flight of all his disciples, and Peter's denial. Judas betrayeth him with a kiss. He is apprehended in the garden, falsely accused, and impiously condemred of the Jews' council : shamefully abused by them : and thrice denied of Peter.]

छलेनाथ विनाशाय यीशो र्निस्तारपर्व्वणः ।
पूर्व्वं ते मन्त्रयामासुः सोपाध्यायाः पुरोहिताः ॥ १ ॥
जनमध्ये विनाशेन कलहः सम्भविष्यति ।
अतस्ते विरता हन्तुं यीशुं निस्तारपर्व्वणि ॥ २ ॥
यीशुर्ब्बैथनियां गत्वा शिमोनाख्यस्य कुष्ठिनः ।
भवने सह तच्छिष्यै र्भोजनायोपविष्टवान् ॥ ३ ॥

तस्मिन्नेव ततःकाले रमणी काचिदागता ।
शुद्धतैलं जटामांस्याः श्वेताश्मपात्रसंस्थितम् ॥
स्रावयामास यत्नेन मानवात्मजमस्तके ।
तद्दृष्ट्वा कुपिताः केचिज्जना अन्योन्यमब्रुवन् ॥ ४ ॥
"तैलस्यास्य महार्हस्य कथमेष व्ययोवृथा ।
यन्मूल्येन कृतार्थाः स्युर्दरिद्रा बहवो जनाः ॥" ५ ॥
यीशुस्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
न स्त्रीयमपवादार्हा कृतं कर्म्मानयोत्तमम्॥ ६ ॥
साहचर्य्यं दरिद्राणां सर्व्वदा वो भविष्यति ।
न तु मां प्राप्स्यथ द्रष्टुं सदा यूयमतः परम् ॥ ७ ॥
व्यदधादग्रिमं कृत्यं समाधे र्भाविनो मम ।
आसिच्य श्रद्धया तैलं योषियं मम मूर्द्धनि ॥ ८ ॥
यत्र यत्र सुसंवादो जगति प्रचरिष्यति ।
ध्रुवमस्याः कृतिस्तत्र तत्र ख्यातिमवाप्स्यति ॥ ९ ॥
यीशुमर्पयितुं धृत्वा यिहूदा स्तत आययौ ।
यीशोरन्यतमः शिष्यो मुख्ययाजकसन्निधिम् ॥ १० ॥
ते च तस्याशयं ज्ञात्वा हर्षेण महतान्विताः ।
स्वीचक्रू रूप्यकं दातुं स च कालमपेक्षत ॥ ११ ॥
ततः शिष्या बलेः काले शुभनिस्तारपर्व्वणः ।
निष्किण्वापूपपर्व्वीयप्रथमे दिवसे शुभे ॥
यीशोरन्तिकमागत्य पप्रच्छुर्विनयान्विताः ।
"कुत्र निस्तारपर्व्वीयं भोज्यं कल्प्यं भवेदिति ॥" १२ ॥
यीशुर्द्वाववदच्छिष्यौ "गच्छतं नगरीं युवाम् ।
तत्रैकं द्रक्ष्यथःकञ्चिज्जलकुम्भाभिवाहिनम् ॥
युवाभ्यामनुयातोऽसौ भवनं यत् प्रवेक्ष्यति ।
तस्य गेहस्य कर्त्तारं वदतं मेऽनुशासनम् ॥ १३ ॥
गुरुः पृच्छति "कुत्रास्तेऽतिथीनां तन्निकेतनम् ।
सशिष्यः पालयिष्येऽहं यत्र निस्तारपार्व्वणम् ॥ १४ ॥

सचैकां सज्जितां शालामूर्द्धस्थां दर्शयिष्यति ।
तत्र नः पार्व्वणं भोज्यं युवाभ्यामुपकल्प्यताम्॥" १५ ॥
ततस्तौ नगरं गत्वा दृष्टवन्तौ यथायथम् ।
कल्पयामासतुश्चैव भोज्यं निस्तारपार्व्वणम् ॥ १६ ॥
अथ द्वादशभिः शिष्यैः सायं भोक्तुमुपागतः ।
यीशुर्व्वाक्यमुवाचेदं स्वशिष्यान् भोजने रतान् ॥ १७ ॥
"युष्माकं मम शिष्याणामेको विश्वासघातकः ।
मां धृत्वा वैरिणां हस्ते स नूनमर्पयिष्यति ॥" १८ ॥
ते श्रुत्वा वचनं तस्य पृष्टवन्तोऽतिदुःखिताः ।
शिष्या एकैकशोऽभ्येत्य "सोऽहं किं भगव"न्निति ॥ १९ ॥
यीशुः प्राह "न्नपात्रे मे यस्तु पाणिममार्जयत् ।
स एव द्विषतां हस्ते ध्रुवं मामर्पयिष्यति ॥ २० ॥
यथैव लिखितं ग्रन्थे तथैव मानवात्मजः ।
प्रयात्यर्पयिता तस्य किन्तु सन्तापभाग् भवेत् ॥ २१ ॥
नाभविष्यत्तदुत्पत्तिर्यद्यस्मिन् धरणीतले ।
अभविष्यत् परं क्षेमं तस्य दुष्कृतकारिणः ॥ २२ ॥
अथ भङ्क्त्वाशिषा पूपं शिष्येभ्यो यीशुरब्रवीत् ।
अयं मे गृह्यतां देहो भक्ष्यतां च विभागशः ॥ २३ ॥
पानपात्रं पुनर्दत्त्वा धन्यवादपुरःसरम् ।
उक्तवान् "पिबतेदं च मम देहस्य शोणितम् ॥" २४ ॥
ते पपुस्तच्च पानीयं यीशुस्तान् पुनरब्रवीत् ।
नवीननियमस्येदं स्रावितं मम शोणितम् ॥
भविष्यति जगत्यस्मिन् बहूनां पापमुक्तये ॥ २५ ॥
अद्यप्रभृति नैवेमं पिबेयं गोस्तनीरसम् ।
गत्वाहमैश्वरं धाम पास्याम्यभिनवं पुनः ॥ २६ ॥
तेऽथ स्तोत्रं समुच्चार्य्य जग्मु र्जैतुनपर्व्वतम् ।
बभाषे वचनं तत्र शिष्येभ्यः परमात्मजः ॥ २७ ॥

मत्तोऽद्य स्खलिता यूयं सर्व्वे रात्र्यां भविष्यथ ।
भाव्येऽस्मिन् विषये यस्मादिदं व्याहरति श्रुतिः ॥ २८ ॥
"अहमेवाहनिष्यामि व्रजस्य प्रतिपालकम् ।
तेन सुप्रः स्खलिता मेषा व्रजस्यास्य न संशयः ॥" २९ ॥
उत्थितस्तु गमिष्यामि गालीलमहमात्मवान् ।
युष्माकं गमनात् पूर्व्वं सत्यमेतद् ब्रवीम्यहम् ॥ ३० ॥
पितरस्तमवद्द्वाक्यं "स्खलन्तु सकला जनाः ।
अहमस्खलितो भूत्वा स्थास्यामि तव सन्निधौ ॥" ३१ ॥
यीशुस्तमवदत् "पूर्व्वं द्वितीयात् कुक्कुटध्वनेः ।
रात्रौ वारत्रयं चाद्य मां परित्यक्ष्यसि ध्रुवम् ॥" ३२ ॥
पितरस्तमुत्तरं प्राह त्वच्छिष्यैरपरैः सह ।
"त्वया सार्द्धं मरिष्यामस्त्वां त्यक्ष्यामो नतु ध्रुवम् ॥" ३३ ॥
ततो गेतशिमान्याख्यं स्थानं गत्वा स आत्मवित् ।
निजशिष्यान् समाहूय व्याकुलो वाक्यमब्रवीत् ॥ ३४ ॥
गत्वा यावदमुत्राहं प्रार्थये स्थिरमानसः ।
तावदत्रैव तिष्ठन्तु भवन्तो मम शासनात् ॥ ३५ ॥
ततः पित्रं पुरस्कृत्य तथा याकोबयोहनौ ।
गच्छन् दुःखाभिभूतोऽसौ विषीदन्निदमब्रवीत् ॥ ३६ ॥
दुःखेन महता युक्तमामृत्योर्हृदयं मम ।
सुप्रबुद्धा मया सार्द्धं यूयमत्रैव तिष्ठत ॥ ३७ ॥
अथ गत्वा ततः किञ्चिद्दूरं परमतत्त्ववित् ।
पतित्वाधोमुखो भूमौ प्रार्थयित्वेदमब्रवीत् ॥ ३८ ॥
पितर्मत्तो विनिर्यातु स कालो यदि सम्भवेत् ।
इदं पानीयपात्रं च भवतामेव वाञ्छया ॥ ३९ ॥
अथ तत्रागतः ख्रीष्टो निद्रितानवलोक्य तान् ।
पित्रमुत्थापयन्नाह "स्वपिषि त्वमशङ्कितः" ॥ ४० ॥
यूयं किं घटिकां यावन्मदर्थे जागराक्षमाः ।
जाग्रत प्रार्थयध्वं च पराजेतुं प्रलोभनम् ॥ ४१ ॥

आत्मा समुत्सुकः सत्यं पिपासितं किन्तु दुर्बलम् ॥ ४२ ॥
इत्युक्त्वासौ ततो गत्वा पुनराराध्य पूर्व्ववत् ।
प्रत्यावृत्य पुनः सर्वान् निद्रितान् परिदृष्टवान् ॥ ४३ ॥
अवशत्वं गतास्तेषां सर्वेषामेव दृष्टयः ।
अतस्ते तस्य वाक्यानामुत्तरं वक्तुमक्षमाः ॥ ४४ ॥
तृतीयवारमागत्य स ततः प्रोक्तवान् वचः ।
निद्रयालं समायातः कालोऽसावतिदारुणः ॥ ४५ ॥
उत्तिष्ठत गमिष्यामः सर्वेवयमतः परम् ।
तं पश्यत समायान्तं योमां धृत्वाऽर्पयिष्यति ॥ ४६ ॥
इत्युक्तवन्तमाचार्य्यं यिहूदाः प्रभुनन्दनः ।
यीशुमभ्याययौ क्षिप्रं सशस्त्रैर्बहुभिर्जनैः ॥ ४७ ॥
अथ पूर्वोक्तसङ्केतं छलेनासौ प्रदर्शयन् ।
यीशुमात्मन आचार्य्यं प्रणाम चुचुम्बच ॥ ४८ ॥
तदृष्ट्वा ते च तं क्षिप्रं जगृहुः शस्त्रपाणयः ।
तद्दृष्टं दर्शकाः केचिद् दृष्ट्वाः पथि संस्थिताः ॥ ४९ ॥
असिं कोषाद्विनिष्कृष्य तेषामेकतमो जनः ।
महायाजकदासस्य कर्णमेकं तदाच्छिनत् ॥ ५० ॥
यीशुः प्राह ततोमुख्ययाजकप्रेषितान् नरान् ।
दस्युं यथा ग्रहीतुं मां सशस्त्राः कथमागताः ॥ ५१ ॥
धर्म्मधामगतो नित्यं देशनामहमुक्तवान् ।
विनायासेन तत्राहं युष्माभि र्नधृतः कथम् ॥ ५२ ॥
आम्नानां श्रुतिरेतेन प्राप्नोति परिपूर्णताम् ।
इत्युक्तवन्तमाचार्य्यं तच्छिष्याः परितत्यजुः ॥ ५३ ॥
नग्नकायो युवा कश्चिद् देहमावृत्य वाससा ।
औत्सुक्यादन्वगच्छत्तं गच्छन्तं परमात्मजम् ॥ ५४ ॥
युवभि र्ध्रियमाणस्तु त्यक्त्वा तद् वस्त्रमात्मनः ।
द्रुतं पलायनं चक्रे तरुणः स दिगम्बरः ॥ ५५ ॥

ततो गृहीतमानिन्युर्यीशुं ते प्रेषिता जनाः ।
धर्म्मयाजकमुख्यस्य माननीयस्य सन्निधिम् ॥ ५६ ॥
बभूवुर्म्मिलितास्तत्र वृद्धोपाध्याययाजकाः ।
पित्रोऽप्यनुगतः सैन्यपार्श्वस्थोऽग्निमसेवत ॥ ५७ ॥
ततस्ते याजका मुख्याः सर्व्वेलाश्च महासभाः ।
यीशुं हन्तुं मृषासाक्ष्यं मृग्यन्तोऽपि न लेभिरे ॥ ५८ ॥
तद्विरोधि मृषासाक्ष्यमुक्तं यद्यपि कैश्चन ।
नाभूत् प्रमाणयोग्यं तत् परस्परविरोधतः ॥ ५९ ॥
तत्र केचित् समागत्य मिथ्येदं वाक्यमब्रुवन् ।
"मयेदं स्वेच्छया भङ्क्त्वा मन्दिरं हस्तनिर्म्मितम् ॥
शक्यते त्रिदिनस्यान्तर्निर्म्मातुं पाणिना विना ।"
इत्यस्माभिः श्रुतं स्पष्टमनेन कथितं वचः ॥ ६० ॥
विरुद्धोक्तिवशादेतदपि न स्वीकृतं यदा ।
अपृच्छत्तं तदाहूय मध्यस्थो मुख्ययाजकः ॥ ६१ ॥
"त्वद्विरुद्धं मृषासाक्ष्यं यच्छन्ति किमिमे जनाः ।
एतेषां प्रतिवादाय कथं त्वं न प्रभाषसे ॥" ६२ ॥
स तस्य तद्वचः श्रुत्वा नकिञ्चिदुक्तवान् यदा ।
अपृच्छत् पुनरेवेदं तदा मुख्यपुरोहितः ॥ ६३ ॥
"पुत्त्रः परमधन्यस्य भवान् ख्रीष्टः स एव किम् ।"
"असंशयं स एवाह"मिति तं यीशुरब्रवीत् ॥ ६४ ॥
"ईशस्य दक्षिणे पार्श्वे यूयं द्रक्ष्यथ मां स्थितम् ।
दिव्येन मेघयानेन समायान्तं नरात्मजम् ॥ ६५ ॥
विदीर्य्य स्वीयवासांसि तच्छ्रुत्वा मुख्ययाजकः ।
अब्रवी"न्नास्ति साक्ष्यस्य प्रयोजनमतःपरम् ॥ ६६ ॥
श्रुतवन्तः स्वयं निन्दां भवन्तः परमात्मनः ।
अतः स्वं स्वं सुसिद्धान्तं ज्ञापयन्तु विशेषतः ॥" ६७ ॥
"वध्योऽय"मिति ते प्राहुः सर्व्वे मुख्यपुरोहितम् ।
न्यष्ठीवंश्च मुखे तस्य मुष्ट्याजघ्नुश्च केचन ॥ ६८ ॥

"अरे व्याहर ग्रिष्टोक्ति"मिति केचित्तमूचिरे ।
प्रहरन्तोऽथ निर्दोषं जगदुस्तं पदातय: ॥ ६९ ॥
ततो याजकमुख्यस्य दासी काचित् समागता ।
इदमुक्तवती पित्रं प्राङ्गणेऽनलसेविनम् ॥ ७० ॥
"योऽसौ नासरतीयस्य सङ्गी त्वमिति मे मति: ।"
"त्वद्वाक्यं नावगच्छामि" पित्रस्तामितदब्रवीत् ॥ ७१ ॥
ततो वहि: समागत्य पित्रे गोपुरमाश्रिते ।
अभवत् तत्क्षणादेव कुक्कुटस्य च शब्दनम् ॥ ७२ ॥
अथ तं वीक्ष्य दासेयका जगाद निकटस्थितान् ।
"अयमन्यतमस्तेषां सत्यमेतन्नसंशय: ॥ ७३ ॥
एतत्तु वचनं तस्या: पित्रेणास्वीकृतं यदा ।
पुनरप्युक्तवन्तस्तं तदा पार्श्वे स्थिता जना: ॥ ७४ ॥
"त्वत्समुच्चारिता भाषा गालीलीयेव लक्ष्यते ।
ध्रुवं गालीलवासित्वात्त्वं तेष्वेकतमो मत: ॥" ७५ ॥
सोऽभिशापं समुच्चार्य्य शपथं च पृथग्विधम् ।
अवदन्नाभिजानामि भवद्भि: कथितं जनम् ॥" ७६ ॥
इति ब्रुवति पित्रे तु सद्यो रौति स्म कुक्कुट: ।
स्मारं स्मारं गुरोर्वाक्यं स रुरोद तदाकुल: ॥ ७७ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मग्ंभाषितख्रीष्टोपनिषदि चतुर्द्दशोऽध्याय: ।

---

## पञ्चदशोऽध्यायः

St. Mark. Chapter 15. [Jesus brought bound, and accused before Pilate. Upon the clamour of the common people, the murderer Barabbas is loosed, and jesus delivered up to be crucified. He is crowned with thorns, spit on, and mocked: fainteth in bearing his cross: hangeth between two thieves: suffereth the triumphing reproaches of the Jews: but confessed by the centurion to be the son of God: and is honourably buried by Joseph.]

मन्त्रयित्वा प्रभातेऽथ सवृद्धा मुख्ययाजकाः।
अध्यापकाश्च तं योशुं पीलाताय समार्पयन्॥ १॥
अथ संस्थितमालोक्य पुरतः परमात्मजम्।
"यिहूदीनां नृपः किं त्व"मिति पीलात उक्तवान्॥ २॥
"भवता सत्यमेवोक्त"मिति तं योशुरब्रवीत्।
वृद्धाद्यैरभियुक्तस्तु नोत्तरं वाक्यमब्रवीत्॥ ३॥
प्राणान्तकेऽभियोगेऽपि योशुं दृष्ट्वा निरुत्तरम्।
पीलातो विस्मितस्तस्थौ यिहूदीनामधीश्वरः॥ ४॥
कारामुक्तिमनुस्मृत्य ततः पार्वणकालिकीम्।
तदर्थं करुणां भक्ताः पीलातं तु ययाचिरे॥ ५॥
स विदित्वार्पणं योशोः प्रतिहिंसाप्रणोदितम्।
पृष्टवान् "यिहूदीशस्य किं मोक्षमभिवाञ्छथ॥" ६॥
प्रधानयाजकाद्यैस्तु जनसंघाः प्रणोदिताः।
समं नृशंसबाराब्बामुक्तिमेव ययाचिरे॥ ७॥
ज्ञात्वा तेषामभिप्रायं पीलात इदमुक्तवान्।
"यद्येवं भवदुक्तस्य यिहूदीशस्य किं भवेत्॥" ८॥
क्रोशन्तस्ते पुनः प्राहुः क्रुशेनायं निहन्यताम्।"
"किन्नु तेन कृतो दोषः" पीलात इति पृष्टवान्॥ ९॥
तस्य तद्वचनं श्रुत्वा क्रोशन्तस्ते ततोऽधिकम्।
उक्तवन्तः "क्रुशेनैव भवता बध्यतामयम्॥ १०॥

पोलातो वचनात्तेषां बारब्बामुक्तिमादिशत् ।
तथाच स कशाघातं क्रुशे यीशोः समर्पणम् ॥ ११ ॥
शासकस्य ततः सेना नीत्वा यीशुं नृपालयम् ।
सैन्यानि स्थापयामासुः समग्राणि तदन्तिके ॥ १२ ॥
तस्य देहं समाच्छाद्य कृष्णरक्तेन वाससा ।
मुकुटं कण्टकस्याथ निदधौ तस्य मस्तके ॥ १३ ॥
सैन्यानि पुरतस्तस्य पातयित्वाथ जानुनी ।
"नमो यिहूद्यधीशाये"त्यवहस्य बभाषिरे ॥" १४ ॥
निष्ठीवमक्षिपंस्तस्य सुपवित्रे कलेवरे ।
कठिनेन च दण्डेन प्रजघ्नुस्तस्य मस्तके ॥ १५ ॥
मोचयित्वा ततस्तस्य तत् कृष्णलोहिताम्बरम् ।
तं क्रुशेऽर्पयितुं निन्युः परिधाप्य निजाम्बरम् ॥ १६ ॥
कुरीणीयशिमोनाख्यं गच्छन्तं तेन वर्त्मना ।
ससिकन्दररूफस्य तातं ग्रामात् समागतम् ॥
तं सैनिकाः समादिश्य क्रुशस्य वहनाय तु ।
कपालस्थलमानिन्युर्यीशुं ते गल्गथाह्वयम् ॥ १७ ॥
पानाय प्रददुस्तस्मै सगन्धं गोस्तनीरसम् ।
तं रसं न तु जग्राह यीशुरात्मविदांवरः ॥ १८ ॥
तृतीयघटिकाकाले ते क्रुशे तं समार्पयन् ।
व्यभजंस्तस्य वस्त्राणि गुटिकापातपूर्वकम् ॥ १९ ॥
"अयं यीशुरितिख्यातो यिहूदीयप्रजाधिपः ।"
इति दोषयुतं वाक्यं बबन्धुस्तस्य मस्तके ॥ २० ॥
बबन्धुस्ते च दस्यू द्वौ यीशोर्दक्षिणवामयोः ।
तेना"सौ गणितोऽधर्म्मिष्वि"ति वाक् पूर्णतां गता ॥ २१ ॥
सामर्थ्यं तस्य निन्दन्तो भ्रूकूटीकुटिलाननाः ।
मस्तकं चालयित्वाच पथिका इदमब्रुवन् ॥ २२ ॥
"ईशस्य मन्दिरं भङ्क्त्वा त्रिदिनाभ्यन्तरे पुनः ।
निर्म्मातुमपि शक्नोमो" तुरन्तवांस्त्वं वचो नकिम् ॥" २३ ॥

"रक्ष त्वमात्मनात्मानमवरोह स्वयं क्रुशात् ।"
इत्थमेव जजल्पुश्च·सोपाध्याया: पुरोहिता: ॥ २४ ॥
"इस्रायेलाधिपोऽरक्षोदयमन्यान् स्वशक्तित: ।
स्वशक्त्या कथमात्मानं नाभिरक्षति साम्प्रतम् ॥ २५ ॥
विश्वासो वर्द्धतां नोऽस्मिन्नवरोहेत् क्रुशादयम् ।"
तेन साईंच विद्धो द्वौ दस्यू तं विनिर्निनिन्दतु: ॥ २६ ॥
मध्यन्दिनादथारभ्य कालं त्रिघटिकामितम् ।
अभवन्निखिलो देशो घोरेण तमसावृत: ॥ २७ ॥
तृतीयप्रहरे प्राह येशुरुच्चैरिदं वच: ।
"त्वया कथमहं त्यक्तो मदीश्वर मदीश्वर ।" २८ ॥
तदाकर्ण्याब्रुवन् केचित्तदानीं तत्र संस्थिता: ।
"अयमेलियमाहूय त्यजत्यन्ते कलेवरम् ॥" २९ ॥
इत्याकर्ण्य वचस्तेषां कश्चित्तत्रत्यमानव: ।
पानाय प्रददौ तस्मै काञ्जिकं नलमध्यगम् ॥ ३० ॥
हसन् मर्म्मोपहासं स वाक्यमेतत्समुक्तवान् ।
"पश्याम्यमुं परित्रातुमेलियोऽभ्येति नेति वा ॥" ३१ ॥
अथोच्चै: पुनरुत्क्रुश्य देहधृक् परमात्मज: ।
देहाद्वियुक्तमात्मानमार्पयत् परमात्मने ॥ ३२ ॥
तत्क्षणादग्रतो मूलं यावन्मन्दिरसंस्थिता ।
अभूद् यवनिका दीर्णाऽऽम्बरं तस्य वियोगत: ॥ ३३ ॥
दृष्ट्वा शतपतिस्तस्य दु:खप्राणविमोचनम् ।
"परमेश्वरपुत्रोऽयमभू"दित्येवमब्रवीत् ॥ ३४ ॥
गालीलाद् योषितो याश्च येशो: सेवार्थमागता: ।
ता: सर्व्वा ददृशु: सर्व्वं दूरत: समवस्थिता: ॥ ३५ ॥
तासु सर्व्वासु विख्याता इमा: सेवापरायणा: ।
मरीयम् नाम कल्याणी मग्दलग्रामवासिनी ॥ ३६ ॥
योशियाकोबयो र्माता मरीयन्नामचापरा ।
आसीदन्याच कल्याणी शालोमी धर्म्मचारिणी ॥ ३७ ॥

अथारिमाथियावासी योषिफो नाम धार्म्मिकः।
आयोजनदिनेऽभेत्य स्वर्गराजस्य साधकः॥
पोलातमुपसङ्गम्य सुशीलो मन्त्रतत्त्ववित्।
यीशोरचेतनं देहं सपौरुषमयाचत॥ ३८॥
तस्याशु मरणं श्रुत्वा पोलातो विस्मितोऽभवत्।
तंचाहूय शताध्यक्षमपृच्छत् ज्ञातुमिच्छया॥ ३९॥
ततः स तत्त्वतो ज्ञात्वा यीशुं पञ्चत्वमागतम्।
यीशोर्व्विनश्वरं देहं योषिफाय समार्पयत्॥ ४०॥
सूक्ष्मेण वाससावेष्ट्य योषिफस्तत् कलेवरम्।
निधायाद्रिगुहायां च रुरोध मुखमश्मना॥ ४१॥
योशिमाता मरीयम् तत् सार्द्धं मरीयमान्यया।
अपश्यत् संस्थिता सर्वं शवागारस्य सन्निधौ॥ ४२॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मर्ग भाषितखीष्टोपनिषदि पञ्चदशोऽध्यायः।

---

## षोड़शोऽध्यायः

St. Mark. Chapter 16. [An angel declareth the resurrection of Christ to three women. Christ himself appeareth to Mary Magdalene : to two going into the country : then to the apostles, whom he sendeth forth to preach the gospel : and ascendeth into heaven. ]

अथ विश्रामवारान्ते सप्ताहप्रथमेऽहनि।
प्रातर्म्मरीयमौ ते द्वे शालोमीच सुसेविकाः॥
सुगन्धिद्रव्यमादाय यीशोर्देहस्य लिप्सया।
समागत्य शवागारद्वारं प्राहुरिदं वचः॥ १॥
"स्थापयेमां शवागारद्वारमावृत्य संस्थिताम्।
अस्माकमुपकाराय कः शिलामपसारयेत्॥" २॥
अपसारितमालोक्य महान्तं प्रस्तरं ततः।

प्रविश्य ताः शवागारं ददृशुस्तस्य दक्षिणे ।
युवानमेककं शुभ्रवसनेन समावृतम् ॥ ३ ॥
तत्र ता विस्मितास्तस्थुर्भयेन महतान्विताः ॥ ४ ॥
अथ ता योषितो वीक्ष्य स इदं वाक्यमब्रवीत् ।
"मा क्षुभ्यत महाभागा माभूद्वो मनसो भयम् ॥ ५ ॥
यीशुं क्रुशहतं यूयं मृग्यथात्र समागताः ।
अहमेतद्विजानामि स नास्तीहोत्थितो यतः ॥ ६ ॥
पश्यताभेत्य तत् स्थानं यत्राशेतात्मवान् प्रभुः ।
यात ब्रूत च तच्छिष्यान् पितरं चेदं वचो मम ॥ ७ ॥
"युष्माकमग्रतो याति गालीलं त्वरया प्रभुः ।
तत्र द्रक्ष्यथ तं यूयं तस्य पूर्वप्रतिज्ञया ॥" ८ ॥
ता वृत्तान्तमिमं श्रुत्वा शवागाराद् बहिर्गताः ।
पलायाञ्चक्रिरे भीताः कस्मैचित् किञ्चनावदन् ॥ ८ ॥
तत आविरभूत् ख्रीष्टः प्रत्यूषे पुनरुत्थितः ।
सप्ताहप्रथमे वारे तस्या मरीयमोऽग्रतः ॥ १० ॥
सप्त भूतान् बहिश्चक्रे देहाद् यस्याः पुरा प्रभुः ।
मग्दलग्रामतो याच यीशोः सेवार्थमागता ॥ ११ ॥
यीशोरुत्थितिसंवादं तथा प्रत्यक्षदर्शनम् ।
सैव गत्वाब्रवीच्छिष्याञ् शोकाद् रोदनकातरान् ॥ १२ ॥
ते निशम्यामृतिं तस्य दर्शनं च तया कृतम् ।
नैव प्रमाणयामासुरविश्वासात् स्वचेतसः ॥ १३ ॥
ततस्तेषु द्वयोर्ग्रामं गच्छतो जनयोः पुनः ।
आकृत्यन्तरमाश्रित्य स्वयमाविर्बभूव सः ॥ १४ ॥
तावप्यन्यान्जनानेतदुक्तवन्तौ यथायथम् ।
किन्त्वस्यां वाचि विश्वासं तयोस्ते नैवचक्रिरे ॥ १५ ॥
एकादशानां शिष्याणां संशयम्लानचेतसाम् ।
अश्नतामग्रतो भूयः ख्रीष्ट आविरभूदथ ॥ १६ ॥

स समालोक्य तान्छिष्यान् सन्देहवशवर्त्तिनः ।
तेषां विश्वासदार्ढ्यार्थमिदं वचनमब्रवीत् ॥ १७ ॥
यूयं मद्वचनाद् यात कृत्स्नामेव वसुन्धराम् ।
इमं च मम संवादं प्रब्रूत सकलान्नरान् ॥ १८ ॥
श्रद्दधानः शुभां वाचं यो मया कथितामिमाम् ।
स्नास्यत्यनघसंकल्पः स परित्राणमाप्स्यति ॥ १९ ॥
यो न विश्वस्त एतस्मिन् संवादे परमे शुभे ।
सम्मूढो लप्स्यते दण्डं चरमेऽत्र न संशयः ॥ २० ॥
विश्वासं कुर्वतां लोके प्रथिताः शुभसिद्धयः ।
भवेयुरनुवर्त्तिन्य इमा मानवमुक्तये ॥ २१ ॥
भूतान् निःसारयिष्यन्ति ते जना मम नामतः ।
भाषामभिनवां चैव वदिष्यन्ति परस्परम् ॥ २२ ॥
मद्धीग्रविषसंयुक्तान् ग्रहीष्यन्ति सरीसृपान् ।
न मरिष्यन्ति पीत्वापि पानीयं प्राणनाशकम् ॥ २३ ॥
स्वहस्तमात्रं संस्थाप्य रोगक्लिष्टजनोपरि ।
रोगमुक्तान् करिष्यन्ति ते जनाः सर्वमानवान् ॥ २४ ॥
इत्थं शिष्यैःसहालापात् परं स परमात्मजः ।
ईशेन प्रापितः स्वर्गं स्थापितस्तस्य दक्षिणे ॥ २५ ॥
ततः प्रस्थाय तच्छिष्याः समस्ते क्षितिमण्डले ।
उदारं ख्रीष्टसंवादं श्रेयसे समघोषयन् ॥ २६ ॥
योऽसौ ख्रीष्टः परित्राता शिष्यानुग्रहकाम्यया ।
प्रामाण्यद् वचस्तेषां लक्षणैरनुवर्त्तिभिः ॥ २७ ॥

इति भारतवर्षीयचट्टग्रामजिलान्तर्गतमादार्साग्रामनिवासिना
श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमन्मर्ग्भाषितख्रीष्टोपनिषदि षोड़शोऽध्यायः ।

# CHRISTOPANISAT

## श्रीमल्लूकभाषिता

### प्रथमोऽध्यायः

St. Luke. Chapter 1. [ The preface of Luke to his whole gospel. The conception of John the Baptist, and of Christ. The prophecy of Elisabeth, and of Mary, concerning Christ. The nativity and circumcision of John. The prophecy of Zacharias, both of Christ, and of John. ]

पूर्व्वाप्तै रुपदिष्टानि वाक्यानि बहुभिर्बुधैः।
निबद्धानि प्रमाणेन गृह्यन्ते यानि लौकिकैः ॥ १ ॥
तान्येवच समोच्चाहं थियफील ब्रवीमि ते।
पूर्व्वज्ञाने तवैतेन स्थिरा श्रद्धा भविष्यति ॥ २ ॥
आसीद् यिहुदियाधीश-हेरोद-समये पुरा।
नियुक्तोऽबियपर्य्याये सखरीयाख्ययाजकः ॥ ३ ॥
हारोणवंशजा तस्येलिशावेतेति नामतः।
आसीत् पुण्यवती भार्य्या पतिसेवापरायणा ॥ ४ ॥
तावुभौ सहितौ नित्यं सत्यधर्म्मे व्यवस्थितौ।
एकाग्रमनसा युक्तौ भेजाते परमेश्वरम् ॥ ५ ॥
बन्ध्यासीदिलिशावेता तस्मात् कारणात स्तयोः।
अपत्योत्पत्तिबाधाभूद् वयसा वृद्धयोरपि ॥ ६ ॥
एकदा निजपर्य्याये गुटिकापातपूर्व्वकम्।
सखरीयोऽविशद्धूपदाहार्थं धर्म्ममन्दिरम् ॥ ७ ॥
प्रार्थनायां रताः सर्वे यदा मन्दिरतो वहिः।
स्वर्दूतं दृष्टवानेकं तदा वेद्याः स दक्षिणे ॥ ८ ॥
स दूत स्तं समालोक्य भयेन महतान्वितम्।
प्रोवाच भद्रमासीऽसि मा भूत्ते मनसो भयम् ॥ ९ ॥

तवाद्य सफला वाञ्छा चिरकालानुबन्धिनी ।
अचिरात् सोष्यते पुत्रं तव पत्नी यशस्विनी ॥ १० ॥
तमात्मनः सुतं नाम्ना योहनं त्वं करिष्यसि ।
त्वया सह प्रहृष्यन्ति मानवा यस्य जन्मना ॥ ११ ॥
भविष्यति महाभागः सोऽग्रतः परमात्मनः ।
सुरां द्राक्षारसं वापि स कदाचिन्न पास्यति ॥ १२ ॥
पवित्रेणात्मना पूर्णः स भविष्यति गर्भतः ।
करिष्यति च मङ्गलानिस्रायेलसुतान् बहून् ॥ १३ ॥
पितृत्वं सच पुत्रेषु महत्त्वं दुर्जनेषु च ।
एलियात्मप्रभावेण लोके विस्तारयिष्यति ॥ १४ ॥
ते रैशसम्प्रदायांश्च भुवने वितनिष्यति ॥ १५ ॥
इति दूतवचः श्रुत्वा सखरीयस्तमब्रवीत् ।
अहं कथं विजानामि तव वाक्यस्य सत्यताम् ॥ १६
वृद्धोऽहं वयसा दूत वृद्धा भार्य्याच मामकी ।
कथं गर्भसमुत्पत्ति र्वृद्धागर्भाशये भवेत् ॥ १७ ॥
इति तस्य वचः श्रुत्वाऽनुपपत्तिसमन्वितम् ।
गम्भीरवचसा दूतो वाक्यमुत्तरमब्रवीत् ॥ १८ ॥
गाब्रीयेलाख्यदूतोऽहं तिष्ठामीश्वरसन्निधौ ।
तुभ्यमीशसुसंवादमावेदयितुमागतः ॥ १९ ॥
यच्च माङ्गलिकं वाक्यं मयोक्तमीश्वराज्ञया ।
आफलोदयतस्तन्न वक्तव्यं कुत्रचित्त्वया ॥ २० ॥
यतो मामकसंवादे विश्वासो न कृतस्त्वया ।
भाव्यं वाक्शक्तिहीनेन ततः कारणतस्त्वया ॥ २१ ॥
तस्मिन् काले स्थिता येच जना मन्दिरतो बहिः ।
ते सर्व्वे विस्मयं जग्मुः सखरीयविलम्बनात् ॥ २२ ॥
अथ वाक्शक्तिहीनं तं ते वीक्ष्य बहिरागतम् ।
अयं धर्म्मगृहेऽपश्यत् किमपीति प्रमेनिरे ॥ २३ ॥

इङ्गितैः स्वाशयं सोऽपि मूकवत् प्रतिबोधयन् ।
निजयाजनकर्म्मान्ते जगामात्मनिकेतनम् ॥ २४ ॥
तत्कालात् सेलिशावेता धृतगर्भा यशस्विनी ।
प्रच्छन्ना संस्थिता पञ्चमासानितद्वचोऽब्रवीत् ॥ २५ ॥
प्रभुर्यदा स्वयं हर्त्तुमियेषाऽपयशो मम ॥
कृपया कृतवानीश इत्थमाचरणं तदा ॥ २६ ॥
षष्ठे मासेतु संप्राप्ते पुनस्तं दूतमीश्वरः ।
गालीले प्रेषयामास पुरे नासरताभिधे ॥ २७ ॥
स तत्र वचसा दत्तां योषेफाय महात्मने ।
आर्य्यां मरियमं नाम कुमारीमिदमब्रवीत् ॥ २८ ॥
मम प्रसादधन्यास्त्वं कल्याणि भद्रमस्तु ते ।
स्वयं त्वामनुगृह्णाति परमात्मा सनातनः ॥ २९ ॥
सा तस्य वचसोद्विग्ना समालोचनतत्परा ।
दूतोक्तशुभसंवादे स्वसंशयमकल्पयत् ॥ ३० ॥
तस्याः संशयमालोक्य दूतस्तामिदमब्रवीत् ।
मनसस्ते भयं माभून्मरीयम् जहि संशयम् ॥ ३१ ॥
ईश्वरस्य प्रसादात्त्वमन्तर्वत्नी भविष्यसि ।
महोदारं महाभागं पुत्रमेकं च सोष्यसे ॥ ३२ ॥
त्वमात्मनः प्रियं पुत्रं यीशुं नाम्ना करिष्यसि ।
व्याहरिष्यन्ति लोकेच तं जनाः परमात्मजम् ॥ ३३ ॥
पितुस्तस्य महीशस्य दायूदस्य महात्मनः ।
श्रेष्ठसिंहासनं तस्मै परमात्मा प्रदास्यति ॥ ३४ ॥
याकोबकुलजातेषु स जनेषु प्रतिष्ठितः ।
अविनश्वरराजत्वं करिष्यति युगे युगे ॥ ३५ ॥
मरीयम् तद्वचः श्रुत्वा जगाद धर्म्मचारिणी ।
पुरुषं हि न जानामि कथं गर्भो भवेन्मम ॥ ३६ ॥
दूतस्तस्या वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
पवित्रात्मन आभास स्त्वयि प्रतिफलिष्यति ॥ ३७ ॥

परात्माभासतो यस्माच्छुद्ध: पुत्रो भविष्यति।
तस्मात् परात्मन: पुत्रं तं वदिष्यन्ति मानवा: ॥ ३८ ॥
तव ज्ञातीलिशाबेता वन्ध्यापि चिरकालत:।
ईशाज्ञया दधौ गर्भं वृद्धापि वयसा सुतम् ॥ ३९ ॥
षड्भिर्मासै: स संख्यातस्तस्या: कुक्षौ विवर्द्धते।
सर्व्वशक्तिमदीशस्य वाचं ह्यर्थोऽनुधावति ॥ ४० ॥
दूतस्य तद्वच: श्रुत्वा मरीयम् वाक्यमब्रवीत्।
तथास्तु त्वं यथाऽवोचोऽनुगतास्म्यहमीश्वरम् ॥ ४१ ॥
तस्मिन्नन्तर्हिते दूते मरीयम् सहसोत्थिता।
कांचित् पर्व्वतदेशस्थां यिहूदियापुरीं ययौ ॥ ४२ ॥
प्रविश्य च महाभागा सखरीयनिकेतनम्।
शुभाशीर्व्वचनैरीलिशाबेतामभ्यवादयत् ॥ ४३ ॥
तस्या: शुभरवैरीलिशाबेताजठरे शिशु:।
ननर्त्त सहसा पूर्ण: पवित्रात्मपरार्चिषा ॥ ४४ ॥
शिशो र्मातापि गर्भान्त:परिस्पन्दनहर्षिता।
आर्य्यां मरीयमं स्नेहादब्रवीदुच्चशब्दनै: ॥ ४५ ॥
तव गर्भफलं धन्यं धन्या त्वं महिलासु च।
इह मे प्रभुमातेयं कुतो भाग्यं ममेदृशम् ॥ ४६ ॥
तव मङ्गलवादस्य ध्वनिं श्रुत्वातिमात्रत:।
मम गर्भाशये गर्भो ननर्त्त सहसा यत: ॥ ४७ ॥
साच श्रद्धावती धन्या श्रद्धा यस्या हृदि स्थिता।
परमेशवच:सिद्धि र्ध्रुवं तस्यां भविष्यति ॥ ४८ ॥
मरीयम् तद्वच: श्रुत्वा विभुभक्तिसमन्विता।
विभुसंकीर्त्तनैरेलिशाबेतां समतोषयत् ॥ ४९ ॥
गुणानीशस्य गायन्ति मम प्राणा निरन्तरम्।
मम त्रातरि सन्तुष्टा ममात्माच परात्मनि ॥ ५० ॥
स दासीमनुजग्राह हीनावस्थां गतामपि।
यतो मां कथयिष्यन्ति सर्व्वे धन्यामत:परम् ॥ ५१ ॥

कृतवान् स महत् कर्म्म मदर्थेऽमोघशक्तितः ।
पवित्रं परमं तस्य नामधेयं प्रकीर्त्तितम् ॥ ५२ ॥
ये तं बिभ्यति सर्व्वेशं निग्रहानुग्रहक्षमम् ।
ते लभन्ते दयां तस्य यावद् वंशपरम्पराम् ॥ ५३ ॥
स विक्रमयुतं कार्य्यं चकारात्मबलान्वितः ।
उत्ससादच विभ्रान्तानहङ्कारपरायणान् ॥ ५४ ॥
स सिंहासनतः शूरानवारोहयदात्मना ।
जनानवनतान् दीनानकरोच्च महोन्नतान् ॥ ५५ ॥
क्षुधार्त्तानकरोत् पूर्णान् स बहूत्तमवस्तुभिः ।
वचोविनिमयेनैव धनिनो विससर्ज्ज च ॥ ५६ ।
इस्रायेलं स्वदासं स स्वेच्छयानुगृहीतवान् ।
यथोक्तवानिदं वाक्यमस्मत्पितृगणं प्रति ॥ ५७ ॥
"अब्राहामं तथा तस्य सुहृद्वंशपरम्पराम् ।
चिरकालं दयिष्येऽहमात्मभावेन संस्थितः ॥" ५८ ॥
अथ मासत्रयं प्रायो मरीयम् तत्र संस्थिता ।
निधाय हृदि विश्वेशं जगाम स्वनिकेतनम् ॥ ५९ ॥
पूर्णे प्रसवकालेऽथ शुभयोगे शुभक्षणे ।
इलिशावेतयाऽसावि तनयः शुभलक्षणः ॥ ६० ॥
तां प्रतीशदयां श्रुत्वा तदन्तिकनिवासिनः ।
बभूवु र्बान्धवाः सर्व्वे हर्षेण महतान्विताः ॥ ६१ ॥
अष्टमे दिवसे प्राप्ते त्वक्छेदाय समागताः ।
ज्ञातय सखरीयाख्यमीषुः कर्त्तुं तमर्भकम् ॥ ६२ ॥
किन्तु तज्जननी नैवमिच्छन्तीत्युवाच बान्धवान् ।
भवन्तः कर्त्तुमर्हन्ति नाम्ना योहनमर्भकम् ॥ ६३ ॥
तस्यास्तद्वचनं श्रुत्वा बान्धवा इदमब्रुवन् ।
तव वंशे श्रुता नास्ति समाख्यैतादृशी क्वचित् ॥ ६४ ॥
ततस्ते परिपप्रच्छुः शिशोः पितरमिङ्गितैः ।
भवते बालकस्यास्य कीदृशं नाम रोचते ॥ ६५ ॥

स्तस्य वाक्शक्तिहीनत्वात् स लिपीफलकेऽलिखत् ।
"शिशुरेष मदिच्छातो योहनाख्यो भविष्यति ।।" ६६ ।।
तद्दृष्ट्वा ज्ञातयः सर्व्वे बभूवुर्विस्मिता यदा ।
लुप्ता तस्य वचःशक्तिः पुष्फोर सहसा तदा ।। ६७ ।।
सुस्पष्टवचसेशस्य धन्यवादं चकार सः ।
तेन सर्व्वे भयाक्रान्ता बभूवु स्तस्य बान्धवाः ।। ६८ ।।
यिहूदियाप्रदेशस्था इदं वृत्तं विशेषतः ।
सर्व्वे आलोचयामासुः बोधयन्तः परस्परम् ।। ६९ ।।
तत्पिता सखरीयश्च पुत्रजन्मप्रहर्षितः ।
पवित्रेणात्मना पूर्णः परमात्मानमस्तवीत् ।। ७० ।।
इस्रायेलेश्वरो धन्यः परमात्मा सनातनः ।
यतः स्वयं समेत्यैव स मुमोचात्मनः प्रजाः ।। ७१ ।।
दायूदस्य स्वदासस्य शुद्धिमत्कुलपर्व्वतात् ।
परित्राणाय चास्माकं शृङ्गमेकमजीजनत् ।। ७२ ।।
स आदिकालतः प्राह पवित्रश्रुतिभिर्यथा ।
परित्रे तथैवास्मान् वैरिणां महतो भयात् ।। ७३ ।।
अस्मत्पितृकुलं त्रातुं नीतिं स्मर्त्तुं तथात्मनः ।
कृतवान् यत् परं दिव्यं सोऽस्मदादिपितामहम् ।।
अब्राहामं प्रति प्रीतोऽस्मद्वैरिभयशान्तये ।
तदेवेदं परं दिव्यं येन लप्स्यामहे परम् ।। ७४ ।।
त्वामीशज्ञानवक्तारं लोके वक्ष्यन्ति बालक ।
ईशाध्वशुद्धये यस्मात्त्वं तदग्रे गमिष्यसि ।। ७५ ।।
ईशस्पष्टप्रजानांच कर्त्तुं पापविमोचनम् ।
परित्राणपरिज्ञानं त्वं तान् विज्ञापयिष्यसि ।। ७६ ।।
अस्मदीशकृपाविष्टस्नेहेनैतद्भविष्यति ।
येनोर्द्ध्वं राजमानोषा दृश्यत्यस्मान्निरन्तरम् । ७७ ।।
मग्नान् तमसि या नित्यं मृत्युच्छायान्विता स्तथा ।
दीपयित्वा परां शान्तिमस्माकमभिधास्यति ।। ७८ ।।

वहुधेऽथ शिशुः काले शक्तिमानात्मशक्तितः ।
यावन्न ख्यातिमाप्येष मरौ तावदुवासच ॥ ७८ ॥

इति श्रीतारांचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्रीकैरुपनिवद्धायां श्रीमज्जगद्भाषित-खोष्टोपनिषदि प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः

St. Luke, Chapter 2. [ Augustus taxeth all the Roman empire. The nativity of Christ. One angel relateth it to the shepherds : many sing praises to God for it. Christ is circumcised. Mary purified. Simeon and Anna prophesy of Christ : who increaseth in wisdom, questioneth in the temple with the doctors, and is obedient to his parents. ]

श्रीगस्त्यकैशरस्तस्मिन् काले साम्राज्यवासिनाम् ।
प्रजानां नामधेयस्य राजस्वोक्तिमादिशत् ॥ १ ॥
सुरियामण्डलाधीशकुरीणीयाख्यभूपतेः ।
प्रथमोऽयं समादेश आसीन्नामनियन्त्रणे ॥ २ ॥
अथ जग्मुः प्रजाः सर्व्वाः पुरीं राजानुमोदिताम् ।
नामस्वीकरणार्थाय स्वकुटुम्वसमन्विताः ॥ ३ ॥
पुरान्नासरताच्चैव देशाद्गालीलसंस्थितात् ।
दायूदकुलसञ्जातयोषेफोऽपि नृपाज्ञया ॥
भार्य्यां मरीयमं नाम वाग्दत्तां गर्भसंयुताम् ।
आदाय नामलेखार्थं वैतलेहममाययौ ॥ ४ ॥
प्राप्ते प्रसवकालेऽथ मरीयम् तत्र संस्थिता ।
सुषुवे प्रथमं पुत्रं विधातृवशमागता ॥ ५ ॥
स्थानाभावं ततः पान्थशालायां प्रसमीक्ष्य सा ।
तं वालं वाससाच्छाद्य गवादन्यामशाययत् ॥ ६ ॥
तस्मिन्नवस्थिताः काले प्रान्तरे मेषपालकाः ।
प्रवुद्धाः क्रमशो रात्रौ स्वव्रजं पर्य्यवेक्षिरे ॥ ७ ॥

तेषामाविरभूद्दूतः समन्तादवभासयन् ।
आत्मनस्तेजसा दीप्तः परमेशपराक्रमम् ॥ ८ ॥
अथ तान् व्यथितान् दृष्ट्वा भयेन मेषपालकान् ।
अभयेन समाश्वास्य स दूत इदमब्रवीत् ॥ ९ ॥
"परमानन्दसंवादं सर्व्वलोकसुखावहम् ।
अहमीशाज्ञया युष्मान् विज्ञापयितुमागतः ॥ १० ॥
प्रभुः खीष्टः परित्राता दायूदनगरे स्वयम् ।
परित्राणाय युष्माकमद्य मर्त्त्ये व्यजायत ॥ ११ ॥
ममाभिज्ञानतो वस्त्रखण्डेन परिवेष्टितम् ।
गवादन्यां शयानं तं यूयमासादयिष्यथ ॥ १२ ॥
इत्युच्चारणमात्रेण झटिति स्वर्गवाहिनी ।
तं दूतमुपसङ्गम्य जगौ स्वर्गसरस्वतीम् ॥ १३ ॥
"त्रिदिवे महिमेशस्य मर्त्ते शान्तिरनश्वरा ।
संप्रीतिश्च मनुष्येषु सातत्येन विराजताम् ॥" १४ ॥
स्वर्गं गतेषु दूतेषु ततस्ते मेषपालकाः ।
औत्सुक्यवशतो जग्मुः पवित्रं वेतलेहमम् ॥ १५ ॥
तेषामाविरभूद्बालः स्वर्गदूतो यथोक्तवान् ।
सुशयानो गवादन्यां पितृभ्यां परिरक्षितः ॥ १६ ॥
तं तथावस्थितं वीक्ष्य यथा स्वर्दूत उक्तवान् ।
सर्व्वं विज्ञापयामासुस्ते बालविषये वचः ॥ १७ ॥
संवादमिममाकर्ण्य मेषपालकदूतयोः ।
मेनिरे परमाश्चर्य्यं श्रोतारः पुरवासिनः ॥ १८ ॥
मरीयम् शिशुमातापि सर्व्वं संश्रुत्य तत्त्वतः ।
मनसाऽचिन्तयत् सर्व्वं न कस्मैचिदुवाच सा ॥ १९ ॥
यथोक्ति मेषपाश्चैव सर्व्वं श्रुत्वा निरीक्ष्य च ।
प्रत्याजग्मु र्निजस्थानं गायन्तः परमेश्वरम् ॥ २० ॥
अष्टमे दिवसे प्राप्ते त्वक्छेदार्थं समागताः ।
तं चक्रु र्ज्ञातयः सर्व्वे यीशुं नाम्ना स्वगोत्रजम् ॥ २१ ॥

नामधेयमिदं तस्य तस्मात् गर्भसम्भवात् ।
पूर्व्वमेवेश्वरो दूतश्चक्रेऽन्व समन्वितम् ॥ २२ ॥
अथ मोशिविधानोक्तजननाशौचकालतः ।
परं तौ शिशुमादाय यिरूशालेममागतौ ॥ २३ ॥
शिशोः संशुद्धिमिच्छन्तौ शास्त्रवाक्यानुसारतः ।
तमाख्यापयतां बालं पितरौ पुरतः प्रभोः ॥ २४ ॥
पारावतादि नैवेद्यं ददतुश्च यथायथम् ॥ २५ ॥
शिमियोनाभिधः कश्चित्तदानीं साधुसत्तमः ।
यिरूशालेममध्यास्त सर्व्वभूतहितेच्छया ॥ २६ ॥
"अभिषिक्तमदृष्ट्वा त्वं न कदाचिन्मरिष्यसि" ।
इति तच्छ्रद्धया तुष्टः पवित्रात्मा तमब्रवीत् ॥ २७ ॥
तस्मिन् प्रणोदितः काले स शक्त्या परमात्मनः ।
चिन्तयन् परमात्मानं धर्म्मधाम समाययौ ॥ २८ ॥
अचिरात् सोऽभ्यनुज्ञातः क्रोड़े निधाय तं शिशुम् ।
तुष्टाव परमात्मानं धन्यवादपुरःसरम् ॥ २९ ॥
अहं त्वया विभो सृष्टः साम्प्रतं तव वाचया ।
त्वत्प्रसादाच्च यास्यामि शाश्वतं पदमव्ययम् ॥ ३० ॥
अग्रतः सर्व्वजातीनां सम्भूतं तव शक्तितः ।
नेत्राभ्यामद्य पश्यामि परित्राणपरायणम् ॥ ३१ ॥
इयं सृष्टिः परा कीर्त्तिस्त्वविस्रायेलसन्ततेः ।
अस्य भासानुभास्यन्ति समस्ताः परजातयः ॥ ३२ ॥
भारतीं शिशुमाश्रित्य भगवद्भक्तभाषिताम् ।
शिशो माता पिता चैव मेनातेऽतीव विस्मयम् ॥ ३३ ॥
आशीर्व्वादं ददौ ताभ्यां शिमियोनो नरोत्तमः ।
मातरं च शिशोस्तस्य वक्तव्यमिदमब्रवीत् ॥ ३४ ॥
अस्याविर्भावतः स्यातामिस्रायेलनिवासिनाम् ।
उत्थानपतने चिह्नं विरोधस्येह भाति च ॥ ३५ ॥

व्यथिताः सुग्रस्तव प्राणाः ध्रुवं मृत्यो महासिना ।
तेनान्तर्निहिता चिन्ता बहूनां वहिरेष्यति ॥ ३६ ॥
आसेरवंशसम्भूता पनूयेलसुता सती ।
शुश्राव तत्त्वतः सर्व्वं हान्नापि सत्यवादिनी ॥ ३७ ॥
सा सप्त वत्सरान् भर्त्रा सहोषित्वा पतिव्रता ।
मृते भर्त्तरि वैधव्याद् ब्रह्मचर्य्यपरायणा ॥
चतुसंख्याधिकाशीतिवर्षाणि धर्म्ममन्दिरे ।
प्रार्थनानशने कृत्वा संस्थिता धर्म्मचारिणी ॥ ३८ ॥
सानुभूयेशमाहात्म्यं वचनं योशुसंश्रितम् ।
मुक्तिं प्रतीक्षमाणेभ्यः कथयामास तत्त्वतः ॥ ३९ ॥
अथ कार्य्यं समाधाय सर्व्वं शास्त्रानुमोदितम् ।
गालीलस्थं पुरं तेऽपि ययुर्नासरताविधम् ॥ ४० ॥
अथ सम्पूर्णसर्व्वाङ्गो ववृधे शिशुरात्मवान् ।
लेभे विद्यां बलंचैव परमेशप्रसादतः ॥ ४१ ॥
सम्प्राप्ते द्वादशे वर्षे प्रतिवर्षं यथेयतुः ।
तथैतां पितरौ तस्य यिरुशालेमपत्तनम् ॥ ४२ ॥
निस्तारपर्व्वपर्य्यन्तं स्थित्वा च योशुना सह ।
तं त्यक्त्वा भ्रान्तितस्तत्र प्रतस्थाते गृहं प्रति ॥ ४३ ॥
पितृभ्यां योशुरज्ञातो यिरुशालेमपत्तनम् ।
अध्यास्त ज्ञानिभि. सार्द्धं ब्रह्मचारिव्रते स्थितः ॥ ४४ ॥
सह यात्रिभिरभ्येति योशुरित्यनुमानतः ।
एकाहगम्यमध्वानं पितरौ तस्य जग्मतुः ॥ ४५ ॥
किन्तु तत्र प्रतीक्ष्यापि दृष्ट्वा पुत्रमनागतम् ।
तौ तं शीघ्रमन्वैषतां ज्ञातिषु स्वजनेषु च ॥ ४६ ॥
तत्रापि तमनासाद्य यिरुशालेममागतौ ।
तत्र त्रिदिनमन्विष्य प्राप्तौ तं धर्म्ममन्दिरे ॥ ४७ ॥
गुरुमध्ये समासीनः सोऽशृणोद् गुरुभाषणम् ।
प्रश्नांश्च विविधांश्चक्रे हेतुवादसमन्वितान् ॥ ४८ ॥

तस्य प्रश्नोत्तरे बुद्ध्वा पण्डिता विपुलां मतिम् ।
सभायां विस्मितास्तस्थुरपरैः श्रोतृभिः सह ॥ ४९ ॥
तं तथाविधमालोक्य धर्म्मचिन्तापरायणम् ।
अतीव विस्मिता तस्य जननी वाक्यमब्रवीत् ॥ ५० ॥
किमावां प्रति वत्स त्वं कृतवान् कार्य्यमीदृशम् ।
पश्य मां तव तातं च तवान्वेषणविह्वलौ ॥ ५१ ॥
स तामुवाच किं तेऽस्ति ममान्विष्टौ प्रयोजनम् ।
मया पितुर्गृहे स्थेयमिति तथ्यं न वेत्सि किम् ॥ ५२ ॥
तस्य वाक्यस्य तात्पर्य्यं बुबुधाते न तौ यदा ।
स ताभ्यां सह सन्धाय ययौ नासरतं तदा ॥ ५३ ॥
वासं चाकल्पयत्तत्र मातापित्रोर्वशं गतः ।
तस्य माताच तद्वृत्तं कस्मैचिदपि नाब्रवीत् ॥ ५४ ॥
अथेशानुग्रहज्ञानवयोभि र्यीशुरात्मवान् ।
निःश्रेयसे मनुष्याणां वव्रृधेऽभ्युदयायच ॥ ५५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमल्लूगभाषितख्रीष्टोपनिषदि द्वितीयोऽध्यायः ।

## तृतीयोऽध्यायः

St. Luke. Chapter 3. [ The preaching and baptism of John: his testimony of Christ. Herod imprisoneth John. Christ baptized, receiveth testimony from heaven. The age, and genealogy of Christ from Joseph upwards. ]

यदा तिबिरियाख्यस्य कैसरस्य महीपतेः ।
राज्यस्य वत्सरे पञ्चदशे यिहूदियाभुवः ॥ १ ॥
बभूव शास्ता पन्थीयः पीलातो जनरञ्जनः ।
चतुर्थांशाधिपश्चैव हेरोदो गालिलाधिपः ॥ २ ॥
त्राखोनीं यितुरीयांच तद्भ्राता फिलिप्पोऽशिसत् ।
शशासाबिलिनीं चैव लुषाणियः प्रतापवान् ॥ ३ ॥

कायाफाह्वाननावास्तां राज्यमुख्यपुरोहितौ।
तदा प्रादुरभूदीशभारती योहनं प्रति ॥ ४ ॥
वाणीमेतामनुसृत्य साधुः स्नापकयोहनः।
सत्वरं देशमागत्य यर्द्दनान्तिकसंस्थितम् ॥
परित्राणाय पापेभ्यः शोधनाय च चेतसः।
बहु प्रचारयामास पवित्रमवगाहनम् ॥ ५ ॥
यदुक्तवान् यिशायाहः पुस्तके वाक्यनामके।
"प्रान्तरे मरुदेशस्य कस्यचिच्छ्रूयते रवः।
प्रभोः पथो विनिर्म्माणं युष्माभिः क्रियतामिति ॥ ६ ॥
उपत्यका भविष्यन्ति समस्ताः परमोन्नताः।
निम्नाश्च पर्व्वताः क्षुद्रा महान्तो भूधरास्तथा ॥ ७ ॥
विषमाः साम्यमेष्यन्ति वक्राणि यन्त्यवक्रताम्।
द्रक्ष्यन्तीशपरित्राणं पृथिव्यां सर्व्वमानवाः" ॥ ८ ॥
स्नापनार्थं ततो दृष्ट्वा जनसङ्घान् समागतान्।
निवार्य्य स्नापनं तेषां स वाक्यमिदमब्रवीत् ॥ ९ ॥
सर्पवंश्या विमोक्षाय महाकोपाद्भविष्यतः।
कोऽत्र वः प्रेरयामास प्रत्यग्बोधविवर्ज्जितान् ॥ १० ॥
अवश्यमेव भोक्तव्यं युष्माभिः कर्म्मणः फलम्।
अब्राहामस्य नाम्नापि न निवृत्तिं तदाप्स्यति ॥ ११ ॥
सर्व्ववित् सर्व्वलोकेशः सर्व्वशक्तिसमन्वितः।
ईशो जनयितुं शक्त स्तत्पुत्रं प्रस्तरादपि ॥ १२ ॥
पापिपादपमूलेषु सती परशुरूपिणी।
ऐश्वरी संहृतिः शक्तिरिदानीमपि संस्थिता ॥ १३ ॥
मूलेन सहितांश्छित्वा सा शक्ति रतिशायिनी।
क्षेप्स्यति ज्वलने दीप्ते तामसत्फलपादपान् ॥ १४ ॥
तच्छ्रुत्वा परिपप्रच्छु र्जनसङ्घाः समागताः।
यद्येवं किं करिष्यामः सर्व्वे वयमतः परम् ॥ १५ ॥

स तेषां वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत्।
यथा यत्नतवस्त्राणि दरिद्रेभ्यः प्रदीयताम् ॥ १६ ॥
अथ कर्त्तव्यजिज्ञासून् स शुल्कादायिनोऽब्रवीत्।
मा संगृह्णीत निर्द्दिष्टराजस्वादधिकं धनम् ॥ १७ ॥
जिज्ञासून् सैनिकानाह मा पीड़यत मानवान्।
मारोपयत मिथ्या च, स्वभृतौ परितुष्यत ॥ १८ ॥
ख्रीष्टः किमयमित्येवमथ तर्कयतो जनान्।
योहनः कथयामास स्थितान् ख्रीष्टप्रतीक्षया ॥ १९ ॥
मयावगाहिता यूयं सलिलेनैव केवलम्।
यो मत्तः परमायाति स मत्तः शक्तिमत्तरः ॥ २० ॥
नाहं योग्योऽस्मि मोचेऽपि बन्धन्योस्तदुपानहोः।
पुतात्मज्ञानवह्निभ्यां स वः स्नानं विधास्यति ॥ २१ ॥
स स्वीयज्ञानसूर्पेण स्वीयसृष्टेरसत्खलान्।
संशोध्य साधुगोधूमान् कुशूले संग्रहीष्यति ॥ २२ ॥
ततः परं गृहीत्वाच स्वहस्तेन पृथक् कृतान्।
सर्व्वान् धक्ष्यत्यसत्तुषाननन्तनरकाग्निना ॥ २३ ॥
स इत्थं बहुतत्त्वानि संवादं च परात्मनः।
बोधयामास धर्म्मात्मा योहनः सर्व्वमानवान् ॥ २४ ॥
अथ सोऽवैधसम्बन्धात् स्वभ्रातृजायया सह।
दोषैरनेकैश्च हेरोदं भर्त्सयामास पार्थिवम् ॥ २५ ॥
स तेन परिवादेन कारागारे भयङ्करे।
बबन्ध योहनं साधुं क्रोधेन महताऽन्वितः ॥ २६ ॥
अथापरैः सह स्नातं येशुं ध्यान-परायणम्।
प्रविवेश पवित्रात्मा कपोताभस्त्रिविष्टपात् ॥ २७ ॥
"त्वं मे प्रियतमः पुत्रः प्रीतिश्च त्वयि मामकी।"
इतीश्वरी तदा वाणी त्रिदिवेऽपि समुत्थिता ॥ २८ ॥
प्रायस्त्रिंशे ततो वर्षे लोकानुग्रहकाम्यया।
आरेभे स्वानि कार्य्याणि स्वशक्त्या येशुरात्मवान् ॥ २९ ॥

लौकिकव्यवहारेण स योषेफादजायत ।
स जात एलितः सोऽपि समजायत मत्ततात् ॥ ३० ॥
तं लेविर्जनयामास तं च मल्कि: प्रतापवान् ।
तं यान्नो जनयामास योषेफस्तं व्यजोजनत् ॥ ३१ ॥
स मत्तथियतो जात आमोष स्तं व्यजीजनत् ।
स नञ्जमात् सुतोजात इसलिस्तं व्यजीजनत् ॥ ३२ ॥
स नगैः सुत उत्पन्नः स माढ़तो व्यजायत ।
स मत्तथियतो जातः शिमियिस्तं व्यजीजनत् ॥ ३३ ॥
स योधिफात् सुतो जात स्तंच यूदा व्यजोजनत् ।
स योहनात् सुतो जातो रोषास्तं च व्यजीजनत् ॥ ३४ ॥
स सरुब्बाबिलाज्जातः सचाभूत् षल्टियेलतः ।
स नेरेः सुत उत्पन्न स्तंच मल्कि व्यजोजनत् ॥ ३५ ॥
स आद्देः सुत उत्पन्नः कोषम स्तं व्यजोजनत् ।
स इल्मोदमतो जातः स एरितो व्यजायत ॥ ३६ ॥
योषिस्तं जनयामास स जात इलियेषरात् ।
स योरोमात् सुतो जातो मत्ततस्तं व्यजीजनत् ॥ ३७ ॥
तं लेवि र्जनयामास स जातः शिमियोनतः ।
तं यूदा जनयामास योषेफस्तं व्यजोजनत् ॥ ३८ ॥
स योननात् सुतो जातः स यञ्च इलियाकिमात् ।
स मिलेयात उत्पन्नो मेननस्तं व्यजोजनत् ॥ ३९ ॥
स मत्ततात् सुतो जातो नाथनस्तं व्यजोजनत् ।
स दायूदात् सुतो जातो यिशयस्तं व्यजोजनत् ॥ ४० ॥
स ओबेदात् सुतो जातो बैयसस्तं व्यजोजनत् ।
स सल्मोनात् सुतो जातः स जातो नहशोनतः ॥ ४१ ॥
आम्मीनादवतः सोऽभूदरामस्तं व्यजोजनत् ।
स हिष्रोणात् सुतो जातः पेरसस्तं व्यजोजनत् ॥ ४२ ॥
स यिहूदाः सुतो जातो याकोबस्तं व्यजोजनत् ।
स इस्हाकात् सुतो जातोऽब्राहामस्तं व्यजोजनत् । ४३ ॥

स तेरह्वात् सुतो जातो नाह्योरस्तं व्यजोजनत्।
स सरूगात् सुतो जातो रियुस्तं च व्यजोजनत् ॥ ४४ ॥
स पेलगात् सुतो जात एवरस्तं व्यजोजनत्।
स शेलह्वात् सुतो जातः कैननस्तमजोजनत् ॥ ४५ ॥
सोऽर्फच्चदात् सुतो जातः शेमस्तं च व्यजोजनत्।
स नोहात् सुत उत्पन्नो लेमकस्तमजोजनत् ॥ ४६ ॥
स मथूशेलह्वाज्जातो ह्नोकस्तं व्यजोजनत्।
स येरदात् सुतो जातः सच माह्लललेलतः ॥ ४७ ॥
स कैननात् सुतो जात इनोशस्तं व्यजोजनत्।
स शेथात् सुत उत्पन्न आदमस्तं व्यजोजनत् ॥ ४८ ॥
तमोशो जनयामास परमात्मा सनातनः ॥ ४९ ॥

इति श्रीताराचरणचक्रवर्त्तिकंदर्पणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गभाषितखीष्टोपनिषदि तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः

St. Luke. Chapter. 4. [ The temptation and fasting of Christ. He overcometh the devil: beginneth to preach. The people of Nazareth admire his gracious words. He cureth one possessed of a devil, Peter's mother in law, and divers other sick persons. The devils acknowledge christ, and are reproved for it. He preacheth through the cities. ]

अथ पूतात्मना पूर्णो यर्द्दनाद् योशुरागतः।
आत्मना प्रेरितः प्राप्तो मरोः प्रान्तरमात्मवान् ॥ १ ॥
चत्वारिंशदहोरात्रमुपोष्य परमात्मजः।
यदा क्षुधमनुप्राप्तो मायावी तं तदागमत् ॥ २ ॥
स उवाच यदीशस्य भवसि त्वं सुतो ध्रुवम्।
आदिश्य प्रस्तरानेतान् कुरु पूपान् मदन्तिके ॥ ३ ॥
योशुस्तमब्रवीच्छास्त्रवाक्यानामनुसारतः।
ईशवाक्यं विना पूपमात्रेण नास्ति जीवनम् ॥ ४ ॥

मायावी तं ततो नीत्वा गिरिशृङ्गं महोन्नतम् ।
समस्तपृथिवीराज्यं दर्शयामास तत्क्षणात् ॥ ५ ॥
उवाच च महद्राज्यं यद्दृष्टमिदं तवाग्रतः ।
तदस्ति संस्थितं सर्व्वं केवलं मम शासने ॥ ६ ॥
'मत्समक्षं पतित्वा चेत्त्वं मां नमसि भक्तितः ।
तुभ्यमेव प्रदास्यामि मद्राज्यं सचराचरम् ॥ ७ ॥
यीशुस्तमुत्तरं प्राह शास्त्रवाक्यानुसारतः ।
उपास्यश्च नमस्यश्च परमात्मैव केवलम् ॥ ८ ॥
ततस्तं यिरूशालेमं नीत्वा दुष्कृतलम्पटः ।
शिखरे धर्म्मगेहस्य स्थापयित्वेदमब्रवीत् ॥ ९ ॥
उत्पत त्वमितोऽधस्ताद् भवसीश सुतो यदि ।
अस्तीदं लिखितं यस्मात्काले पूर्व्वतरैः कृते ॥ १० ॥
"स विभुस्तव रक्षार्थं दूतानाज्ञापयिष्यति ।
रक्षिष्यन्ति करैस्तेच त्वत्पदं शैलघाततः ॥" ११ ॥
यीशुस्तमुत्तरं प्राह स्मरोक्तिं कथितामिमाम् ।
"न कदाचित् परीक्षेत स्वेश्वरं परमेश्वरम् ॥" १२ ॥
इत्थं परीक्षया तस्य ज्ञात्वा निर्व्वासनं मनः ।
उपेक्षितुं कियत् कालं स मायावी तमत्यजत् ॥ १३ ॥
अथोग्रतपसा लब्ध्वा परमात्मपराक्रमम् ।
यीशुर्गालीलमागत्य महतीं कीर्त्तिमाप्तवान् ॥ १४ ॥
तत्र धर्म्मगृहं गत्वा सत्कथामुपदिश्य च ।
प्रशंसामर्जयामास सर्व्वैर्श्चोत्रनुमोदिताम् ॥ १५ ॥
ततः स प्रोषितो यत्र पुरा नासरते पुरे ।
तस्य धर्म्मगृहं गत्वा निजरीत्यनुसारतः ॥
स्तोत्रं पठितुमारेभे विश्रामदिवसे यदा ।
यिशायाहकृतं ग्रन्थं जना स्तस्मै ददुस्तदा ॥
स ग्रन्थं सहसोद्घाट्य यानि वाक्यानि लब्धवान् ।
तानि संश्रावयामास वाक्यानीमानि तत्त्ववित् ॥ १६ ॥

"येनाहमभिषिक्तोऽस्मि तेनेशेनाहमाश्रितः ।
सद्वार्त्ता दीन-बोधाय तेनाहं प्रेषितो यतः ॥ १७ ॥
अस्वस्थान् सुस्थितान् कर्त्तुं बद्धानां च विमुक्तये ।
दातुं नेत्राण्यनेत्रेभ्य उद्धर्त्तुं परपीड़ितान् ॥
ईशानुमतवर्षस्य पृथिव्यां घोषणाय च ।
ईश्वरेण नियुक्तोऽस्मि दिव्यजन्मवपुःक्रियः ॥" १८ ॥
ततः स पुस्तकं बद्ध्वा भृत्यहस्ते तदर्पयन् ।
उपविष्टोऽब्रवीद्धर्म्मगृहस्थान् विस्मिताञ्जनान् ॥ १९
अद्य वः शास्त्रवाक्यस्य जाता श्रवणजा मतिः ।
तेऽब्रुवन् सत्यमित्येतद् वचसा तस्य विस्मिताः ॥ २० ॥
"किं योषेफसुतोनाय"मित्यादिवचसा ततः ।
वीक्ष्य तान् विगतश्रद्धान् योशुर्व्वचनमब्रवीत् ॥
स्वदेशात् स्वकुलाच्चैव वहिराप्तः प्रपूज्यते ॥ २१ ॥
एलियस्य विभोः काले यदा सार्द्धत्रिवत्सरम् ।
दुर्भिक्षमभवद् घोरमाकाशस्यावरोधतः ॥
तद्देशायेलवासिन्यो बह्व्यो विगतभर्त्तृकाः ।
आसन् न प्रेषित स्तासु भगवानेलियः क्वचित् ॥ २२ ॥
किन्तु सीदोनदेशस्य सरिफन्नगरस्थिताम् ।
प्रेरितोऽसौ महाभागः कांचिन्मृतधवां प्रति ॥ २३ ॥
तथाप्यस्येलिशायस्य समये बहुकुष्ठिनः ।
इस्रायेले वसन्तोऽपि नच ते प्रकृतिं गताः ॥ २४ ॥
नामानः केवलं तेषु सुरीयः शुद्धिमाप्तवान् ।
इति तस्य वचः श्रुत्वा समाजगृहसंस्थिताः ॥
जनाः सर्व्वे नयन्तिस्म क्रुद्धास्तं नगराद्बहिः ॥ २५ ॥
निपातयितुमीषुस्ते यदा तं पर्व्वताग्रतः ।
स मध्येन व्रजंस्तेषां स्थानमन्यत्तदाययौ ॥ २६ ॥
ततः कफरनाहूमं प्रविश्य परमात्मजः ।
विश्रामदिवसे ज्ञानं मानवानुपदिष्टवान् ॥ २७ ॥

श्रोतारस्तस्य सामर्थ्ययुक्तं वाक्यं निशम्यच ।
बभूवुर्विस्मिताः सर्व्वे शक्तिसम्मोहिता इव ॥ २८ ॥
ततः प्रपीड़ितः कश्चिन्नरो भूताभिषङ्गतः ।
यीशुं तत्र समालोक्य साक्रोशमिदमब्रवीत् ॥ २९ ॥
अस्माकं कोऽस्ति सम्बन्धो हे यीशो भवता सह ।
स एव परमः शुद्धस्त्वं जातः परमात्मनः ॥ ३० ॥
इत्यहं प्रविजानामि मम शक्तिप्रभावतः ।
यीशुस्तमुक्तवान् मौनी भवास्माद् वहिरेहि च ॥ ३१ ॥
स च संरुह्य तस्याङ्गं सोच्चनादं वहिर्ययौ ।
एतेन विस्मिताः सर्व्वे तस्य शक्तिं प्रतुष्टुवुः ॥ ३२ ॥
तदा प्रभृति सुख्यातिस्तस्यालौकिककर्म्मणः ।
व्यानशे पत्तने कृत्स्ने जनवक्त्राद्विनिर्गता ॥ ३३ ॥
अथ धर्म्मगृहात्तस्मान्निष्क्रम्य परमात्मजः ।
शिमोनभवनं धीमान् सहशिष्यः प्रविष्टवान् ॥ ३४ ॥
ते तं प्रसादयामासुर्ये जना स्तत्र संस्थिताः ।
प्रभावेण शिमोनस्य श्वश्रा वारयितुं ज्वरम् ॥ ३५ ॥
स ज्वरं तर्ज्जयामास यीशुस्तस्याः स्थितोऽन्तिके ।
साच सद्यो ज्वरान्मुक्ता पर्य्यचारीत् प्रियातिथीन् ॥ ३६ ।
यथाकालमथादित्ये गन्तुमस्तं समुद्यते ।
रोगिणो विविधांस्तस्य जना अन्तिकमानयन् ॥ ३७ ॥
स तेषां शरीरे तस्य केवलं हस्तमर्पयन् ।
यीशुर्निरामयांश्चक्रे बहूंश्च भूतपीड़ितान् ॥ ३८ ॥
"ईशपुत्रो भवान् ख्रीष्ट" इत्युच्चैस्ते तमब्रुवन् ।
स तान्निवारयामास ख्रीष्टत्वं परिभर्त्सयन् ॥ ३९ ॥
ततः प्रातः स निर्याय निर्जनं स्थानमाययौ ।
इतश्चेतश्च धावन्तो जनास्तमनुसन्दधुः ॥ ४० ॥
ततस्ते तं समासाद्य तस्य सन्निधिमागताः ।
तेषां सकाशादन्यत्र गमनात्तं न्यवारयन् ॥ ४१ ॥

सोऽब्रवीदीश्वसंवादमन्येषु नगरेष्वपि ।
वक्ष्याम्यवश्यमेवाहं तदर्थांहि ममागतिः ॥ ४२ ॥
इत्युक्त्वा गालिलक्षेत्रे सर्व्वत्र विचरन् सुखम् ।
यीशुः प्रचारयामास संवादं परमात्मनः ॥ ४३ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्नूग्भाषित-खीष्टोपनिषदि चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः

St. Luke. Chapter 5. [Christ teacheth the people out of Petr's ship : in a miraculous taking of fishes, sheweth how he will make him and his partners fishers of men : cleanseth the leper : prayeth in the wilderness : healeth one sick of the palsy : calleth Matthew the publican : eateth with sinners, as being the physician of souls : foretelleth the fastings and afflictions of the apostles after his ascension : and likeneth fainthearted and weak disciples to old bottles and worn garments. ]

गिनेषरह्रदस्याथ यीशुस्तीरमुपागतः ।
व्याकुलांश्छावयामास जनानीश-सरस्वतीम् ॥ १ ॥
ह्रदतीरान्तिकेऽपश्यत्तदा नौकाद्वयं प्रभुः ।
दृष्टवान् धीवरांश्चैव जालप्रक्षालने रतान् ॥ २ ॥
शिमोनस्य ततो नावमारुह्य परमात्मजः ।
किञ्चिद्दूरं स्थलाद् यातुं तमाह विनयान्वितः ॥ ३ ॥
उपविश्य च नौकायामुपदिश्य समागतान् ।
शिमोनमवदन्नावमगाधसलिलं नय ॥ ४ ॥
तत्र निक्षिप जालानि मत्स्यान् धर्त्तुमशङ्कितः ।
तस्य तद्वचनं श्रुत्वा शिमोन इदमब्रवीत् ॥ ५ ॥

समस्तां रजनीं नाथ वयं कृतपरिश्रमाः ।
निराशा इह तिष्ठामः किमप्यप्राप्य यद्यपि ॥ ६ ॥
भवतो वचनाज्जालं निक्षेप्स्यामि तथाप्यहम् ।
इत्युक्त्वासौ तथा कुर्व्वन् मत्स्यसङ्घान् निबद्धवान् ॥ ७ ॥
विशीर्य्यमाणमालोक्य ततो जालस्य बन्धनम् ।
सङ्गिनो धीवरानन्यानाजुहाव स तत्क्षणात् ॥ ८ ॥
त आगत्य तथा नावावुभे मत्स्यैरपूरयन् ।
मत्स्यभारादुभे नावौ निमग्नेऽभवतां यथा ॥ ९ ॥
तद्दृष्ट्वा विस्मितः पित्रः शिमोनो यीशुजानुनोः ।
पतित्वाह भवान् मत्तोऽपसरत्वघकर्म्मणः ॥ १० ॥
यीशुस्तान् धीवरान् सर्व्वाञ्छिमोनसहभागिनो ।
याकोवयोहनौ चैव समीक्ष्यात्यन्तविस्मितान् ॥
शिमोनं कथयामास मा भैषीस्त्वं कथञ्चन ।
अद्य प्रभृति लोके त्वं नरधारी भविष्यसि ॥ ११ ॥
ततो नौकाः स्थलं नीत्वा त्यक्तसर्व्वपरिग्रहाः ।
सर्व्वे तेऽनुययु र्यीशुं प्रीतये परमात्मनः ॥ १२ ॥
कुष्ठी कश्चित्तदागत्य तं प्रणम्येदमब्रवीत् ।
यदि ते मय्यनुक्रोशः पवित्रं कुरु मां प्रभो ॥ १३ ॥
स तस्य वचसा प्रीतस्तथास्त्विति वचोऽब्रवीत् ।
स्पृष्ट्वा च निजहस्ताभ्यां तं चकार निरामयम् ॥ १४ ॥
अथ तं प्रस्थितं वीक्ष्य प्रोवाच परमात्मजः ।
मा वादीस्त्वमिदं वृत्तं हर्षादपरमानवम् ॥ १५ ॥
गच्छ त्वं याजकस्थानं निजरूपं प्रदर्शय ।
नैवेद्यं मोशिनादिष्टं याजकेभ्यः प्रयच्छ च ॥ १६ ॥
यथा यथा वारयित्वा स आत्मगुप्तिमिष्टवान् ।
तथा तथाऽधिकं तस्य व्यानशे विपुलं यशः ॥ १७ ॥
स रुग्णान् श्रोतृवर्गांश्च तोषयित्वा समागतान् ।
सततं प्रार्थयामास निःसङ्गो यत्र कुत्रचित् ॥ १८ ॥

कदाचिद् गालिलादिभ्यः प्रदेशेभ्यः समागतैः ।
फरीशिभि स्तथा शास्त्राध्यापकैः परिवेष्टितः ॥
यीशुः सुखमयीं शक्तिमादायाश्रिश्रयद् यदा ।
तदा शयन आरोप्य पक्षाघातगदार्दितम् ॥
जनमेकं समानिन्युस्तत्र केचन वाहकाः ।
अयतन्त च तं नेतुं परमात्मजसन्निधौ ॥ १९ ॥
ते भित्त्वा दुष्प्रवेशत्वाद् वाहका हर्म्यमस्तकम् ।
सपर्य्यङ्कं जनं निन्युर्यीशुर्यत्र स्थितोऽभवत् ॥ २० ॥
यीशु स्तेषां परां श्रद्धां ज्ञात्वा रोगिनमब्रवीत् ।
तव वत्स क्षमा जाता पापानां महतामिह ॥ २१ ॥
उपाध्यायास्तु तच्छ्रुत्वा वचनं यीशुभाषितम् ।
मनसा चिन्तयन्तिस्म किमयं प्रोक्तवानिति ॥ २२ ॥
विनिन्दतीश्वरं साक्षादयमुक्तोदृशं वचः ।
को विना परमात्मानं समर्थः पापमुक्तये ॥ २३ ॥
यीशु स्तेषामभिप्रायं ज्ञात्वेदं वाक्यमब्रवीत् ।
कथं विप्रतिपद्यन्ते भवन्तो वचने मम ॥ २४ ॥
पापानां ते क्षमा जाताथवा त्वं विहरोत्थितः ।
वाक्ययोरनयो र्मध्ये कतरच्छोभनं भवेत् ॥ २५ ॥
शक्तो मनुष्यपुत्रोऽपि नृणां पापनिवृत्तये ।
भवतामवबोधाय सोऽब्रवीदीदृशं वचः ॥ २६ ॥
इत्युक्त्वा रोगिणं प्राहोत्तिष्ठ त्वमात्मनो गृहम् ।
गच्छ पर्य्यङ्कमादाय निजेन शिरसा वहन् ॥ २७ ॥
सच पर्य्यङ्कमादाय समक्षं परिपश्यताम् ।
ईशं स्तुत्वा सुखीभूत्वा जगाम स्वगृहं प्रति ॥ २८ ॥
तद्दृष्ट्वा विस्मिताः सर्व्वे परमेश्वरमस्तुवन् ।
अस्तुवंश्च महत् कार्य्यमद्य दृष्टमलौकिकम् ॥ २९ ॥
तस्मात् स्थानादपाक्रम्योपविष्टं शुल्कवेश्मनि ।
लेविं नाम जनं कंचिद्ददर्श परमात्मजः ॥ ३० ॥

स तं प्राहास्तु भद्रं ते त्वमेहि मामनुव्रज ।
तत्क्षणात् सोऽनुवव्राज लेविः परमधार्म्मिकः ॥ ३१ ॥
ततो लेवि महाभागो गत्वा निजनिकेतनम् ।
योशोरर्थे महद् भोज्यं श्रद्धया समकल्पयत् ॥ ३२ ॥
करसंग्राहका स्तत्र बहवोऽनेऽच मानवाः ।
सशिष्ययोशुना सार्द्धं भोजनार्थं समागताः ॥ ३३ ॥
योशोः शिष्यांस्तदापृच्छन् सोपाध्यायाः फरीशिनः ।
यूयं कथमिहाश्नीथ करग्राहकपापिभिः ॥ ३४ ॥
तच्छ्रुत्वाऽशोभनं वाक्यं योशुरुत्तरमब्रवीत् ।
नहि वैद्याश्चिकित्सन्ति निर्गदान् स्वौषधैः ॥ ३५ ॥
परित्राणाय साधूनां पृथिवीं नाहमागतः ।
पापिनां चित्तशुद्ध्यर्थं ममात्रागमनं यतः ॥ ३६ ॥
ततस्ते पुनरूचुस्तं योहनस्य तपस्विनः ।
शिष्या अनशनं ध्यानं चानुतिष्ठन्त्यनेकशः ॥
प्रायस्तथैव कुर्व्वन्ति शिष्याः फरीशिनामपि ।
किमर्थं भवतः शिष्या अश्नन्त्यते पिवन्तिच ॥ ३७ ॥
श्रुत्वाथ संशयं तेषां योशुरुत्तरमब्रवीत् ।
उपवासयितुं शक्ताः किं यूयं वरसङ्गिनः ॥ ३८ ॥
सङ्गिनस्तान् परित्यज्य गमिष्यति वरो यदा ।
उपवासं करिष्यन्ति तदा तेऽपि न संशयः ॥ ३९ ॥
न कश्चिन्नववस्त्रांशं जीर्णे वाससि योजयेत् ।
तथाकृते नवं छिन्नं स्याज्जीर्णंच न सज्जते ॥ ४० ॥
नवो वा वारुणीमण्डो जीर्णकूप्यां न धीयते ।
तथाकृते स्रवेन्मद्यं कूपीचापि विदीर्य्यते ॥ ४१ ॥
जीर्णं द्राक्षारसं पीत्वा न कश्चिन्नवमिच्छति ।
यतो बहुगुणैर्युक्तं स ब्रवीति पुरातनम् ॥ ४२ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्गुरुभाषितख्रीष्टोपनिषदि पञ्चमोऽध्यायः ।

## षष्ठोऽध्याय:

St. Luke. Chapter 6. [Christ reproveth the Pharisees' blindness about the observation of the Sabbath, by scripture, reason, and miracle: chooseth twelve apostles: healeth the diseased: preacheth to his disciples before the people of blessings and curses: how we must love our enemies: and join the obedience of good works to the hearing of the word: lest in the evil day of temptation we fall like an house built upon the face of the earth, without any foundation.]

योशु र्विश्रामवारेऽथ सशिष्य: शिष्यवत्सल: ।
प्रान्तरे स्वेच्छया भ्राम्यन् शस्यक्षेत्रेषु निर्ययौ ॥ १ ॥
क्षुधार्त्ता स्तत्र तच्छिष्यान् भुञ्जानाञ्छस्यमञ्जरी: ।
दृष्ट्वा फरोशिनो वाक्यं योशुं प्रति बभाषिरे ॥ २ ॥
अभिधेयं भवच्छिष्या विश्रामदिवसेऽपिच ।
प्रभो किमनुतिष्ठन्ति भुक्त्वेमा: शस्यमञ्जरी: ॥ ३ ॥
तेषां तद्वाक्यमाकर्ण्य योशुरुत्तरमब्रवीत् ।
भवद्भिर्विधितत्त्वज्ञै र्दायूद: स्मर्य्यते न किम् ॥ ४ ॥
धर्म्मगेहं प्रविश्यासौ सह शिष्यै र्बुभुक्षित: ।
दृश्यपूपं समादाय सशिष्यो भुक्तवान्नकिम् ॥ ५ ॥
यस्त्वासीत् खलु भोक्तव्य: केवलं धर्म्मयाजकै: ।
स तेन खादित: पूपो लङ्घयित्वानुशासनम् ॥ ६ ॥
किं भवेद् बहुनैतेन ज्ञातेन भवतामिह ।
विश्रामदिवसस्यापि यत: कर्त्ता नरात्मज: ॥ ७ ॥
स प्रविश्य पुनर्धर्म्मगृहमात्मवतां वर: ।
दृष्टवान् मानवं कंचित् क्षीणहस्तमवस्थितम् ॥ ८ ॥
तत्राभियोगमिच्छन्त: समवेता: फरोशिन: ।
विश्रामदिवसे वर्ज्यमैक्षन्त योशुचेष्टितम् ॥ ९ ॥
तज्ज्ञात्वा रोगिणं प्राह योशु"स्त्वमिह तिष्ठ भो:" ।
फरोशिनश्च सम्बोध्य पप्रच्छेदं विदां वर: ॥ १० ॥

किं कार्य्यं किं न कार्य्यं च विश्रामदिवसे जनैः ।
किं सत्कार्य्यमनुष्ठेयमसत्कार्य्यमथापि वा ॥ ११ ॥
प्राणा रक्ष्या विनाश्या वा कथ्यतां युक्तमुत्तरम् ।
इत्युक्त्वा सोऽवदद्रुग्नं "तव हस्तः प्रसार्य्यताम्" ॥ १२ ॥
स तथा कृतवां स्तस्य हस्तः प्रापच सुस्थताम् ।
फरोशिनस्तु संक्रुद्धा बभूवु र्यीशुवैरिणः ॥ १३ ॥
तस्मात् स्थानादपाक्रम्य यीशुर्गत्वाथ पर्व्वतम् ।
परमेश्वरमाराध्य कृत्स्नां रात्रिमयापयत् ॥ १४ ॥
प्रभाते तत आहूय स्वशिष्यान् परिचारकान् ।
स वव्रे प्रेरितत्वेन तेषु द्वादश मानवान् ॥ १५ ॥
पित्र इत्यपरं नाम शिमोनाय स दत्तवान् ।
आन्द्रिय स्तस्य भ्राताच तथा याकोबयोहनौ ॥ १६ ॥
फिलिपश्च तथा थोमा मथिश्च बर्थलोमयः ।
आल्फेयात्मजयाकोबस्तथोद्योगीति संज्ञितः ॥ १७ ॥
शिमोनो यिहूदाख्यश्च याकोबस्य सहोदरः ॥
इष्कारियोदुपाख्यश्च यिहुदा इत्युदाहृतः ॥ १८ ॥
स्व स्व नामभिराख्याता स्तेनैते स्वान्तवासिनः ।
इष्कारियोद् यिहूदास्तु रिपवे तं समार्पयत् ॥ १९ ॥
अवरुह्य नगात्तस्मात् स तैः सार्द्धमतःपरम् ।
कस्मिंश्चित् सुषमे देशे स्थितवान् परमात्मजः ॥ २० ॥
तत्रोपतस्थिरे तस्य शिष्या अनेकच मानवाः ।
आर्त्ता जिज्ञासवश्चैव तथा भूताभिसङ्गिनः ॥ २१ ॥
यिरूशालेमतः केचिद् यिहूदियाप्रदेशतः ।
केचिदभ्यागताः सोरसीदोनोदधितीरतः ॥ २२ ॥
ते सर्व्वे रोगनाशिन्याः शक्तेः स्तस्य प्रभावतः ।
सर्व्वाभिलासतश्चानेन बभूवुः प्रकृतिस्थिताः ॥ २३ ॥
स तानभ्यागतान् सर्व्वान् सान्त्वयित्वा यथायथम् ।
स्वशिष्यान् कृपया वीक्ष्य यीशुर्व्वचनमब्रवीत् ॥ २४ ॥

"यूयं दीनतमा धन्या अहङ्कारमनाश्रिताः।
महदीश्वरसाम्राज्यं युष्माकं तृप्तये यतः॥ २५॥
अधुना क्षुधिता धन्या यूयमीश्वरबुद्धयः।
परिणामे परा तृप्ति युष्माकमेव नान्यथा॥ २६॥
धन्या यूयं रुदन्तोऽग्रे परमेशपरायणाः।
परिणामे परानन्दो युष्माकमेव सम्भवेत्॥ २७॥
धन्या यूयं महोदारा भवन्तः शुभबुद्धयः।
ये मदर्थं विनिन्द्यन्ते पीड्यन्ते चाकृतात्मभिः॥ २८॥
स्वर्गे सुसञ्चितं लब्ध्वा पर्य्याप्तं पारितोषिकम्।
परमेशप्रसादेन नृत्यानन्दो करिष्यथ॥ २९॥
ये बभूवुः पुरा शिष्टा इत्थं तेऽपि विनिर्ज्जिताः।
नचात्र परिहारोऽस्ति माभूद्वो मनसो भयम्॥ ३०॥
हाधिग् धनवतो युष्मान् प्राप्तकामान् यथायथम्।
धिक तृप्तानग्रतोऽन्तेच लप्स्यमानान् महाक्षुधाम्॥ ३१॥
धिगात्मस्तुतिसन्तुष्टानुपसेविजनप्रियान्।
पूर्व्वोपसेविनोऽप्येवं कूटाप्तान् परितुष्टुवुः॥ ३२॥
भूय एव महाभागाः शृणुतात्महितं वचः।
यदहं वचमि युष्मभ्यं सर्व्वभूतहितेच्छया॥ ३३॥
कुरुताकृत्रिमं प्रेम सर्व्वदा निजशत्रुषु।
वाचं वदत कल्याणीं विद्विषोऽप्यहिते रतान्॥ ३४॥
अमोघा आशिषो दत्त तेभ्यो युष्मान् शपन्ति ये।
निन्दन्ति ये कृते तेषां प्रार्थयध्वमतन्द्रिताः॥ ३५॥
कपोलं यदि चाहन्ति कश्चिद्वो दक्षिणं जनः।
परावर्त्त्यापरं गण्डं रोषस्तस्यापनीयताम्॥ ३६॥
प्रावारं तव देहस्य यदि कश्चिज्जिहीर्षति।
वर्माङ्गाच्छादकं दत्त्वा तोषस्तस्य विधीयताम्॥ ३७॥
देहि शक्त्यनुसारेण कश्चित्त्वां यदि याचते।
यस्त्वत्तः किञ्चिदादत्ते प्रत्याशां न ततः कुरुः॥ ३८॥

यूयं लोके यथात्मानं सम्भावयितुमिच्छथ ।
लोका अप्यनुसम्भाव्या निजैराचरणैस्तथा ॥ ३९ ॥
प्रतिदानाशया प्रेम कुर्व्वतां वो न धन्यता ।
पापिनोऽपि प्रकुर्व्वन्ति यतः प्रेम तथाविधम् ॥ ४० ॥
उपकाराशया चोपकुर्व्वतां नास्ति धन्यता ।
पापिनोऽपि प्रकुर्व्वन्ति ह्युपकारं तथाविधम् ॥ ४१ ॥
प्रतिदानाशया धारदातॄणां वो न धन्यता ।
पापिनोऽपि प्रयच्छन्ति ह्याप्तुं तत्सममात्रया ॥ ४२ ॥
शत्रुष्वपि परं प्रेम यूयं कुरुथ सर्व्वदा ।
ऋणदानोपकाराभ्यां प्रत्यादानपराङ्मुखाः ॥ ४३ ॥
तथा वः कुर्व्वतामस्ति स्वर्गीयं पारितोषिकम् ।
करुणावान् यतः स्रष्टा कृतघ्नदुष्कृतेष्वपि ॥ ४४ ॥
यथा सर्व्वेषु भूतेषु दयावान् परमेश्वरः ।
अस्तु वः सोपमा लोके सर्व्वभूतहितैषिणी ॥ ४५ ॥
विचारः परिहर्त्तव्यः स्वविचारनिवृत्तये ।
दोषोऽपि नानुसन्धेयो जिह्मासद्भिः स्वदोषिताम् ॥ ४६ ॥
क्षमार्थमात्मनो नित्यमाश्रितव्या परा क्षमा ।
पर्य्याप्तदानलाभाय दातव्यं विगतक्लमैः ॥ ४७ ॥
येनैव परिमाणेन युष्माभिः परिमीयते ।
यूयं तेनैव मानेन परिमेया भविष्यथ ॥ ४८ ॥
अपिचान्धो न पन्थानमन्धं दर्शयितुं क्षमः ।
समासाद्य यतो गर्त्तमुभावपि पतिष्यथः ॥ ४९ ॥
श्रेयांसं गुरुतः शिष्यं नामनन्ति मनीषिणः ।
तयोः साम्यं वदन्त्येके पण्डिताः समदर्शिनः ॥ ५० ॥
स्वभ्रातृनेत्रविन्यस्तशूकखण्डनिरीक्षणात् ।
न्याय्यं स्वचक्षुरन्तस्थकाष्ठखण्डेक्षणं वरम् ॥ ५१ ॥
अपश्यन्तो निजनेत्रस्थ यः शल्यस्यापनुत्तये ।
स कथं परनेत्रान्तर्गतशल्यं समुद्धरेत् ॥ ५२ ॥

तस्मादादौ प्रयत्नेन स्वीयां प्रज्ञां विशोधयेत् ।
परेषां प्रतिपत्त्यर्थं पश्चाद् यत्नं समाचरेत् ॥ ५३ ॥
सुवृक्षो जनयेद् यस्मात् सुफलान्येव सर्व्वदा ।
तस्माद् वृक्षाः प्रतीयन्ते फलैरेवोत्तमाधमाः ॥ ५४ ॥
कण्टकेभ्यः प्रचीयन्ते नोदुम्बरफलानि हि ।
कीलस्तम्बान्न गृह्यन्ते नवा द्राक्षाफलानिच ॥ ५५ ॥
स्वहृदः सन्तमेवार्थं निःसारयति सज्जनः ।
कुहृदो मन्दमेवार्थं निःसारयति दुर्ज्जनः ॥ ५६ ॥
जनस्य हृदये भावा वर्त्तन्ते खलु यादृशाः ।
निर्गच्छन्ति मुखात्तस्य तादृशा नात्र संशयः ॥ ५७ ॥
हे प्रभो हे प्रभो चेति यूयं वदथ मां सदा ।
नतु वाक्यानुरूपं मे कार्य्यं कुरुथ किंचन ॥ ५८ ॥
ये श्रुत्वा मे मतं नित्यमनुतिष्ठन्ति मानवाः ।
न विघ्नैस्तेऽवसीदन्ति दृढ़गेहा जना यथा ॥ ५९ ॥
ये नरा नानुतिष्ठन्ति ममेदं मतमुत्तमम् ।
व्यथन्ते मानवा स्तेच क्लेशेनाल्पेन वाधिताः ॥ ६० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कंदर्शणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्भृगभाषितख्रीष्टोपनिषदि षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः

St. Luke. Chapter. 7. [ Christ findeth a greater faith in the centurion a Gentile, than in any of the Jews: healeth his servant being absent: raiseth from death the widow's son at Nain: answereth Jhon's messengers with the declaration of his miracles: testifieth to the people what opinion he held of Jhon: inveigheth against the Jews who with neither the manners of Jhon nor of Jesus could be won: and sheweth by occasion of Mary Magdalene, how he is a friend to sinners, not to maintain them in sins, but to forgive them their sins, upon their faith and repentance. ]

समाप्येताः कथाः सर्व्वा जनानां शृण्वतां पुरः ।
योशुः कफरनाहूमं विवेश परमात्मजः ॥ १ ॥
ततः शतपतिः कश्चिद् वीक्ष्य दासं मृतोपमम् ।
प्राचीनांस्तस्य रक्षार्थं प्राहिणोद् योशुसन्निधौ ॥ २ ॥
ते योशोरन्तिकं गत्वा विनीता इदमब्रुवन् ।
शताध्यक्षो महाभाग तवानुग्रहमर्हति ॥ ३ ॥
अस्मज्जातिं प्रति प्रेम स करोति सदाशयः ।
समाजगृहमस्माकं स एवच विनिर्ममौ ॥ ४ ॥
योशु स्तेषां वचः श्रुत्वा श्रद्धाविनतिसंयुतम् ।
तैः सार्द्धमगमच्छीघ्रं शताध्यक्षगृहं प्रति ॥ ५ ॥
योशुमालोकयन् दूराच्छताध्यक्षः सुहृज्जनैः ।
वारयामास तं भक्त्या वाक्यं चेदं न्यवेदयत् ॥ ६ ॥
प्रभो नाहं समर्थोऽस्मि तवातिथ्यक्रियाविधौ ।
अतश्च नैव योग्योऽस्मि समागन्तुं त्वदन्तिके ॥ ७ ॥
मद्दासप्राणरक्षार्थं त्वमाज्ञां देहि केवलम् ।
तवाज्ञयैव मद्दासः प्रकृतिं सम्प्रयाते ध्रुवम् ॥ ८ ॥
अहमप्याज्ञयाधीनः सेनापि मद्वशे स्थिता ।
ममाज्ञामनुतिष्ठन्ति योद्धारोऽप्यविशङ्किता ॥ ९ ॥
निशम्यैताः कथाः सर्व्वा विस्मितः परमात्मजः ।
उवाच वाक्यं वाक्यज्ञः पृष्ठतोऽनुगताञ्जनान् ॥ १० ॥

ईदृशीं सरलां श्रद्धामुत्थितामन्तरात्मनः ।
इस्रायेलेऽपि नैवेऽहं सत्यमेतद्ब्रवीम्यहम् ॥ ११ ॥
ततस्ते भवनं गत्वा प्राचीनाः प्रेषिता जनाः ।
दासं शतपतेस्तस्य ददृशुः प्रकृतिं गतम् ॥ १२ ॥
अथ शिष्यै जनैश्चैव बहुभिः स समन्वितः ।
जगाम नायिनं नाम नगरं परमात्मजः ॥ १३ ॥
नगरद्वारमागत्य शवाधारोपरि स्थितम् ।
स ददर्श मृतं कंचिन्नीयमानं जनै र्बहिः ॥ १४ ॥
जननी विधवा तस्य तेन चैकेन पुत्रिणी ।
मृतं तमनुजग्मुश्च बहुनागरिका जनाः ॥ १५ ॥
तस्य मातरमालोक्य रुदतीं शोकपीडिताम् ।
मा रोदीरिति तां प्राह दयावान् परमात्मजः ॥ १६ ॥
ततः सोऽन्तिकमागत्य खट्वां स्पृष्ट्वेदमब्रवीत् ।
"अहमाज्ञापयामि त्वां युवन्नुत्तिष्ठ सत्वरम् ॥" १७ ॥
तमुत्थितं समालोक्य ब्रुवन्तं स्पष्टभाषया ।
यीशुः करुणयाविष्टो जनन्यै तं समार्पयत् ॥ १८ ॥
अथ सर्व्वे भयत्रस्ता विश्वस्य परमेश्वरे ।
तद्यशः कीर्त्तयित्वाच वक्तव्यमिदमब्रवीत् ॥ १९ ॥
आविर्भूतोऽयमस्माकमाप्तोऽनुग्रहकाम्यया ।
कृपालोः परमेशस्य प्रजास्वेषा परा दया ॥ २० ॥
एतेन व्यानशे तस्य जीवानुग्रहकर्म्मणा ।
सत्त्वोज्ज्वला परा कीर्त्तिः समस्तजनमण्डले ॥ २१ ॥
इमाः ख्रीष्टकथाः श्रुत्वा ततः स्नापकयोहनः ।
सत्वरं प्रेषयामास द्वौ शिष्यौ योशुसन्निधौ ॥ २२ ॥
तौ यीशुमुपसङ्गम्य योहनप्रश्नमूचतुः ।
जगत्याविर्भवेद् यस्तु किं भवान् स परात्परः ॥ २३ ॥
अन्यो वा भवतः कश्चित् पुनराविर्भविष्यति ।
संशयं योहनस्येमं भगवंश्छेत्तुमर्हसि ॥ २४ ॥

स तस्मिन् समये रुग्नान् बहूंश्चक्रे निरामयान् ।
भूतान् निःसारयामास चान्धांश्चक्रे सचक्षुषः ॥ २५ ॥
ततस्तौ कथयामास द्वौ शिष्यौ परमात्मजः ।
यातं श्रुतंच कर्म्मैतद् योहनाय तपस्विने ॥ २६ ॥
अचक्षु र्लभते चक्षुः खञ्जो याति त्वरान्वितः ।
आरोग्यं लभते कुष्ठी शृणोति बधिरो वचः ॥ २७ ॥
मृतोऽपि लभते प्राणान् दीनो वेत्ति सुभाषितम् ।
धन्योऽसौ मानवो लोके मयि यो नापराध्यति ॥ २८ ॥
इत्युक्त्वा वचनं भूयो योहनं प्रतितर्कयन् ।
यीशु र्मानवसङ्घेभ्यः प्राहेदं परमात्मजः ॥ २९ ॥
मरोः प्रान्तरमभेत्य युष्माभिः कोऽवलोकितः ।
वंशः किं वायुधूतोऽसौ नरो वा कोमलाम्बरः ॥ ३० ॥
आप्तश्चेद् यतचित्तात्मा सत्यं श्रेयांस्ततोऽपि सः ।
यमुद्दिश्य विबुधानामिदमुक्तवती श्रुतिः ॥ ३१ ॥
"ऊर्जितो मामको दूतस्तवाग्रे प्रेष्यते मया ।
स विधास्यति संशुद्धिं गच्छत स्तव वर्त्मनः ॥ ३२ ॥
वस्तुतो गर्भजातानां मनुष्याणां धरातले ।
सर्व्वेषां योहनः श्रेष्ठो वीतमोहरजस्तमः ॥ ३३ ॥
तथापीश्वरसान्निध्यात् सदा तद्भावभावितः ।
स्वर्गराज्यस्य दीनोऽपि योहनात् सम्मतोऽधिकः ॥ ३४ ॥
करसंग्राहकाः श्रुत्वा जनाश्च योहनस्तवम् ।
योहनस्नापनं धर्म्मप्रकार्य्यत्वेनानुमेनिरे ॥ ३५ ॥
ईश्वराज्ञां विफलीचक्रुः सोपाध्यायाः फरीशिनः ॥
योहनस्य यतोऽप्यस्य प्रत्याख्यायावगाहनम् ॥ ३६ ॥
सन्ति कैरुपमातव्या अतस्ते प्राकृता जनाः ।
स्ववयस्यान् समाहूय ये वदन्त्यविवेकिनः ॥ ३७ ॥
अस्माभिर्वाद्यते वेणुर्युष्माभिः किं न नृत्यते ।
अस्माभिः क्रन्द्यते वत्सो युष्माभिः किं न ताड्यते ॥ ३८ ॥

नौदनं योऽत्रनोऽश्नाति न पानमपि सेवते।
तथापि तद्विधैः शश्वद् भूताविष्टः स कीर्त्त्यते॥ ३८॥
प्रत्यहं पानमन्नं च गृह्णाति मानवात्मजः।
स भोक्ता मद्यपो बन्धुः पापिनामिति कथ्यते॥ ४०॥
कामं वदन्तु ते सर्व्वे तत्त्वस्मृतिविपर्य्ययात्।
किन्तु प्रेक्षावतां प्रज्ञा निर्दोषा स्वीयकर्म्मभिः॥ ४१॥
सहभोजनकामेन केनाप्यथ फरीशिना।
योशुरामन्त्रितस्तस्य प्रविवेश निकेतनम्॥ ४२॥
स यदा भोक्तुमारेभे पापिष्ठा रमणी तदा।
काचिदागत्य तत्पादसन्निधौ रुदती स्थिता॥ ४३॥
आसिञ्चच्चरणौ तस्य पवित्रैर्नेत्राम्बुविन्दुना।
अथ तौ गन्धतैलेन मर्द्दयित्वा चुचुम्ब सा॥ ४४॥
तद्दृष्ट्वा नायकः कर्म्म मनसेदमचिन्तयत्।
अयमाप्तोऽभविष्यच्चेदज्ञास्यत् पापिनीमिमाम्॥ ४५॥
योशुस्तस्याशयं ज्ञात्वा शिमोनमिदमब्रवीत्।
किञ्चिद्दृष्टान्तवाक्येन तत्त्वं तुभ्यं ब्रवीम्यहम्॥ ४६॥
किलास्तामधमर्णौ द्वावुत्तमर्णस्य कस्यचित्।
एकोऽल्पानधिकानन्यो मुद्रापादान् गृहीतवान्॥ ४७॥
तद्दृणप्रतिदानस्य शक्त्यभावाद्वयो स्तयोः।
चक्षमे स द्वयो र्धीरमुत्तमर्णौ दयान्वितः॥ ४८॥
अनयोः कतर स्तस्मिन् परां प्रीतिं करिष्यति।
स प्राहाधिकमानृण्यं जातं यस्य स एव हि॥ ४९॥
योशुस्त्वमब्रवीत् सत्यं विषयेऽस्मिं स्त्वमुक्तवान्।
विनयेनान्वितां नारीं पश्यसीमां पुरः स्थिताम्॥ ५०॥
न त्वं पाद्यमदा मह्यं प्रविष्टे त्वद्गृहं मयि।
स्त्रीयं किन्तु स्वनेत्राम्भि रसिचच्चरणौ मम॥ ५१॥
मां नाचुम्बी स्त्वमेषातु चुम्बतिस्म पदे मम।
अमार्ज्जीच्चरणौ चाद्रावात्मनोनैः शुभैः कचैः॥ ५२॥

तैलेन केवलेनापि सिक्तावां त्वं न मे शिरः ।
इयं सुगन्धितैलेनामर्द्दयच्चरणौ मम ॥ ५३ ॥
अतोऽस्या बहुपापस्य बहुप्रेमतया क्षमा ।
संजाताऽल्पक्षमायां तु प्रेमाल्पत्वं भवेद् ध्रुवम् ॥ ५४ ॥
अथैतां स्त्रियमालोक्य यीशुर्वचनमब्रवीत् ।
पापानां ते क्षमा जाता सर्व्वेषां नात्र संशयः ॥ ५५ ॥
ततस्ते सहभोक्तारो मनसेदमचिन्तयन् ।
कोऽयमेष नरो यस्तु समर्थः पापमुक्तये ॥ ५६ ॥
यीशुस्तु तां स्त्रियं प्राह क्षोमतीं पुरतःस्थिताम् ।
श्रद्धा त्वां तारयामास गच्छ वत्से यथासुखम् ॥ ५७ ॥

इति श्रीताराचरणचक्रवर्त्तितकदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमङ्गभाषितख्रीष्टोपनिषदि सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः

St. Luke. Chapter 8. [Women minister unto Christ of their substance. Christ, after he had preached from place to place, attended with his apostles, propoundeth the parable of the sower, and of the candle : declareth who are his mother, and brethren : rebuketh the winds : casteth the legion of devils out of the man in to the herd of swine : is rejected of the Gadarenes : healeth the woman of her bloody issue, and raiseth fr om death Jairus' daughtr. ]

यीशुस्ततः परिभ्राम्यत् ग्रामेषु नगरेषुच ।
ईशराज्यसुसंवादं सर्व्वत्राघोषयत् प्रभुः ॥ १ ॥
द्वादश प्रथिताः शिष्या नराश्चारोग्यमागताः ।
सह तेन स्थिता नार्य्य इमाश्च परिचारिकाः ॥ २ ॥
शोशन्ना कुशपत्नीच योहाना नाम नामतः ।
मरीयम्मग्दलीनीच सप्त भूता यतो गताः ॥ ३ ॥

ततः समागतान् वीक्ष्य मानवान् परमात्मजः ।
दृष्टान्तमधुरं वाक्यं तेषां बोधाय सोऽब्रवीत् ॥ ४ ॥
प्रयाति कृषके क्षेत्रे शस्यवीजानि रोपितुम् ।
पतितानि पथःपार्श्वे तानि वीजानि कानिचित् ॥ ५ ॥
भक्षितानि ततस्तानि पक्षिसङ्घैरुपागतैः ।
अश्ममय्यां पुनस्तेभ्यः कानिचिन्न्यपतन् भुवि ॥ ६ ॥
विशुष्काणि रवे र्भाभि स्तानि जाताङ्कुराण्यपि ।
मूलाल्पत्वान्मृदोऽल्पत्वाज्जलाभावंतयापिच ॥ ७ ॥
पतित्वा कण्टकाकीर्ण-भूमौ वीजानि कानिचित् ।
बभूवुरवसन्नानि वृक्षकण्टकबाधया ॥ ८ ॥
सुभूमौ पुनरन्यानि पतितानि विभागशः ।
सहकरिबलात् फेलुः शतशोऽथ सहस्रशः ॥ ९ ॥
दृष्टान्तोक्तिं समाश्रित्य यदिदं प्रोक्तवानहम् ।
श्रुयतां यस्य कर्णौस्तो जनेन शुभबुद्धिना ॥ १० ॥
ततस्तं निर्जने स्थानेऽवलोक्य समवस्थितम् ।
उक्तदृष्टान्ततात्पर्य्यं पप्रच्छुः शिष्यसत्तमाः ॥ ११ ॥
स उक्तवान् परं तत्त्वं युष्मभ्यं प्रोक्तवानहम् ।
दृष्टान्तवचसाऽन्येभ्यो व्यामिश्रवचसा तथा ॥ १२ ॥
दृष्ट्वाप्यमी यथा मूढ़ा नावगच्छन्ति तत्त्वतः ।
श्रुत्वापि नैव मन्यन्ते यथा कामवशं गताः ॥ १३ ॥
ततो दृष्टान्ततात्पर्य्यावगतौ संशयं गतान् ।
शिष्यान् प्रोवाच तात्पर्य्यं दृष्टान्तवचसः प्रभुः ॥ १४ ॥
वीजमोश्वरवाक्यं स्याच्छ्रोतारः पथि संस्थिताः ।
श्रुतार्थं हरते तेभ्यः पापात्मा कश्चिदागतः ॥ १५ ॥
यथा ते न परित्राणं लभन्ते भक्तिसंयुताः ॥ १६ ॥
ये श्रुत्वा परमं तत्त्वं [illegible] गृह्णन्ति मानवाः ।
त्यजन्तिच विपत्त्रस्ता स्ते नराः प्रस्तरस्थिताः ॥ १७ ॥

ये बुद्धा परमं तत्त्वं विशन्ति संस्रुताविह ।
यतन्ते च न संसिद्धौ मायाकण्टकबाधिताः ॥
भोगैश्वर्य्यप्रसक्ताश्च न वाञ्छन्ति परेश्वरम् ।
ते नराः कण्टकक्षेत्रे पतिता दुःखभागिनः ॥ १८ ॥
श्रवणे मनने चैव मतिर्येषां न हीयते ।
परमेश्वरचिन्ताश्च ते मे युक्ततमा मताः ॥ १९ ॥
नाच्छादयति पात्रेण दीपं प्रज्वलितं नरः ।
निदधाति नवा कश्चित् खटाधो मतिमाञ्जनः ॥ २० ॥
दीपाधारस्थितो दीपो गृहमध्ये विराजते ।
गृहं प्रविश्य पश्येयुः सर्व्वं एव यथा प्रभाम् ॥ २१ ॥
न तदस्ति पृथिव्यां यत् स्थास्यतीह तिरोहितम् ।
एकाग्रमनसा तस्माच्छ्रुतार्थानवगच्छत ॥ २२ ॥
यस्यान्तर्निहितं तत्त्वं लप्स्यते सोऽधिकं फलम् ।
न मूढ़ो लप्स्यते किञ्चित् सर्व्वथासौ नशिष्यति ॥ २३ ॥
इत्येवं भाषमाणं तं सह तस्य सहोदरैः ।
आगत्य जननी तस्य साक्षात्कारमयाचत ॥ २४ ॥
सोऽब्रवीत् मत्पितुर्व्वाक्यं यो नित्यमनुतिष्ठति ।
स एव जननी भ्राता भगिनीच मम प्रिया ॥ २५ ॥
एकदा नावमारुह्य यीशुः शिष्यसमन्वितः ।
मध्ये समुद्रमागत्य निद्रावशमुपागतः ॥ २६ ॥
ततः पवनसंक्षुब्धां पूर्य्यमाणां च वारिभिः ।
नावं दृष्ट्वा परां भीतिं संप्राप्ताः शिष्यसत्तमाः ॥ २७ ॥
अथ सुप्तप्रबुद्धोऽसौ शिष्याणामार्त्तशब्दनैः ।
समुद्रं तर्ज्जयामास वातंच परमात्मजः ॥ २८ ॥
सागरः प्रकृतिं प्राप तत्क्षणात्तस्य तर्ज्जनैः ।
प्रबलो मातरिश्वाच शान्तवेगः शिवो ववौ ॥ २९ ॥
स सम्बोध्य ततः शिष्यानब्रवीत् परमात्मजः ।
क्व गता वोऽचला श्रद्धा कालेऽस्मिन् भयदारुणे ॥ ३० ॥

ते तस्य वचनं श्रुत्वा भयेनातीव विह्वलाः ।
योशुमद्भुतकर्म्माणमस्तुवन्विस्मयसत्तमाः ॥ ३१ ॥
यथाब्धेः परपारस्थं गादारीयभुवं गतम् ।
योशुमभ्याययौ कश्चिद् भूतोन्मत्तः श्मशानालयात् ॥ ३२ ॥
स प्राह कोऽस्ति सम्बन्धस्त्वया मे परमात्मजः ।
भूतावेशात् समुद्धृत्य निर्य्यातयसि मां यतः ॥ ३३ ॥
सोऽपृच्छत्तव किं नाम सत्यं तत् कथयस्व माम् ।
आत्मनो वाहिनीमाख्यां बहुत्वात् स न्यवेदयत् ॥ ३४ ॥
"न मां प्रापय पातालं पुरतः शूकरव्रजम् ।
नय मां त्वं महाभाग निवसामि यथा सुखम् ॥" ३५ ॥
तथास्त्विति समादिश्य स तथा कृतवान् प्रभुः ।
साविशद् वाहिनी वेगात् पुरतः शूकरव्रजम् ॥ ३६ ॥
ततस्ते शूकराः सर्व्वे वेगात् सागरमाविशन् ।
रक्षकाः सर्व्वमालोक्य पौरेभ्यस्तन्न्यवेदयन् ॥ ३७ ॥
अथ पौरजना भीता गत्वाच योशुसन्निधिम् ।
तं भूतपीडितं शान्तं ददृशुर्योशुसन्निधौ ॥ ३८ ॥
ततोऽस्यारोग्यवृत्तान्तं दर्शकेभ्यो निशम्य ते ।
तेषां देशस्य सीमानं त्यक्तुं पौरास्तमादिशन् ॥ ३९ ॥
अथ नौकागतं खोष्टं भूतमुक्तः स मानवः ।
ययाचे निजसान्निध्यं विनयेन समन्वितः ॥ ४० ॥
योशुस्तं वारयित्वाह गच्छ त्वं स्वजनान्तिके ।
त्वत्कृते प्रभुणा यद्यत् कृतं तत्तच्च बोधय ॥ ४१ ॥
तन्निशम्य गतस्तेऽसौ हृष्टः स्वनगरं प्रति ।
ज्ञापयामास कर्म्माणि प्रभुणानुष्ठितानिच ॥ ४२ ॥
अथ प्रत्यागतं वीक्ष्य परं पारं परात्मजम् ।
अभ्यर्थयामासु जना स्तत्कृतमानसाः ॥ ४३ ॥
कश्चिद् यायीरनामाथ यीशोरन्तिकमागतः ।
तस्य पादद्वयं स्पृष्ट्वा भक्त्येदं वाक्यमब्रवीत् ॥ ४४ ॥

प्रभो त्यजति मत्कन्या प्राणान् द्वादशवार्षिकी ।
तस्याः प्राणान् महाभाग रक्ष त्वं कृपयान्वितः ॥ ४५ ॥

तेन सार्द्धं समुत्थाय यीशौ शीघ्रं गते सति ।
तस्य पीड़ां समुत्पाद्यानुजग्मु र्बहवो जनाः ॥ ४६ ॥

तस्मिन् काले समागत्य काचित् प्रदरपीड़िता ।
दुःखेन महता युक्ता प्रत्याख्याता चिकित्सकैः ॥
विश्वासमेकमाश्रित्य यीशोर्वसनमस्पृशत् ।
तेनासौ तत्क्षणाज्जाता प्रकृतिस्था निरामया ॥ ४७ ॥

यीशु र्ज्ञात्वात्मनः शक्तिमकस्माद्बहिरागताम् ।
शिष्यान् प्रोवाच मद्वस्त्रं कोऽत्र संस्पृष्टवानिति ॥ ४८ ॥

शिष्यास्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रुवन् ।
न जानीमः समानाभिहारात् कः स्पृष्टवानिति ॥ ४९ ॥

अथ ज्ञात्वात्मनो व्यक्तिं सा नारी शीघ्रमागता ।
विमुक्तिकारणं तस्या रोगस्य स्वयमब्रवीत् ॥ ५० ॥

यीशुस्तामब्रवीत् कन्ये विश्वासात्त्वं निरामया ।
इतस्त्वं शान्तितो गच्छ चिरं तिष्ठ यथासुखम् ॥ ५१ ॥

तस्मिन्नेव ततः काले धर्म्माध्यक्षगृहागताः ।
अब्रुवंस्ते मृता कन्या क्लिश्नासि त्वं गुरुं कथम् ॥ ५२ ॥

यीशुः प्राहाभयं तेऽस्तु त्वं विश्वसिहि केवलम् ।
विश्वासेनैव ते कन्या प्रकृतिं लप्स्यते ध्रुवम् ॥ ५३ ॥

इत्युक्त्वा केवलं पित्रं याकोबं च सयोहनम् ।
परिगृह्याभ्यगात् ख्रीष्टो धर्म्माध्यक्षनिकेतनम् ॥ ५४ ॥

तत्र कोलाहलं श्रुत्वा दृष्ट्वास्य क्रोशतो जनान् ।
कथं रुदिथ स प्राह स्वपितीयं मृता नहि ॥ ५५ ॥

तद्वाक्यमुपहासाय विदित्वा परिकल्पितम् ।
"त्वं महाक्यात् समुत्तिष्ठे"त्यब्रवीत् परमात्मजः ॥ ५६ ॥

उत्तस्थौ तत्क्षणात् कन्या सा तेन लब्धचेतना।
अल्पं तस्याः क्षते भोज्यमादिशत् परमात्मजः॥ ५७॥
दृष्ट्वाच पितरौ तस्या विस्मयं परमं गतौ।
योग्युनिं वारयामास प्रचारमस्य कर्म्मणः॥ ५८॥

: इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकेरूपनिबद्धायां श्रीमत्लूगभाषित खोष्टोपनिषदि अष्टमोऽध्यायः।

---

## नवमोऽध्यायः

St. Luke. Chapter 9. [ Christ sendeth his apostles to work miracles, and to preach. Herod desired to see christ. Christ feedeth five thousand: inquireth what opinion the world had of him: foretelleth his passion: proposeth to all the pattern of his patience. The transfiguration. He healeth the lunatick: again forewarneth his disciples of his passion: commendeth humility: biddeth them to shew mildness towards all, without desire of revenge. Divers would follow him, but upon conditions. ]

अथ द्वादश ताञ्छिष्यानाहूय परमात्मजः।
प्रचारायेश्वराज्यस्य नियन्तुं चायतात्मनः॥
प्रमोकर्त्तुं मनुष्याणां क्लेशांश्च देहबाधकान्।
कुशलान् प्रेषयामास दत्त्वा शक्तिमलौकिकीम्॥ १॥
ईश्वरप्रणिधानार्थमीश्वराणुग्रहाय च।
इदमाज्ञापयामास यात्राकालोचितं वचः॥ २॥
चेलसम्पूटकं दण्डं पूपं वा रूप्यमेव वा।
हे वाहरधे मादद्युं यूयं गमनतत्परा॥ ३॥
यत्रैव कस्यचिद्गेहं विशत स्थितिहेतवे।
पुनः प्रस्थानपर्य्यन्तं तस्य सद्मनि तिष्ठत॥ ४॥

ये यत्र वो न गृह्णन्ति न शृण्वन्ति च वो वचः ।
तत्त्यक्ते सांक्षिणः सन्तु धूता वः पादरेणवः ॥ ५ ॥
ततस्ते प्रस्थिता ग्रामानटन्तः शिष्यसत्तमाः ।
अघोषयन् सुसंवादं रुग्नांश्चक्रुश्च निर्गदान् ॥ ६ ॥
इदं जनमुखाच्छ्रुत्वा हेरोदो नृपसत्तमः ।
बभूव परमोद्विग्नः पूर्वं पापमनुस्मरन् ॥ ७ ॥
यीशुमेकेऽब्रुवन् यस्माद् योहनं पुनरुत्थितम् ।
एलियं तं परे प्राहु जनानां दृष्टिगोचरम् ॥ ८ ॥
केचित्तमामनन्ति स्म प्राचीनं तत्त्वदर्शिनम् ।
सर्व्वमेतत् समाकर्ण्य हेरोदोऽचिन्तयत् स्वयम् ॥ ९ ॥
योहनस्य शिरश्छिन्नं मयैव नात्र संशयः ।
तर्हि कोऽयं समायातो यस्येयं प्रसृता कथा ॥ १० ॥
हेरोदः संवृताकारः इत्येवं परिचिन्तयन् ।
स्वयं द्रष्टुं मनश्चक्रे यीशुं तं परमात्मजम् ॥ ११ ॥
ततः कथितवृत्तान्तैः प्रेषितैः कृतकर्म्मभिः ।
सहान्तेवासिभिः सर्व्वैस्तैस्सदा यीशुरभ्यगात् ॥ १२ ॥
गृहीत्वा सादरं चैव प्रभुरभ्यागताञ्जनान् ।
उवाच परमं तत्त्वं रुग्नांश्चक्रे च निर्गदान् ॥ १३ ॥
ततः सायं समागत्य शिष्यास्तमिदमब्रुवन् ।
यान्तु ग्रामं जनाः सर्व्वे क्रीणन्तु चान्नभोजनम् ॥ १४
इदं सुनिभृतं स्थानं भास्करोऽस्तमुपागतः ।
गृह्णन्तु रात्रिवासाय स्वस्वस्थानानि मानवाः ॥ १५ ॥
यीशुः प्राह न गन्तव्यमितोऽत्र समागतैः ।
इहैव भोजनं तेषां युष्माभिरुपकल्प्यताम् ॥ १६ ॥
त ऊचुः पञ्चभिः पूपैस्तथा मत्स्यद्वयेन च ।
भोजनं पञ्चसाहस्रजनानां सम्भवेत् कथम् ॥ १७ ॥
यीशुस्तानवदत् पञ्चाशतं कृत्वा श्रियातिथीन् ।
उपवेशयतात्रैव सर्व्वान् सुषमपङ्क्तिभिः ॥ १८ ॥

तान् पूपान् तौच मोनौ द्वौ स गृहीत्वा ततः स्वयम् ।
स्वर्गमालोकयन् धीमानूर्द्धं प्रणिहितेक्षणः॥
आशीर्व्वचनमुच्चार्य्य भ्रातवांस्तांश्च खण्डशः।
अतिथिभ्यः प्रदातुं च शिष्यानाज्ञापयत् प्रभुः ॥ १८ ॥
ते परं तत्पुः सर्व्वे भुक्त्वा भोज्यानि मानवाः ।
शिष्या द्वादश शिष्टानि डल्लकानि समादधुः ॥ २० ॥
स्वशिष्यानेकदाहूय पप्रच्छ परमात्मजः ।
तत्त्वतो ब्रूत तत् सर्व्वं मानवाः किं वदन्ति माम् ॥ २१ ॥
तेऽब्रुवं त्वां वदन्त्येके स्नापकं योहनं प्रभो ।
केचिदेलियमप्याहुरास्ममेन्र वदन्तिच ॥ २२ ॥
योशुस्तान् कथयामास युष्माकमत्र का मतिः ।
तस्य तद्वचनं श्रुत्वा पित्रो वचनमब्रवीत् ॥ २३ ॥
यमामनन्ति शास्त्राणि चेतनामयमीश्वरम् ।
तस्य पुत्रो भवान् खोष्ट इतीग्रव मामकी मतिः ॥ २४ ॥
तस्य तद्वचनं श्रुत्वा यीशुस्तमिदमब्रवीत् ।
मा वोचो मम वृत्तान्तमिमं कमपि मानवम् ॥ २५ ॥
अतः परं महद्दुःखं लप्स्यते मानवात्मजः ।
तच्च दुःखं विधास्यन्ति वृद्धोपाध्याययाजकाः ॥ २६ ॥
तेच तं घातयिष्यन्ति प्रत्याख्याय जनान्तिके ।
तृतीयदिवसे मृत्योः पुनरुत्थास्यति स्वयम् ॥ २७ ॥
यदि मां मम भक्तेषु कश्चिदन्वेतुमिच्छति ।
सोऽभिमानं परित्यज्य सक्रुशो मामनुव्रजेत् ॥ २८ ॥
पाणेषु वासना यस्य स प्राणान् परिहास्यति ।
प्राणेभ्यो न वियुज्येत मदर्थे त्यक्तजीवितः ॥ २९ ॥
इदं कृत्स्नं जगल्लब्ध्वा प्राणेभ्यश्चेद्वियुज्यते ।
किं लब्धं तेन किं प्राणप्राप्तये वा स दास्यति ॥ ३० ॥
ये च मामभ्यसूयन्ति नरा विषयगर्व्विताः ।
लज्जया नानुतिष्ठन्ति येच वा मम शासनम् ॥

तानहं प्रवदिष्यामि मानवाञ्चिरपत्रपान् ।
तदा यदः भविष्यामि स्वर्गराजेन प्रतापवान् ॥ ३१ ॥
य इमेऽवस्थिताः शिष्या निरता ज्ञानकर्मणोः ।
मृत्युं तेऽतितरिष्यन्ति सत्यमेतद्ब्रवीम्यहम् ॥ ३२ ॥
अथाष्टासु व्यतीतेषु दिनेषु यीशुरात्मवान् ।
त्रिभिः परिवृतः शिष्यैः पितरयाकोबयोहनैः ॥
पर्व्वतैकान्तमारुह्य दिव्यदेहं समाश्रितः ।
अलौकिकप्रभो भूत्वा शुभ्रवासा व्यराजत ॥ ३३ ॥
मोशिनाविरभूत्तेषामेलियेन सहात्मवान् ।
तेन तौ यिरुशालेमयात्रालापं प्रचक्रतुः ॥ ३४ ॥
अथ सुप्तोत्थितः पितरस्तौ दृष्ट्वा विक्रमान्वितौ ।
पुनरन्तर्हितौ चैव गुरवे वाक्यमब्रवीत् ॥ ३५ ॥
भगवन् स्थितिरस्माकमत्र स्याच्छुभदायिनी ।
अतोऽतो भवतामत्र निर्म्मामः कुटिरत्रयम् ॥ ३६ ।
भवदीयं भवत्वेकं मोशेरेकं तथा विभोः ।
एलियस्य तथैकं स्यान्नेतो नोऽस्त्यधिकं वचः ॥ ३७ ॥
तस्मिन्नेव ततः काले शुभ्राभ्रखण्डमेककम् ।
भेजे तां श्छायया सर्व्वान् गगणे सहसोत्थितम् ॥ ३८ ॥
इयमप्युत्थिता वाणी "शृणुतास्यानुशासनम् ।
अयं मम प्रियः पुत्रः प्रीतिरस्मिन् सदा मम" ॥ ३९ ॥
अथाधः पर्व्वतात्तस्मादागतं परमात्मजम् ।
बहवो मानवा भक्त्या द्रष्टुकामाः समागताः ॥ ४० ॥
तस्मिन् कालेऽवदत् कश्चिज्जनमध्यगतो जनः ।
भगवन् कृपया रोगात् मत्पुत्रं त्रातुमर्हति ॥ ४१ ॥
आत्मजोऽयं ममाविष्ट आत्मना केनचित् प्रभो ।
नान्यश्च मम पुत्रोऽस्ति त्वमेव शरणं मम ॥ ४२ ॥
सचात्मास्रयते यत्र बलात्तं तत्र धर्षति ।
वामयित्वा मुखात् फेनं जहातिच दुरासदः ॥ ४३ ॥

तस्य निःसारणायाहं तव शिष्यानवेदयम् ।
बहुशोऽयतमानास्ते न तं ताडयितुं क्षमाः ॥ ४४ ॥
योशुस्तानवदच्छिष्यानश्रद्धान्वितमानसान् ।
कियत्कालं सहिष्येऽहं युष्माकं शक्तिहीनताम् ॥ ४५ ॥
योशुरादेशतस्तेऽथ तं तस्यान्तिकमानयन् ।
असावात्मापि तं दृष्ट्वा क्षिप्रं बालमधर्षयत् ॥ ४६ ॥
योशुस्तं तर्जनेनैव ताडयित्वा दुरासदम् ।
सुस्थीकृत्यार्भकं क्षिप्रं तत्पित्रे तं समार्पयत् ॥ ४७ ॥
तद्दृष्ट्वा परमाश्चर्य्यं जनाः सर्व्वे समागताः ।
ऐशीं शक्तिं समाहृत्य बभुवुरतिविस्मिताः ॥ ४८ ॥
तदा प्रभृति स प्राह शिष्येभ्यः परमात्मजः ।
समर्पणं सपत्नेषु क्लेशपूर्व्वकमात्मनः ॥ ४९ ॥
एतद्वाक्यस्य तात्पर्य्यं तच्छिष्या बोद्धुमक्षमाः ।
न पुनः परिपप्रच्छुस्तं भयाकुलचेतसः ॥ ५० ॥
अथ विप्रतिपन्नांस्तान् श्रेष्ठत्वविषये प्रभुः ।
शिशुमेकं समादाय वाक्यमर्थविदब्रवीत् ॥ ५१ ॥
एतद्बालोपमं कश्चिच्छिशुमेकं मदर्थतः ।
श्रद्धया यदि गृह्णाति स मां गृह्णाति सर्व्वथा ॥ ५२ ॥
यश्च मामेव गृह्णाति सदामद्भावभावितः ।
स मत्पितरमादत्ते सत्यमेतन्न संशयः ॥ ५३ ॥
यदि कामयते कश्चित् सर्व्वप्रथमतामिह ।
सोऽन्त्यं पदं समाश्रित्य सर्व्वेषां सेवको भवेत् ॥ ५४ ॥
ततो योहन आगत्य परमात्मजमब्रवीत् ।
भगवन् भवतो नाम्ना भूतनिःसारणे रतम् ॥
नरमेकं न्यषेधाम भवद्धर्म्माद्बहिः स्थितम् ।
तस्य निष्ठा गुरौ काचिदस्ति किं भवतां मते ॥ ५५ ॥
योशुस्तमब्रवीत् सौम्य तं जनं मा निवारय ।
युष्मान् यो मानवो द्वेष्टि विपक्षः सहि वो ध्रुवम् ॥ ५६ ॥

अथ मर्त्त्यं परित्यज्य प्रयास्यन् परमं पदम् ।
यीशु र्गन्तुं मनश्चक्रे यिरूशालेमपत्तनम् ॥ ५७ ॥
अमरीयपुरं प्राप्तं प्रभुं दूतपुरःसरम् ।
न पौराः पूजयाञ्चक्रु र्यिरूशालेमगामिनम् ॥ ५८ ॥
याकोबयोहनौ नाम शिष्यौ वीक्ष्य तदप्रियम् ।
एलीय इव तान् दग्धुमीषतुः क्रोधवह्निना ॥ ५९ ॥
यीशुस्तान् वारयित्वाह मतिरेषापनीयताम् ।
मत्समागतिर्न नाशाय किन्तु संरक्षणायच ॥ ६० ॥
यात्राकाले ततोऽन्यत्र कश्चित्तमिदमुक्तवान् ।
प्रभो त्वामनुगच्छामि गच्छन्तं करुणालयम् ॥ ६१ ॥
यीशुः प्राह शृगालानां सन्ति गर्त्ता धरातले ।
सन्ति नीड़ा विहङ्गानां मम स्थानं न विद्यते ॥ ६२ ॥
प्रभुरन्यं नरं वीक्ष्यागच्छेति स्वयमुक्तवान् ।
स प्राहाहं करिष्यामि सत्कारं पितुरग्रतः ॥ ६३ ॥
यीशु प्राह करिष्यन्ति मृतकार्य्यं मृता नराः ।
त्वमीश्वरस्य साम्राज्यं गत्वा सर्व्वत्र घोषय ॥ ६४ ॥
अवोचदपरः कश्चित् स्वजनादेशतः प्रभो ।
भवन्तमनुयास्यामि सत्यमेतद् ब्रवीम्यमम् ॥ ६५ ॥
यीशुस्तं वारयित्वाह यो हि धृत्वा हलं जनः ।
पश्चात् पश्यति सन्न्यस्तः स नरो नेशसम्मतः ॥ ६६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमत्प्रभुभाषितख्रीष्टोपनिषदि नवमोऽध्यायः ।

---

## दशमोऽध्यायः

St. Luke. Chapter. 10. [Christ sendeth out at once seventy disciples to work miracles, and to preach: admonisheth them to be humble, and wherein to rejoice: thanketh his Father for his grace: magnifieth the happy estate of his church: teacheth the lawyer how to attain eternal life, and to take every one for his neighbour that needeth his mercy: reprehendeth Martha, and commendeth Mary her sister.]

अथ यत्र मनश्चक्रे गन्तुं परमतत्त्ववित्।
तत्र संप्रेषयामास द्वौ द्वौ शिष्यौ विभागशः॥ १॥
इत्यमनेन ययुः शिष्या योशोः सप्ततिसंख्यकाः।
तेषां गमनकालेच योशुस्तानिदमब्रवीत्॥ २॥
प्राचुर्य्यमिह शस्यानामप्राचुर्य्यं तु कर्म्मिणाम्।
चेत्रस्य शरणं यात स प्रेष्यति कर्म्मठान्॥ ३॥
प्रेषयामि वृकसङ्घेषु मेषानिव भवादृशान्।
अतो न किञ्चिदादेयं पाथेयं मम वाक्यतः॥ ४॥
पथिकेभ्यो न कल्याणीं ब्रूत वाक्यं पथि क्वचित्।
गृहं प्रविश्य कस्यापि शान्तिं तस्य च शंसत॥ ५॥
शान्तिपुत्रो भवेत् कश्चित् यदि तस्मिन्निकेतने।
युष्माकं शाश्वती शान्ति स्तत्र नित्यं विराजताम्॥ ६॥
तस्मिन्नेव गृहे स्थेयं भोक्तव्यं च समर्पितम्।
स्वीकुर्व्वन् कर्म्मणोपात्तं न कर्त्ता ह्यवसीदति॥ ७॥
ये युष्माननुकाङ्क्षन्ति तेषां कुरुत मङ्गलम्।
उदासीनवदासीनः पश्यतान्यानुपेक्षया॥ ८॥
एवं हि वो भवेत् सिद्धिः समं सर्व्वत्र पश्यताम्।
नहि कल्याणकृत् कश्चिद्दुर्गतिं पश्यति क्वचित्॥ ९॥
अभक्तानां तु युष्माकं ग्रामस्य नगरस्यच।
अन्त्या दशा भवेच्छोच्या सदोमनगरादपि॥ १०॥

इतोऽपि शोचनीयाः सुर देशा कोरासिनस्य च ।
बैत्सदाथास्तथा पृथ्वी वर्ज्जनात् परमात्मनः ॥ ११ ॥
पुरी कफरनाहूमनामधेयाभिमानिनी ।
अवरोक्ष्यति पातालमज्ञेन तमसावृतम् ॥ १२ ॥
ये युष्मान्मानवाः शुद्धा यजन्ते श्रद्धयान्विताः ॥
सत्यमेव नरास्ते मां प्रपूजयन्ति सर्व्वथा ॥ १३ ॥
ये युष्मानवमन्यन्ते दम्भमानमदान्विताः ।
मूढास्ते मां न गृह्णन्ति पितरं च ममेश्वरम् ॥ १४ ॥
अथ प्रत्यावृता हृष्टाः शिष्याः सप्ततिसंख्यकाः ।
यीशोरन्तिकमागत्य यीशो माहात्म्यमस्तुवन् ॥ १५ ॥
यीशुस्तांनवदत् सौम्याः शाश्वतं भद्रमस्तु वः ।
अपश्यम् दुष्कृतं स्वर्गात् पतितां चपलामिव ॥ १६ ॥
युष्मभ्यं मयका दत्तं सामर्थ्यं बलभूतहृत् ।
अवाधिगतयस्तस्माद् यूयं किमत्र हृष्यथ ॥ १७ ॥
युष्माकमनुकम्पार्थं परमात्मा सनातनः ।
यच्चिनोति सुखं स्वर्गे तदासाद्य प्रहृष्यत ॥ १८ ॥
तस्मिन्नेव ततः कालेऽनुभूयानन्दमात्मनि ।
तुष्टाव परमात्मानं यीशु र्वाग्भिः समाहितः ॥ १९ ॥
त्वं स्वर्गस्याधिपो धन्यो धन्य स्त्वं प्रभवो मम ।
प्रभुस्त्वं जगतो धन्यो धन्यस्त्वं परमेश्वर ॥ २० ॥
यदिदं परमं तत्त्वं गुह्यं तत्त्वविदामपि ।
बालेषूद्भासितं तात तत्त्वयैवानुकम्पया ॥ २१ ॥
त्वयेदं वाञ्छितं तात सम्पूर्णं तत्त्वदिच्छया ।
अतस्त्वां साधुवादेन प्रपद्ये परमेश्वरम् ॥ २२ ॥
ममोपकरणं सर्व्वं त्वया तात समर्पितम् ।
अतस्त्वां साधुवादेन प्रपद्ये परमेश्वरम् ॥ २३ ॥
न वेत्ति पितरं सम्यग् विना कश्चित्तदात्मजम् ।
स च वेत्ति सुतस्तस्य यं बोधयितुमिच्छति ॥ २४ ॥

प्रत्यावृत्य ततः शिष्यान् प्रत्यसौ परमात्मजः ।
उपदेशच्छलेनेदं परमं तत्त्वमब्रवीत् ॥ २५ ॥
यूयं पश्यथ यान् भावान् प्रसादात् परमात्मनः ।
धन्यं रूपेन्द्रियं तेषां ये तान् पश्यन्ति मानवाः ॥ २६ ॥
यूयं यत् परमं रूपमनायासेन पश्यथ ।
इच्छन्तोऽपि न पश्यन्ति तद्रूपं नृपसाधवः ॥ २७ ॥
यूयं शृणुथ यत्तत्त्वं कर्णाभ्यामतिनिर्मलम् ।
इच्छन्तोऽपि न तत्तत्त्वं शृण्वन्ति मुनयोऽमलाः ॥ २८ ॥
यीशुं परीक्ष्यमाणोऽथ शास्त्रज्ञः कश्चिदब्रवीत् ।
लप्स्येऽहं कर्मणा केन प्रभो शाश्वतजीवनम् ॥ २९ ॥
यीशुस्तमब्रवीत् सौम्य किमत्र श्रुतिरब्रवीत् ।
स प्राहेदं जगौ धीमच्छ्रुतिः सर्व्वहितैषिणी ॥ ३० ॥
नरः कुर्य्यात् परं प्रेम स्वप्रभौ परमेश्वरे ।
स्ववच्च स्वजने चैव मनोवाक्कायकर्म्मभिः ॥ ३१ ॥
यीशुस्तमब्रवीत् सौम्य त्वमेतत् सत्यमुक्तवान् ।
एतदालम्ब्य कृत्वा लप्स्यसेऽनन्तजीवनम् ॥ ३२ ॥
ततः स पुनरेवाह दर्शयन्नात्मनोऽज्ञताम् ।
भगवञ्छ्रोतुमिच्छामि लक्षणं स्वजनस्य मे ॥ ३३ ॥
यीशुस्तमब्रवीत् सौम्य शृणु स्वजनलक्षणम् ।
दृष्टान्तवचनेनैव ब्रुवेऽहं प्रियदर्शन ॥ ३४ ॥
यिरूशालेमतः कश्चित् प्रयास्यन् यीरिहुं प्रति ।
दस्युभिर्हृतसर्व्वस्वः पथः पार्श्वे निपातितः ॥ ३५ ॥
दैवात् पुरोहितः कश्चिद् गच्छंस्तेनैव वर्त्मना ।
तं विलोक्यापवव्राजापरपार्श्वेन हेलया ॥ ३६ ॥
तथैव कृतवान् कश्चिल्लेवीयोऽपि समागतः ।
शमरीयस्ततः कश्चित्तस्यान्तिकमुपागतः ॥ ३७ ॥
सोऽभिगम्य सुतैलेन तथा द्राक्षारसेन च ।
तं निषिच्य सुचेलेन बबन्धागन्तुकं व्रणम् ॥ ३८ ॥

पान्थशालां ततो नीत्वारोह्य वाहनमात्मनः ।
स्वयं पर्य्यचरद्धीमान् दाक्ष्यशौचानुरञ्जिभिः ॥ ३८ ॥
मुद्रापादद्वयं दत्त्वा द्वितीयदिवसे पुनः ।
स्वामिने पान्थशालाया इदं वचनमब्रवीत् ॥ ४० ॥
भद्रायं पीड़ितो दुःखे स्राव गेहेऽवतिष्ठते ।
शुश्रूषस्वातिथिं सौम्य दास्यामि 'तेऽधिकं धनम् ॥ ४१ ॥
एतेषु त्रिषु पान्थेषु दस्युपीड़ितरोगिणः ।
अधिकं स्वजनं वेत्सि कं नाम वद साम्प्रतम् ॥ ४२ ॥
सोऽब्रवीत् स्वजनं वेद्मि मानवं कृपयान्वितम् ।
यीशुस्तमुक्तवान् सत्यमवदस्त्वं तथा कुरु ॥ ४३ ॥
यीशुरथैकदा गच्छन् कश्चिद् ग्राममुपागतः ।
मार्थाख्या रमणी तत्र स्वगृहे तं न्यमन्त्रयत् ॥ ४४ ॥
मरीयम् नाम तस्यास्तु भगिनीएका तदागता ।
प्रभोः पादावुपाश्रित्याकर्णयत्तत् कथामृतम् ॥ ४५ ॥
मार्था तु तस्य सेवायां कल्याणी निरताधिकम् ।
प्रभोः समीपमागत्य वक्ष्यमिदमब्रवीत् ॥ ४६ ॥
निरता परिचर्य्यायामेकाहं भगवंस्तव ।
अनुमन्यस्व साहाय्यं स्वसुरस्या कृतो मम ॥ ४७ ॥
यीशुस्तामवदन्मार्थे व्यग्रा त्वं विषयेऽधिके ।
किमस्मिन् विषये नास्ति विस्तरस्य प्रयोजनम् ॥ ५८ ॥
इयमेकां वरां भक्तिं तव भग्नयनुतिष्ठति ।
नापहर्त्तुं समर्थोऽस्मि भक्तिमव्यभिचारिणीम् ॥ ४८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गभाषितखीष्टोपनिषदि दशमोऽध्यायः ।

---

## एकादशोऽध्याय:

St. Luke. Chapter 11. [Christ teacheth to pray, and that instantly: assuring that God so will give us good things. He, casting out a dumb devil, rebuketh the blasphemous Pharisees: and sheweth who are blessed: preacheth to the people, and reprehendeth the outward shew of holiness in the Pharisees, scribes, and lawyers.]

कृतध्यानं समासीनं यीशुं दृष्ट्वाथ निर्ज्जने ।
शिष्य: कश्चित् समागत्य पप्रच्छ प्रार्थनाविधिम् ॥ १ ॥
यीशुस्तस्य वच: श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
अनेन वचसा सौम्य प्रार्थयस्व समाहित: ॥ २ ॥
स्वर्गस्ते परमं धाम पितस्त्वन्नाम पूज्यताम् ।
साम्राज्यं ते समायातु तवेच्छा पूर्य्यतां सदा ॥ ३ ॥
देहि श्वौवस्तिकं भक्ष्यमद्यास्मभ्यमयाचितम् ।
अस्माकं सर्व्वपापानि क्षमस्व परमेश्वर ॥ ४ ॥
यथास्मद्द्रोहिणो नित्यं वयमेव क्षमामहे ॥ ५ ॥
मा प्रलोभनमस्माकं भवतोऽस्तु परात्पर ॥ ६ ॥
याचमानोऽर्द्धरात्रेऽपि लभते सुहृद: सत: ।
यथाभ्यागतभक्ष्याणि तथेशाल्लभते सुधी: ॥ ७ ॥
प्रार्थनान्वेषणे कुर्व्वन् भद्रमेवानुपश्यति ।
कृत्वाघातं तथा द्वारे द्वारमुक्तिं प्रपश्यति ॥ ८ ॥
अस्ति किं भवतां मध्ये कश्चिदेवंविधो जन: ।
अण्डपूपार्थिपुत्राय सर्पाश्मानौ ददाति य: ॥ ९ ॥
अज्ञानामपि युष्माकं दानवृत्तिर्यदीदृशी ।
सर्व्वज्ञस्य पितुर्दाने संशयो भवतां कथम् ॥ १० ॥
अथैकदा जना दृष्ट्वा यीशुना प्रकृतिं गतम् ।
मूकमेकं प्रजल्पन्तं विस्मयं परमं गता: ॥ ११ ॥
तेषु केचिद्वदन्त्यस्य भूतं भूतपतेर्बलात् ।
विताडयत्ययं केचिदभिज्ञानं ययाचिरे ॥ १२ ॥

योशुस्तानब्रवीन्नैवं राज्यं भिन्नं हि नश्यति ।
प्रनश्यति महामूल्यं स्वविरुद्धं निकेतनम् ॥ १३ ॥
यदि भूतपती राज्याङ्गं तत्सङ्घान् विताड़येत् ।
कथं संस्थास्यते नाम तद्राज्यं सुस्थिरं चिरम् ॥ १४ ॥
भूतान्निःसारयन्तीह सन्ताना अपि तावकाः ।
ते युष्मान् दूषयिष्यन्ति विचारसमये ध्रुवम् ॥ १५ ॥
यदीश्वरप्रसादेन भूतो निःसार्य्यते मया ।
तर्हि वेत्स्येशसाम्राज्यं भवदन्तिकमागतम् ॥ १६ ॥
न बद्ध्वाग्रे सुदुर्द्धर्षं बलवन्तं गृहाधिपम् ।
कथं तद्गृहवस्तूनां सम्भवेन्नामलुण्ठनम् ॥ १७ ॥
यो मया सह नान्वेति स मां द्वेष्टि निरन्तरम् ।
न चिनोति मया यस्तु स तत् सर्व्वमपास्यति ॥ १८ ॥
नरदेहाद्विनिर्याति यदात्मा तमसावृतः ।
विशुष्कं देशमासाद्य भ्राम्यतीतश्च क्लमान्वितः ॥ १९ ॥
विश्रान्तिं याचमानोऽपि लभते नैव निर्वृतिम् ।
तदासौ पुनरागत्याश्रयते त्यक्तमन्दिरम् ॥ २० ॥
तत्रापि मार्ज्जितं शून्यं शोभितं चानुपश्यति ॥ २१ ॥
पुनः सोऽथ समानीय सप्त जीवान् सुदुष्कृतान् ।
वसति स्वयमाविश्य गृहे तस्मिन् पुरातने ॥ २२ ।
तेनासौ लभते दुःखं पूर्व्वस्मादपि दुःसहम् ॥ २३ ॥
तदानीं ब्रुवतीत्येवं वचनं परमात्मजे ।
जनानां मध्यतः काचिद् योषित्तमिदमब्रवीत् ॥ २४ ।
धन्योऽसौ जननीगर्भो धृतवान् यो भवद्विधम् ।
यतस्त्वं पीतवान् स्तन्यं तच्च धन्यं स्तनद्वयम् ॥ २५ ॥
यीशुस्तस्या वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
ये शृण्वन्तीशवाक्यानि धन्यास्ते भुवि मानवाः ॥ २६ ॥
जनसङ्घानथालोक्य परमात्मज उक्तवान् ।
चिह्नार्थिभ्यो न दास्यामि चिह्नं योनाहतोऽधिकम् ॥ २७ ॥

यथासौ निनवीयानामभूच्चिह्नमसंशयम् ।
तथा मनुष्यपुत्रोऽपि चिह्नमेषां भविष्यति ॥ २८ ॥
राज्ञी दक्षिणदेशस्य धराप्रान्तादुपागता ।
शलोम्नः श्रेयसीं विद्यां जग्राह धर्म्मचारिणी ॥ २९ ॥
सापीशतैश्वरमे काले विचारात् पुनरुत्थिता ।
दूषयिष्यति तानेतान् पापवृत्तान्नराधमान् ॥ ३० ॥
भुवि ज्ञानिषु सर्व्वेषु शलोमा श्रेष्ठ उच्यते ।
शलोम्नोऽप्यधिकः कश्चिन्मानवोऽत्रावतिष्ठते ॥ ३१ ॥
एतान् दोषीकरिष्यन्ति निनवीया जना अपि ।
अवाप्य पुनरुत्थानं योनाहूतकल्मषाः ॥ ३२ ॥
योनाहतोऽपि सः श्रेयान् य एकोऽत्रावतिष्ठते ॥ ३३ ॥
प्रज्वाल्य दीपिकां द्रोण्या अधो न स्थापयेज्जनः ।
संस्थापयेत्तथा दृश्यं पश्येयु र्दर्शका यथा ॥ ३४ ॥
चक्षुस्ते दैहिकं ज्योतिस्तेन देहो विभाति ते ।
देहस्ते चक्षुषा हीनो न विभाति कदाचन ॥ ३५ ॥
तस्मात्तवान्तरं ज्योती रक्ष यत्नात् सुनिर्म्मलम् ।
तत्त्वां तवदेहं चैव कृत्स्नमुल्लासयिष्यति ॥ ३६ ॥
फरीशी तमथामन्त्र्य कश्चिन्निजनिकेतने ।
भुक्तवन्तं विना स्नानमीक्षित्वा विस्मयं गतः ॥ ३७ ॥
योशुस्तमवदच्छौचमान्तरं निर्म्मलं परम् ।
शुद्ध्यन्त्यशुद्धयः सर्व्वा अन्तःशौचेन केवलम् ॥ ३८ ॥
युष्माभि र्दीयते भागो दशमः शस्यसम्पदः ।
ईश्वरप्रणिधानादि मीहात् सर्व्वमुपेक्ष्यते ॥ ३९ ॥
हा धिक्कपटिनो युष्मानहङ्कारमुपाश्रितान् ।
युष्माभिः सेव्यते यस्मादग्रं पूजासनादिकम् ॥ ४० ॥
हा धिक्कपटिनो युष्मांस्त्यक्तधर्म्मान् फरीशिनः
दुर्व्विज्ञेयान् समाच्छन्नशवागारानिव स्थितान् ॥ ४१ ।

विधिवादी ततः कश्चित् परमात्मजमुक्तवान् ।
अपमानं त्वमस्माकं कृतवान् वाचयानया ॥ ४२ ॥
यीशुस्तं कथयामास धिग् युष्मान् विधिवादिनः ।
यूयं सुदुःसहभारेण नरान् कुरुथ भारिणः ॥ ४३ ॥
ततो दुर्व्वहभारेण वोढ्यापि पीड़िताञ्जनान् ।
एकयापि निजाङ्गुल्या न भारं स्पृशथाधमाः ॥ ४४ ॥
धिग् युष्मान् कपटाचारान् विधिवादरताञ्जनान् ॥
यतो वः पूर्व्ववंश्यैर्ये निहतानां महात्मनाम् ॥
शवागाराणि निर्म्माय स्ववंशीयैरनुष्ठिताम् ।
यूयं हत्यां महापापां प्रमाणयथ निष्ठुराम् ॥ ४५ ॥
ईशोऽपि व्याजहारेदमेतस्मादेव कारणात् ।
प्रहेष्याम्यन्तिके तेषामाप्तान् सम्प्रेरितानहम् ॥ ४६ ॥
तेषु कांश्चित्ताड़यित्वा हनिष्यन्ति नराधमाः ॥ ४७ ॥
प्रभृत्येवं वधात्तस्य हेवलस्य महात्मनः ।
सखरीयवधं यावद् वेदिमन्दिरमन्तरा ॥
यावन्तः पतिता स्तेषां पृथिव्यां रक्तविन्दवः ।
तावन्मानमहापापविपाकफलभागिनः ॥
अस्मिन्नेव युगे जाता भविष्यन्ति नरा ध्रुवम् ॥ ४८ ॥
धिग् युष्मान् कपटाचारान् विधिवादरताञ्जनान् ।
स्वर्गद्वारस्य युष्माभिः कुञ्चिकापहृता यतः ॥ ४९ ॥
अवश्यकर्म्मणानेन स्वप्रवेशो निवारितः ।
प्रवेशः प्रविविक्षूणामन्येषामपि वाधितः ॥ ५० ॥
इति प्रतिसमादिश्य तस्मात् स्थानाद्विनिर्गतम् ।
यीशुं धर्त्तुं मतिं चक्रुः सोपाध्यायाः फरीशिनः ॥ ५१ ॥
पप्रच्छुर्विविधान् प्रश्नाञ्छठास्ते परमात्मजम् ।
अभियोगस्य सूत्राणि तद् वाक्याच्छ्रोतुमिच्छया ॥ ५२ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्भगभाषितख्रीष्टोपनिषदि एकादशोऽध्यायः ।

## द्वादशोऽध्याय:

St. Luke. Chapter 12. [ Christ preacheth to his disciples to avoid hypocrisy, and fearfulness in publishing his doctrine : warneth the people to beware of covetousness, by the parable of the rich man who set up greater barns. We must not be over careful of earthly things, but seek the kingdom of God' give alms, be ready at a knock to open, to our Lord whensoever he cometh. Christ's ministers are to see to their charge, and look for persecution. The people must take this time of grace, becauae it is a fearful thing to die without reconciliation. ]

योशुस्ततो जनान् वीक्ष्य सहस्रशः समागतान् ।
पादैर्मर्द्दयतोऽन्योन्यं स्वशिष्यानिदमब्रवीत् ॥ १ ॥
फरीशिकिण्वतो भाव्यं सावधानै र्निरन्तरम् ।
कापट्यं तद्धि विज्ञेयं युष्माभि र्भावितात्मभिः ॥ २ ॥
अविज्ञेयं तथाव्यक्तं न किञ्चिद् वोऽवशिष्यते ।
अव्यक्तमस्ति चेत् किञ्चित् ध्रुवं व्यक्तिं तदेष्यति ॥ ३ ॥
यच्चोक्तमन्तरागारे युष्माभिः स्थिरबुद्धिभिः ।
तद्गृहमस्तके व्यक्तं भविष्यति न संशयः ॥ ४ ॥
देहघ्नेभ्यो न भेतव्यं नात्मानं घ्नन्ति ते यतः ।
देहात्मनोस्तु नरके नियन्तुर्भीतिरस्तु वः ॥ ५ ॥
चटकाः पञ्च लभ्यन्ते ताम्रमुद्राद्वयेन च ।
प्रत्यक्षाः परमेशस्य तेऽपि दृष्ट्या निरन्तरम् ॥ ६ ॥
संख्याताः सन्ति युष्माकं सर्व्वेऽपि शिरसः कचाः ।
विशिष्टैश्चटकेभ्यश्च भयं कस्मात् प्रपद्यते ॥ ७ ॥
ब्रवीमि सत्यमेवाहं यो मामङ्गीकरिष्यति ।
तमहं स्वर्गराजेऽपि स्वीकरिष्याम्यसंशयम् ॥ ८ ॥
प्रत्याख्याति च यो लोके नित्यं मामभ्यसूयया ।
मयापि स्वर्गराजेऽसौ प्रत्याख्येयो भविष्यति ॥ ९ ॥

लोके मनुष्यपुत्रस्य निन्दाया विद्यते क्षमा ।
ईश्वरद्विषां कृतघ्नानां नास्त्येव निष्कृतिः क्वचित् ॥ १० ॥
साक्ष्यं विचारपर्य्यङ्गेषु न वाच्यं कल्पितं वचः ।
ईश्वरप्रेरितं वाक्यं व्याहर्त्तव्यमतन्द्रितैः ॥ ११ ॥
जनानां मध्यतः कश्चित्ततस्तमुक्तवाञ्जनः ।
पितृदाय-विभागाय भ्रातरं ब्रूहि मे गुरो ॥ १२ ॥
यीशुस्तं कथयामास भद्र तत् कथयस्व माम् ।
युष्मद्धनविभागाय केनाहं प्रेषितो भुवि ॥ १३ ॥
ततः शिष्यान् पुनः प्राह भवतार्थेषु निस्पृहाः ।
नहि प्राणा मनुष्याणामर्थनिष्ठा कदाचन ॥ १४ ॥
तथाहि धनवान् कश्चित् स्वक्षेत्रे शस्यसम्पदः ।
प्रजाताः प्रचुरा वीक्ष्य मनसेदमकल्पयत् ॥ १५ ॥
अपर्य्याप्तं मम स्थानं शस्यानि तु बहूनि मे ।
तस्माद् भूयः करिष्यामि कुशूलान् मे महत्तरान् ॥ १६ ॥
तत्र संस्थाप्य सर्व्वाणि शस्यानि द्रविणानि च ।
स्वप्राणांस्तर्पयिष्यामि सानन्दं शाश्वतीः समाः ॥ १७ ॥
तमाह परमेशस्तु रात्रावस्यां तवाधम ।
देहात् प्राणा वियुज्येरंस्तत् कस्येदं भविष्यति ॥ १८ ॥
एतस्मात् कारणाद् योऽर्थानर्पणाय परात्मनि ।
चिनोति स पुमाँल्लोके सदा भद्राणि पश्यति ॥ १९ ॥
भूयोऽपि कथयामास स्वशिष्यान् यीशुरात्मवान् ।
आत्मनो जीविकार्थंच नानुशोचितुमर्हत ॥ २० ॥
श्रेयांशो भक्ष्यतः प्राणा वस्त्राद्देहो विशिष्यते ॥ २१ ॥
न वपन्ति न कृन्तन्ति न संचिन्वन्ति वायसाः ।
तेषामपि वहत्येव योगक्षेमं परेश्वरः ॥ २२ ॥
कुशलाः सर्व्वशस्तेभ्यो यूयं किमनुशोचथ ।
कः शक्तश्चिन्तयित्वापि वर्द्धितुं स्वायुषः कलाम् ॥ २३ ॥

योऽशक्तः खलु निष्पत्तेर् लघिष्ठस्यापि कर्म्मणः ।
अचिन्त्यविषये तस्य चिन्तायाः किं फलं भवेत् ॥ २४ ।
ग्वसुनाख्यानि पुष्पाणि वर्द्धन्ते करणै विना ।
न श्रमं कुर्व्वते तानि नच तन्वन्ति सूत्रकम् ॥ २५ ॥
तासां स्वभाविकी शोभा तथापि सर्व्व विक्रमैः ।
सज्जितस्य शलोमोऽपि सौन्दर्य्यादतिरिच्यते ॥ २६ ॥
यान्यद्य विद्यमानानि श्वःक्षेप्याण्यनलाश्रये ।
यदीशो भूषयेत्तानि कथं वो न विभूषयेत् ॥ २७ ॥
एतस्मात् कारणाद् वृत्तिं नानुशोचितुमर्हत ।
जीविकामनुशोचन्ति ह्यनीशाः परजातयः ॥ २८ ॥
यूयं सर्व्वप्रयत्नेन परेशमनुगच्छत ।
सर्व्वं जीवार्थतत्त्वज्ञः स वो वृत्तिं विधास्यति ॥ २९ ॥
हे मेषव्रज माभैषीः पिता स्वर्ग्यः सनातन ।
प्रदातुं कृतसङ्कल्पो युष्मभ्यं स्वर्गमक्षयम् ॥ ३० ॥
अतो विक्रीय सर्व्वस्वं प्रयात परमं पदम् ।
यच्चौरदस्युकीटाद्यैर्न कदापि क्षयं व्रजेत् ॥ ३१ ॥
न मनो विषयासक्तमीशं नयति मानवान् ।
क्रियतामतियत्नेन तस्मान्निर्वासनं मनः ॥ ३२ ॥
बद्धा स्तिष्ठन्तु वः कक्ष्यो दीपाश्च ज्वलिताः सदा ।
स्वभर्त्तारं प्रतिक्षध्वं दासाः स्वान् स्वान् प्रभुन् यथा ॥३३॥
प्रभोः सङ्केतमाकर्ण्य द्वारमुद्घाटयन्ति ये ।
धन्यास्ते निद्रिता दासा भवे गुरुत्वभागिनः ॥ ३४ ॥
अज्ञास्यद् गृहकर्त्तादौ चौरस्यागमनं यदि ।
नासहिष्यत् स गेहस्य कुड्यभेदं कदाचन ॥ ३५ ॥
ध्रुवं मनुष्यपुत्रोऽसावकस्मादागमिष्यति ।
ससज्जा अवतिष्ठध्वं सदा तद्गतमानसाः ॥ ३६ ॥
पीश्रोस्तद् वचनं श्रुत्वा पितरस्तमिदमुक्तवान् ।
अस्मान् प्रत्ययमादेशः किं सर्व्वान् प्रति वा गुरो ॥ ३७ ॥

स प्राह तं गृहाध्यक्षमधिकृत्याहमुक्तवान् ।
यो हि स्वजनरक्षार्थं प्रभुणा विनियुज्यते ॥ ३८ ॥
धन्यः स कुशलो दासो यमाज्ञापालने रतम् ।
द्रक्ष्यति प्रभुरागत्य स तत्सर्व्वेश्वरो भवेत् ॥ ३९ ॥
स दासः प्रभुकर्म्माणि प्रमादान्न करोति चेत् ।
अकस्मात् प्रभुरागत्य तं छित्वा निहनिष्यति ॥ ४० ॥
यः कर्म्म भर्त्तृनिर्द्दिष्टं प्रजानन्नपि नाकरोत् ।
भर्त्तुः प्रहारमासाद्य स नरो दुःखमाप्स्यति ॥ ४१ ॥
कर्म्माणि दण्डयोग्यानि योऽज्ञानादकरोदिह ।
स्वस्वकर्म्मानुसारेण दण्डमल्पमवाप्स्यति ॥ ४२ ॥
गृहीतमधिकं येन देयं तेनाधिकं भवेत् ।
सञ्चितमधिकं येन प्रार्थ्यते स नरोऽधिकम् ॥ ४३ ॥
पृथिव्यामनलं चेप्तुमहमागतवानिह ।
यदि प्रज्वलितो वह्निः किमन्यदवशिष्यते ॥ ४४ ॥
अहं स्नातो भविष्यामि सलिलेनेह केनचित् ।
तिष्ठामि संवृतस्तावत्तच्च यावन्न सेत्स्यति ॥ ४५ ॥
प्रदातुं लौकिकीं शान्तिं पृथिवीं नाहमागतः ।
किन्तु प्रभेदसृष्ट्यर्थं सत्यमेतद् ब्रवीम्यहम् ॥ ४६ ॥
अद्यप्रभृति भिन्नाः स्युः पञ्चैकस्मिन् गृहे जनाः ।
त्रयो द्वयो विपक्षा स्युर्द्वौ त्रयाणांच वैरिणौ ॥ ४७ ॥
पिता पुत्रस्य पुत्रश्च पितुर्वैरं करिष्यति ।
दुहितुर्जननी वैरं मातुर्वैरं च कन्यका ॥ ४८ ॥
विरोधं पुत्रवध्वाश्च पुत्रमाता करिष्यति ।
तथा पुत्रवधूः श्वश्र्वाः प्रातिकूल्यं करिष्यति ॥ ४९ ॥
पश्चिमस्या दिशो वीक्ष्योद्गच्छन्तं मेघमण्डलम् ।
युष्माभि र्मीयते वृष्टिः सत्यं भवति वो वचः ॥ ५० ॥
दक्षिणस्या दिशो वीक्ष्य प्रवान्तमनिलं तथा ।
युष्माभि र्मीयते ग्रीष्मः सत्यं भवति वो वचः ॥ ५१ ॥

यूयमाकाशमेदिन्योः संस्थानमवगच्छथ ।
कालस्य लक्षणज्ञाने कुतो वः संशयः शठाः ॥ ५२ ॥
किं न्याय्यमिति युष्माभिः कथं नैव विचार्यते ॥ ५३ ॥
मुक्तिं चापि विपक्षेभ्यः पथ्येव प्राप्तुमिच्छथ ।
समक्षं प्राड्विवाकस्य युष्मान्नेष्यति तेऽन्यथा ॥ ५४ ॥
न्यायतः प्राड्विवाकश्च पदातौ वोऽर्पयिष्यति ॥ ५५ ॥
परतन्त्रः पदातिश्च कारायां वोऽर्पयिष्यति ।
पूर्णभोगं विना तस्या नास्ति मुक्तिः कदाचन ॥ ५६ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्रीकैश्यपनिबद्धायां श्रीमत्तृगभाषित ख्रीष्टोपनिषदि द्वादशोऽध्यायः ।

## त्रयोदशोऽध्यायः

St. Luke. Chapter. 13. [ Christ preacheth repentance upon the punishment of the Galilæans, and others. The fruitless fig tree may not stand. He healeth the crooked woman : sheweth the powerful working of the word in the hearts of his chosen, by the parable of the grain of mustard seed, and of leaven : exhorteth to enter in at the strait gate, and reproveth Herod and Jerusalem. ]

तं जनाः स्मारयामासुः काले तस्मिन्नुपस्थिताः ।
शोणितं गालिलीयानां यत् पीलातो बलौ ददौ ॥ १ ॥
यीशुस्तानब्रवीत्तेषां न दुर्गत्यानया वत ! ।
तदन्यगालिलीयेभ्यः पापाधिक्यं प्रसूच्यते ॥ २ ॥
शोधनं मनसो यूयमपि चेन्न करिष्यथ ।
ब्रवीमि सत्यमेवाहं यूयं तद्वद् विनङ्क्ष्यथ ॥ ३ ॥
शीलोहस्थगृहध्वंसाद् येऽष्टादश मृता जनाः ।
यिरूशालेमवासिभ्यो नासंस्ते पापिनोऽधिकम् ॥ ४ ॥

न करिष्यथ यूयं चेन्मनसः परिवर्त्तनम् ।
ब्रवीमि सत्यमेवाहं यूयं तद्वद् विनङ्क्ष्यथ ॥ ५ ॥
स भूय एव दृष्टान्तमात्मवानिममुक्तवान् ।
कस्यचिद् गोस्तनोच्चेत्र एक आसीदुदुम्बरः ॥ ६ ॥
तं वृक्षमफलं दृष्ट्वा स भृत्यमिदमब्रवीत् ।
अन्विष्य त्रीणि वर्षाणि न फलं लब्धवानहम् ॥ ७ ॥
छिन्धि वृक्षमिमं तस्मात् केवलं भूमिदूषकम् ।
भृत्यः प्रभोर्व्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ८ ॥
वर्षमेतदपि स्थातुमिममाज्ञापय प्रभो ।
अभिषिञ्चाम्यहं सारं यथायं फलदो भवेत् ॥ ९ ॥
अनेन कर्म्मणा वृक्षः फलिष्यति न संशयः ।
उत्छेत्स्यतेऽन्यथा स्वामिन् समूलं भवता ध्रुवम् ॥ १० ॥
योशु र्विश्रामवारेऽथ धर्म्मव्याख्यानतत्परः ।
दृष्टवान् रमणीमेकां कस्मिंश्चित् प्रार्थनागृहे ॥ ११ ॥
अष्टादशच वर्षाणि साक्रान्ता दुर्ब्बलात्मना ।
वक्रतामुपगच्छन्ती पृष्ठेन कुब्जतां गता ॥ १२ ॥
तामाहूयान्तिकं नीत्वा पृष्ठाच योशुरुक्तवान् ।
नारि त्वं सबला जाता साच दुर्ब्बलतां जहौ ॥ १३ ॥
तां नारीं सुस्थितां दृष्ट्वा स्तुवन्तींच परेश्वरम् ।
समाजभवनाध्यक्षः क्रुद्धो वचनमब्रवीत् ॥ १४ ॥
षडेव दिवसाः शिष्टैः कर्म्मार्थं विहिता पुरा ।
तेष्वेवारोग्यमाधेयं विश्रामदिवसे नतु ॥ १५ ॥
योशु स्तस्य वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ १६ ॥
यूयं मुक्त्वा गवादन्या विश्रामदिवसे स्वगाम् ।
नयथान्यं जलाधारं तोयं पाययितुं न किम् ॥ १७ ॥
तर्हि वः कथमापत्तिरस्या आरोग्यसाधने ॥ १८ ॥
विपक्षास्तद्वचः श्रुत्वा लज्जामापेदिरे भृशम् ।
अवापुः परमानन्दमपरे तस्य कर्म्मणा ॥ १९ ॥

तस्मिन्नेव ततः काल उवाच परमात्मजः ।
सर्व्वथानुपमेयोऽयमीशः केनोपमीयते ॥ २० ॥
क्षुद्रसर्षपवीजेन स तथाप्युपमीयते ।
यत् क्षेत्रे सूक्ष्ममप्युप्तं यथाकालं प्रवर्द्धते ॥ २१ ॥
शाखां यस्य समाश्रित्य परिश्रान्ताः पतत्रिणः ।
संप्राप्य महतीं छायां विश्राम्यन्ति यथासुखम् ॥ २२ ॥
सुरावीजेन भूयोऽपि स्वाराज्यमुपमीयते ॥ २३ ॥
यत्तु गोधूमचूर्णानां द्रोणत्रये निधापितम् ।
सर्व्वाणि तानि चूर्णानि येन मादकतां दधुः ॥ २४ ॥
ततः स नगरग्रामौ परिभ्राम्यन् परात्मजः ।
यिरूशालेममेतिस्म धर्म्मशिक्षां प्रचारयन् ॥ २५ ॥
तस्मिन् काले जनः कश्चित्तमुवाच समागतः ।
किंनु ते भगवन्नल्पे यान्ति ये परमां गतिम् ॥ २६ ॥
यीशुस्तमवदत् सौम्य कृत्वा प्राणपणं सदा ।
सङ्कीर्णेनैव मार्गेण प्राप्तुमिच्छ परं पदम् ॥ २७ ॥
बहवः प्रयतिष्यन्ते प्रवेष्टुं परमं पदम् ।
किन्तु ते न प्रवेक्ष्यन्ति सत्यमेतद्ब्रवीम्यहम् ॥ २८ ॥
गृहाध्यक्षो गृहद्वारं यदि रुद्धावतिष्ठते ।
द्वाराघातशतेनापि स द्वारं न विमोक्ष्यति ॥ २९ ॥
स्मृत्वापि पूर्व्ववृत्तानि बहुशोऽनुनयैस्तथा ।
न वो जानेऽहमित्युक्त्वा युष्मान्निराकरिष्यति ॥ ३० ।
रोदनं दन्तघर्षश्च ध्रुवं तत्र भविष्यतः ।
ययं द्रक्ष्यथ तत्सर्व्वं पश्चात्तापविमोहिताः ॥ ३१ ॥
अब्राहामस्तथेसहाको याकोबो मुनयस्तथा ।
स्थास्यन्तीश्वरसाम्राज्ये यूयं वहिर्गमिष्यथ ॥ ३२ ॥
ईशधाम्नि प्रवेक्ष्यन्ति चतुर्दिग्भ्यः समागताः ।
अन्तिमैः प्रथमैः केचिद्भाव्यमन्त्यैस्तथादिमैः ॥ ३३ ॥

ततः फरोशिनः केचिदागत्य यीशुमब्रुवन् ।
अस्मात् स्थानात् प्रयाहि त्वं हेरोदस्त्वां जिघांसति ॥ ३४ ॥
यीशुस्तानवदद् यात तथा तं ब्रूत जम्बुकम् ।
अहं सम्पादयाम्यद्य श्वश्चारोग्यमतन्द्रितः ॥ ३५ ॥
सिद्धकर्म्मा भविष्यामि तृतीयद्दिवसे पुनः ।
अद्य श्वो वा परश्वो वा ध्रुवा मम गतिर्भवेत् ॥ ३६ ॥
असंशयं विजानन्तु भवन्तो मामकं वचः ।
नह्याम्नानां विनाशोऽस्ति यिरूशालेमतो बहिः ॥ ३७ ॥
यिरूशालेम हा भूमे यिरूशालेम हा पुरि ।
त्वयाप्ता विनिपात्यन्ते ताड्यन्ते प्रेरिता जनाः ॥ ३८ ॥
त्वत्पुत्रमिलने यत्नं बहुशः कृतवानहम् ।
आकर्षति निजक्रोडे कुक्कुटी शावकान् यथा ॥ ३९ ॥
न च ते सम्मता स्तत्र पश्य ते पतितं गृहम् ।
न मां द्रक्ष्यसि तावत्त्वमिदं यावन्न भाषसे ॥
स धन्यो यः समायाति यशसा परमात्मनः ॥ ४० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमल्लूकभाषितख्रीष्टोपनिषदि त्रयोदशोऽध्यायः ।

## चतुर्दशोऽध्यायः

St. Luke. Chapter 14. [Christ healeth the dropsy on the sabbath: teacheth humlity: to feast the poor: under the parable of the great supper, sheweth how worldly minded men, who contemn the word of God, shall be shut out of heaven. Those who will be his disciples, to bear their cross must make their accounts aforehand, lest with shame they revolt from him afterward, and become altogether unprofitable, like salt that hath lost his savour.]

विश्रामवासरे भोक्तुमेकदा यीशुमागतम् ।
फरोशिनोऽन्ववेक्षन्त गृहे मुख्यस्य कस्यचित् ॥ १ ॥
उदकोदरिणं कंचित्तदा वीक्ष्याग्रतः स्थितम् ।
फरोशिनो विधिज्ञांश्च पृष्टवान् परमात्मजः ॥ २ ॥
अविधेयं किमारोग्यं नृणां विश्रामवासरे ।
ते तस्य वचनं श्रुत्वा तूष्णीमवलम्बिरे ॥ ३ ॥
स ततो रोगिणं स्पृष्ट्वा तं चकार निरामयम् ।
विससर्ज च तं हृष्टं तांश्चेदं वाक्यमब्रवीत् ॥ ४ ॥
विद्यते भवतां मध्ये किमेवंविधमानवः ।
यः श्वभ्रे पतितं पुत्रं गां वा विश्रामवासरे ॥
नोद्धरेच्चिरमुत्क्रोशो धर्मसाध्वसशङ्कितः ।
त एतद्वाक्यमाकर्ण्य न किंचिद्ददुरुत्तरम् ॥ ५ ॥
ततो निमन्त्रितान्वीक्ष्योपविष्टानुत्तमासने ।
जनानुवाच दृष्टान्तं कुशलः परमात्मजः ॥ ६ ॥
यूयमामन्त्रणं लब्ध्वा शुभे परिणयोत्सवे ।
मैवोपविशत क्वापि कदाचिदुत्तमासने ॥ ७ ॥
अन्यथाभ्यागतं दृष्ट्वा भवद्भ्योऽपि सुपूजितम् ।
सलज्जं भवतोऽध्यक्षो नेष्यत्यवरमासनम् ॥ ८ ॥
तस्मात्तत्रोपवेष्टव्यं भवद्भिरवरासने ।
तस्माच्च भवतो नेष्यत्यध्यक्षः प्रवरासनम् ॥ ९ ॥

भवतां कर्म्मणानेन गौरवं परमं भवेत् ।
सन्नतिर्हि सदाख्याति महा-सम्मानयोग्यताम् ॥ १० ॥
अथामन्त्रणकर्त्तारमुवाच परमात्मजः ।
प्रात्ह्निके नैशभोज्ये वा भोजनार्थं कदाचन ॥
स्वभ्रातृन् स्वजनान् बन्धुनथवा धनिनो जनान् ।
मा निमन्त्रय भद्र त्वं तत्प्रत्यर्पणशङ्कितः ॥ ११ ॥
किन्तु भोजय हीनाङ्गानन्धान् वा दुःखिताञ्जनान् ।
येभ्यः प्रत्यर्पणं नस्यात् स्यात् शं च पुनरुत्थितौ ॥ १२ ॥
निशम्यैताः कथाः सर्व्वा भोक्तृणां कश्चिदब्रवीत् ।
धन्यः स यो विभो राजेश भच्यभागी भविष्यति ॥ १३ ॥
योशुस्तमब्रवीत् कश्चित् कल्पयित्वा महाशनम् ।
बहून्निमन्त्रयामास जनानतिथिवत्सलः ॥ १४ ॥
प्राप्ते भोजनकालेऽथ स निमन्त्रणतत्त्ववित् ।
समाह्वानाय भोक्तृणां दासान् विश्वान् समादिशत् ॥ १५
ते दुष्टमतयः किन्तु न केऽपि भोक्तुमागताः ।
सर्व्वेऽवतारयामासुः स्वस्वहेतुमनागतौ ॥ १६ ॥
एतच्छ्रुत्वा प्रभुः क्रुद्धः स्वदासमिदमादिशत् ।
याहि त्वमन्धखञ्जादीनिह सत्वरमानय ॥ १७ ॥
तथा कृत्वावशिष्टानि स स्थानानि न्यवेदयत् ।
प्रभुस्तं पुनरेवाह याहि सर्व्वत्र सत्वरम् ॥ १८ ॥
संगृहीतै र्जनै र्यत्नात् कुरु पूर्णं गृहं मम ।
नचते मम भोज्यार्हाः पूर्व्वमामन्त्रिता नराः ॥ १९ ॥
एकदा योशुरालोक्यानुगतान् मानवान् बहून् ।
तानिदं कथयामास तत्त्ववित् परमात्मजः ॥ २० ॥
मदीयं यदि शिष्यत्वं कश्चिद् ग्रहीतुमिच्छति ।
स भवेन्मद्गतप्राणस्त्यक्तसर्व्वपरिग्रहः ॥ २१ ॥
नानुगच्छति यो मां वा क्रुशं स्वस्य स्वयं वहन् ।
स नरो मम शिष्यत्वं न गृह्णाति कदाचन ॥ २२ ॥

अविचिन्त्यात्मनः शक्तिं कर्म्मसिद्धानुसारिणीम् ।
गृहमुच्चं विनिर्म्मातुं को नरो यत्नवान् भवेत् ॥ २३ ॥
स्थापयित्वान्यथा भित्तिं गृहं चेन्न समापयेत् ।
तं नरं दर्शकाः सर्व्वे वक्ष्यन्त्यदूरदर्शिनम् ॥ २४ ॥
योद्धुमिच्छेत् सहान्येन नृपेण नृपतिर्यदि ।
स किं न चिन्तयेच्छक्तिमात्मनश्च परस्य च ॥ २५ ॥
अथ चेदात्मदौर्व्वल्यं सोऽवेक्षेत विचारतः ।
प्रार्थयेद्दूरतः सन्धिं प्रहित्य दूतमात्मनः ॥ २६ ॥
तथैव मम शिष्यत्वं न काम्यं विषयैषिणा ।
विस्वादं लवणं कश्चिन्नहि स्वादयितुं क्षमः ॥ २७ ॥
न भूम्यर्थं न साराथं लवणं तत् प्रयुज्यते ।
क्षिप्यते तद्बहिस्त्वेतच्छ्रूयतां श्रुतिमज्जनैः ॥ २८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमल्लूकभाषितख्रीष्टोपनिषदि चतुर्द्दशोऽध्यायः ।

## पञ्चदशोऽध्यायः

St. Luke. Chapter. 15. [ The parable of the lost sheep of the Piece of Silver : of the prodigal son. ]

अथ यीशोर्वचः श्रोतुं तस्य सन्निधिमागतान् ।
करसंग्राहकान् दृष्ट्वा समालोक्य च पापिनः ॥ १ ।
"भुङ्क्तेऽयं पापिभिः सार्द्धं दयते पापिनां नृणाम्" ।
इत्युक्त्वा तर्कयन्तिस्म सोपाध्यायाः फरीशिनः ॥ २ ॥
योयुस्मानाह युष्मासु शतमेषवतो यदि ।
कस्यचिद्वारितो मेष एकः प्रान्तरवर्त्तिनाम् ॥ ३ ॥
स तानूनशतं हित्वा किं नैकं परिमृग्यति ।
लब्ध्वा तं स्कन्धमारोप्य किमानन्दं न विन्दति ॥ ४ ॥

प्रतिवेशिन आहूय तां वार्त्तामथ वेदयन् ।
तेषां संजनयन् हर्षं किं स्वयञ्च न मोदते ॥ ५ ॥
तद्वदेको महापापी मनः संशोधयेद् यदि ।
स्वर्गराज्ये महानन्दो भविष्यति न संशयः ॥ ६ ॥
स्वाराज्यं येऽधिगच्छन्ति निजपुण्यैरकल्मषाः ।
तद्विधानां परित्राणे नानन्दस्तादृशो भवेत् ॥ ७ ॥
विद्यन्ते योषितो यस्याः पादमुद्रा दशाथवा ।
नान्विष्यति किमेकां सा हारितां पादमुद्रिकाम् ॥ ८ ॥
तां लब्ध्वात्यन्तमानन्दं वर्द्धयन्ती ततः परम् ।
नवाह्वयति किं तस्याः ससखीः प्रतिवासिनीः ॥ ९ ॥
तद्वत् कश्चिन्महापापी यदि संशोधयेन्मनः ।
ईशदूताः प्रमोदन्ते स्वर्गराज्ये न संशय ॥ १० ॥
स भूयः कथयामास जनान् दृष्टान्तवद् वचः ।
कस्यचिन्मानवस्यास्तां वयसा वृंहितौ सुतौ ॥ ११ ॥
द्वयोरात्मजयोर्मध्ये कनिष्ठस्याग्रहात् पिता ।
विबभाज धनं सर्व्वं यथान्यायं समं समम् ॥ १२ ॥
दूरदेशं समासाद्य कनिष्ठः सधनस्ततः ।
व्ययं चक्रे धनं सर्व्वं परं लाम्पट्यमाश्रितः ॥ १३ ॥
ततः सञ्जातदुर्भिक्षे देशे तस्मिन् स मानवः ।
कस्यचित् आश्रयार्थं धनिनो गृहमाश्रितः ॥ १४ ॥
सच तं प्रेषयामास क्षेत्रे शूकरगुप्तये ।
वन्यमासतुषं भुक्त्वा स तत्र स्थातुमिष्टवान् ॥ १५ ॥
तच्चापि याचमानाय तस्मै कश्चिन्न दत्तवान् ।
ततो लब्धस्मृति भूयः पितुरन्तिकमागमत् ॥ १६ ॥
तं वीक्ष्य दूरतो दृष्ट्वा पिता तस्य दयान्वितः
कण्ठमालम्ब्य पुत्रस्य चुचुम्ब च मुहुर्मुहुः ॥ १७ ॥
तं तथा करुणाविष्टं पुत्रः पितरमब्रवीत् ।
कृतवानहमत्यर्थं पितः पापं तवाप्रियम् ॥ १८ ॥

तस्मात्त्वत्पुत्रनामार्हो नैवाहमस्मि साम्प्रतम् ।
सहृद्यं तव भृत्येन पित मां कर्त्तुमर्हसि ॥ १९ ॥
पिता तस्य वचः श्रुत्वा स्वदासानिदमब्रवीत् ।
इमं सर्व्वोत्तमं वासः परिधापयताचिरात् ॥ २० ॥
अङ्गुरीयकमङ्गुल्यां पादुके दत्त पादयोः ।
गोवत्सं हृष्टपुष्टाङ्गमालभध्वं यथाविधि ॥ २१ ॥
कल्पन्तां तस्य मांसानि सानन्दभोजनाय च ।
यतोऽयमागतः पुत्रो मम पञ्चत्वमागतः ॥ २२ ॥
ततः प्रववृते हर्षः पुत्रागतिनिमित्तजः ।
ज्येष्ठपुत्रस्तमाकर्ण्य पृष्टवान् प्रतिवेशिनः ॥ २३ ॥
किमर्थमुत्थितः शब्दो हर्षजो मीमकालये ।
ते प्रत्यागमनं तस्य सोदरस्य न्यवेदयन् ॥ २४ ॥
हृष्टपुष्टाङ्गगोवत्सालम्भनं भोजनं तथा ।
ज्येष्ठपुत्रः समाकर्ण्य परं कोपमुपागतः ॥ २५ ॥
तच्छ्रुत्वा वहिरागत्य पिता तं परिसान्त्वयन् ।
गृहं गन्तुमनिच्छन्तं सस्नेहं प्रत्यबोधयत् ॥ २६ ॥
स किन्तु कथयामास पितरेतावतीः समाः ।
त्वामहं यत्नतः सेवे तवाज्ञां प्रतिपालयन् ॥ २७ ॥
तथापि नाददा मह्यमपि छागस्य शावकम् ।
अवधीस्त्व सुगोवत्सं दुःशीलपुत्रभुक्तये ॥ २८ ॥
पिता तमाह वत्स त्वं सहायोऽसि सदा मम ।
इदं मम धनं सर्व्वं तवास्ति नात्र संशयः ॥ २९ ॥
अयं तु सोदरो वत्स तव पञ्चत्वमागतः ।
पुनः प्रत्यागतो गेहं तस्माद्धर्षो न निष्फलः ॥ ३० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्नुग्भाषित ख्रीष्टोपनिषदि पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः

St. Luke. Chapter. 16. [ The parable of the unjust steward. Christ reproveth the hypocrisy of the covetous pharisees. The rich glutton, and Lazarus the beggar. ]

भूय एव महाभागो यीशुः शिष्यान् वचोऽब्रवीत् ।
आसीत् कश्चिद्धनाध्यक्षः कस्यचिद्धनशालिनः ॥ १ ॥
धनी जनमुखाच्छ्रुत्वा धनाध्यक्षापयं स्वयम् ।
आजुहाव धनाध्यक्षमिमां वाचमुवाच च ॥ २ ॥
"त्वयापचीयते वित्तं ममे"ति श्रुतवानहम् ।
मद्धिसगणनां देहि नेह स्थातुं च शक्ष्यसि ॥ ३ ॥
प्रभोस्तदं वचनं श्रुत्वा वृत्तिनाशभयाकुलः ।
कार्य्यान्तराक्षमो धीरो मनसेदमचिन्तयत् ॥ ४ ॥
खनितुं नास्ति मे शक्ति लंज्जेऽहमपि भिक्षितुम् ।
तत् कर्माहं करिष्यामि मां गृह्णाति यथा जनः ॥ ५ ॥
ततः प्रत्येकमाहूय सोऽधमर्णं निजप्रभोः ।
"कति धारयसी"त्येवं पृष्टवान् प्रथमं जनम् ॥ ६ ॥
तैलद्रोणशतं धीमन् स्वामिने धारयाम्यहम् ।
इत्युक्तवन्तमध्यक्षो भूयस्तं वाक्यमब्रवीत् ॥ ७ ॥
ऋणपत्रं तव क्षिप्रमानयेह ममाज्ञया ।
विलोप्योल्लिखितं मानं तत्र पञ्चाशतं लिख ॥ ८ ॥
कति धारयसीत्येवं सोऽपरं पृष्टवानथ ।
गोधूमस्य शतद्रोणं धारयामीति सोऽब्रवीत् ॥ ९ ॥
तस्य तद्वचनं श्रुत्वा धनाध्यक्षस्तमब्रवीत् ।
ऋणपत्रे त्वदीये त्वमशीतिं त्वरया लिख ॥ १० ॥
बुद्धिमन्तं ततोवीक्ष्य प्रभुरन्यायतत्परम् ।
प्रशशंस धनाध्यक्षं वसुमाननये रतम् ॥ ११ ॥
वस्तुतस्तु समीक्ष्यन्ते स्वजात्युत्कर्षसिद्धये ।
जगदीशानुगामिभ्यो लौकिका बुद्धिमत्तराः ॥ १२ ॥

अतो मद्वचनाद् यूयमवास्तविकसम्पदा ।
लभध्वमात्ममित्राणि यानि पास्यन्ति दुर्द्दिने ॥ १३ ॥

विश्वस्तो यो भवेत् स्वल्पे प्रभूतेऽपि स तादृशः ।
अतात्त्विको लघिष्ठे य स्तादृशः स महत्तमे ॥ १४ ॥

अतो यूयमविश्वस्ता अयथार्थे धने यदि ।
यथार्थं धनमानीय तर्हि को वः प्रदास्यति ॥ १५ ॥

यदि यूयमविश्वस्ता स्तथैवापरवस्तुनि ।
युष्मदीयं धनं तर्हि युष्मभ्यं कः प्रदास्यति ॥ १६ ॥

दास्यं कर्त्तुं द्वयो र्भर्त्रो र्न शक्नोत्येकसेवकः ।
एकस्मिंस्तस्य विद्वेषः प्रेमान्यस्मिन् भविष्यति ॥ १७ ॥

अनुरक्तिविरक्तिभ्यां निष्ठा स्यात्तस्य चञ्चला ।
तस्माद्धनेशयो र्भक्ति र्नैककाला विधास्यते ॥ १८ ॥

अथ तस्य मुखाच्छ्रुत्वा धनस्यापुरुषार्थताम् ।
हसन्तिस्मार्थसर्व्वस्वाः समवेताः फरीशिनः ॥ १९ ॥

यीशुस्तानाह"मन्यन्ते भवन्तो धर्म्मतत्परान् ।
स्वानेव"परमात्मातु जानाति भवतां मनः ॥ २० ॥

अमृतं यद् विजानाति मानवा वस्तु लौकिकम् ।
जघन्यं तद्विजानाति परमात्मा सनातनः ॥ २१ ॥

आज्ञा विधिव्यवस्थाश्च योहनान्ता निदर्शिताः ।
घोष्यन्त ईशसंवादास्तस्मात्तज्जन्मकालतः ॥ २२ ॥

नरास्तत्कालतः स्वर्गं विशन्त्यविधिपूर्व्वकम् ।
किन्त्वाप्तवचसो लोपो लयेऽपि न भविष्यति ॥ २३ ॥

यः स्वभार्य्यां परित्यज्य स्त्रियमन्यां समुद्वहेत् ।
उद्वहेद्वा परित्यक्तां व्यभिचारी सचाधमः ॥ २४ ॥

आसीत् कश्चित् क्वचिद्देशे महार्हवसनो धनी ।
विविधानुत्तमान् भोगान् स सानन्दमसेवत ॥ २५ ॥

आसीत्तस्य गृहद्वारे लासारो नाम याचकः ।
तस्यासीन्निखिलो देहः क्षतरोगेण पीड़ितः ॥ २६ ॥

धनिनश्चानि भक्ष्याणि स सदा भोक्तुमिष्टवान् ।
तत्क्षतानि लिहन्तिस्म श्वानोऽप्यमेध्यभक्षकाः ॥ २७ ॥

ततः कालवशं प्राप्य स दुःखी मानवो मृतः ।
अब्राहामाङ्कमानिन्युस्तं दूताः स्वर्गवासिनः ॥ २८ ॥

अथ कालवशं प्राप्य मृतः स धनवानपि ।
निदधुस्तं शवागारे यथाकालं सुहृज्जनाः ॥ २९ ॥

ततः स नरकं प्राप्तोऽब्राहामाङ्के सुसंस्थितम् ।
लासारं स्वर्गतं दृष्ट्वाऽब्रूताब्राहाममुच्चकैः ॥ ३० ॥

अब्राहाम पितः पाहि भुञ्जेऽहं वह्नियातनाम् ।
तूर्णं प्रहिणु लासारं स मे शान्तिं प्रयच्छतु ॥ ३१ ॥

तस्य तद्रोदनं श्रुत्वाऽब्राहाम इदमब्रवीत् ।
अभजस्त्वं सुखं जीवन् लासारो दुःखमाप्तवान् ॥ ३२ ॥

लासारः स्वर्गमागत्य सान्त्वनां लभतेऽधुना ।
त्वमिदानीं महद्दुःखं सहसे नरकागतः ॥ ३३ ॥

इदानीमावयो र्मध्ये खमस्ति महदन्तरम् ।
यदनन्तं निराधारमुभाभ्यामेव दुस्तरम् ॥ ३४ ॥

न शक्तः स्वर्गमायातुमात्मा नरकसंस्थितः ।
स्वर्गस्थो नरकं यातुं नहि शक्नोति कश्चन ॥ ३५ ॥

इति श्रुत्वा वचस्तस्य स ततः पुनरुक्तवान् ।
प्रहिणु त्वं पितस्तर्हि तं मे पितृगृहं प्रति ॥ ३६ ॥

तत्र मे जीविताः पञ्च निवसन्ति सहोदराः ।
स तान् वदतु नायान्तु यथा ते नरकार्णवम् ॥ ३७ ॥

अब्राहमस्तु नेत्याह तत्रास्ति मोशिराक्षवान् ।
आमाश्च बहवः सन्ति तेषां शृण्वन्तु ते वचः ॥ ३८ ।

तन्नैवमिति सोऽब्रूत मृतमध्यात् समुत्थित: ।
यदि कश्चिद् व्रजेत्तत्र मनस्तेषां विशोत्स्यति ॥ ३९ ॥
अब्राहामोऽब्रवीत्तेषामश्रवामस्युतौ यदि ।
नैव श्रद्धा भवेत्तेषां मृतोत्थितवच:स्वपि ॥ ४० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गलभाषित-ख्रीष्टोपनिषदि षोड़शोऽध्याय: ।

## सप्तदशोऽध्याय:

St. Luke. Chapter 17. [ Christ teacheth to avoid occasions of offence. One to forgive another. The power of faith. How we are bound to God, and not he to us. He healeth ten lepers. Of the kingdom of God, and the coming of the Son of man. ]

भूयोऽपि कथयामास यीशु: शिष्यानिदं वच: ।
अवश्यमापतेद्विघ्नस्तन्तु धिग् विघ्नकारिणम् ॥ १ ॥
लघिष्ठं मम भक्तेषु यश्चैकमपि बाधते ।
स गले पेषणीं बद्धा निमज्जतु महार्णवे ॥ २ ॥
भ्रातरो भर्त्सनीया: स्यु: स्वविरुद्धा: सुयुक्तिभि: ।
महत्स्वप्यपराधेषु क्षम्या अनुनयान्विता: ॥ ३ ॥
दिवसे सप्तकृत्वोऽपि स कृत्वा चेत्तवाप्रियम् ।
सप्तधा याचते क्षान्तिं तं क्षमस्वाविशङ्कित: ॥ ४ ॥
स्वविश्वासविवृद्धयर्थं तमूचु: प्रेरिता यदा ।
यीशुर्विश्वासमाहात्म्यमिदं तेभ्योऽब्रवीत्तदा ॥ ५ ॥
युष्माकं यदि विश्वासो भवेत् सर्षपकोपम: ।
उदुम्बरतरुं नेतुं शक्ष्यथोदधिमाज्ञया ॥ ६ ॥
हलकर्षणकर्मान्ते प्रविश्य भवनं प्रभो: ।
यथा न धन्यवादार्ह: स्याद्भृत्यो गृहकर्मकृत् ॥ ७ ॥

तथाऽभिहितकर्म्माणि कुर्व्वन्निरफलेपिभिः।
वर्त्तितव्यं सदा लोके भवद्भि र्भावितात्मभिः॥ ८॥
प्रयास्यन् यिरुशालेमं गालील-शमरीययोः।
मध्येन यीशुरभ्येत्य कंचिद् ग्रामं प्रविष्टवान्॥ ९॥
तत्रापश्यत् स्थितानार्त्तानग्रतो दश कुष्ठिनः।
उच्चै र्विक्रोशतो दूरात् परित्राह्येति वादिनः॥ १०॥
आरोग्यं याचमानांस्तानभिवीक्ष्य परात्मजः।
प्रेषयामास तान् सर्व्वान् धर्म्मयाजकसन्निधौ॥ ११॥
ते सर्व्वे पथि गच्छन्तः सुस्थास्तस्य प्रभावतः
तेष्वेकः पुनरागत्य ननामेश्वरनन्दनम्॥ १२॥
शमरीयमभिज्ञाय यीशुस्तमिदमुक्तवान्।
शुचीभूताः क्व वर्त्तन्ते सङ्गिनस्ते नवापरे॥ १३॥
कथं ते नागताः स्तोतुं महिमानं परात्मनः।
त्वामेवायत भक्तिस्ते कल्याण्यव्यभिचारिणी॥ १४॥
अथ तं परिपप्रच्छुः समवेताः फरीशिनः।
भगवन् स्वर्गसाम्राज्यं कस्मिन् कालेऽभ्युपैष्यति॥ १५
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत्।
नायाति स्वर्गसाम्राज्यं धृत्वा सुलौकिकं वपुः॥ १६॥
"स्वर्गोऽत्र तत्र वा" कश्चिन्मानवो न वदिष्यति।
स्वाराज्यं भवतामेव हृद्ग्राममधितिष्ठति॥ १७॥
ततः शिष्यान् समाहूय स वाक्यमिदमब्रवीत्।
ख्रीष्टाविर्भावकालस्य तत्त्वं निर्णेतुमिच्छताम्॥
भविष्यत्यन्यदुर्व्वारा विभ्रान्ति र्भवतामपि।
ब्रवीम्यहमभिज्ञानमेतस्मादेव कारणात्॥ १८॥
ख्रीष्टोऽत्र तत्र वा कश्चिदबुधो व्याहरेद् यदि।
न तस्य वचने श्रद्धा विधातव्या कदाचन॥ १९॥
यथैकस्या दिशो व्योम्नस्तडिज्ज्योतिः समुत्थितम्।
उद्भासयति तेजोभिः समस्तं व्योममण्डलम्॥ २०॥

तथा मनुष्यपुत्रोऽपि नरलोकं समागतः ।
इदं चराचरं विश्वं ध्रुवमुद्भ्रामयिष्यति ॥ २१ ॥
किन्त्वग्रे बहुदुःखानि भोक्ष्यते मानवात्मजः ।
ध्रुवं निराकरिष्यन्ति तमर्व्वाचीनमानवाः ॥ २२ ॥
नोहस्य समये नोहो यावन्न पोतमाविशत् ।
मानवाः स्वस्वकर्म्माणि तावच्चक्रुरतन्द्रिताः ॥ २३ ॥
तस्मिन्काले यथाकस्मात् सलिलप्लावनं महत् ।
आगत्य प्लावयामास विषयामक्तमानसान् ॥ २४ ॥
यथा वा गृहकर्म्माणि यथास्वं कुर्व्वतो जनान् ।
सदोमतः शरण्यस्य लोटस्य निर्गतेः परम् ॥
अन्तरिक्षात् समुद्भूतौ जघ्नतु र्वह्निगन्धकौ ॥ २५ ॥
तथा मनुष्यपुत्रस्य जगत्यागमनं भवेत् ॥ २६ ॥
न कश्चिदध आगच्छेत् काले तस्मिन् सुदारुणे ।
गृहस्थद्रव्यमादातुं गृहाद्दूरमवस्थितः ॥ २७ ॥
न परावर्त्ततां पश्चात् क्षेत्रकर्म्मरतो जनः ।
स्मरताऽचलचित्तेन लोटस्य सहधर्म्मिणीम् ॥ २८ ॥
प्राणेषु वासना यस्य स प्राणान् परिहास्यति ।
प्राणेभ्यो न वियुज्येत मदर्थं त्यक्तजीवितः ॥ २९ ॥
तदा मानवयो रात्र्यां शय्यामधिशयानयोः ।
एक एवानुगृह्येत त्यज्येत सर्व्वथापरः ॥ ३० ॥
स्त्रियोरपि द्वयोर्मध्ये पेषणीविनियुक्तयोः ।
एका गृह्येत कल्याणी परिवर्ज्येत चापरा ॥ ३१ ॥
मनुष्ययोस्तदा शस्यक्षेत्रसंस्थितयो र्द्वयोः ।
एक एवानुगृह्येत त्यज्येत सर्व्वथापरः ॥ ३२ ॥
कुत्रेति परिपप्रच्छुरथ ते संशयान्विताः ।
स प्राह कुणपो यत्र गृध्रास्तत्र समेष्यति ॥ ३३ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मनुष्यपुत्रभाषितश्लोकोपनिषदि सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः

St. Luke, Chapter 18. [Of the importunate widow. Of the Pharisee and the publican. Children brought to Christ. A ruler that would follow christ, but is hindered by his riches. The reward of them that leave all for his sake. He foresheweth his death, and restoreth a blind man to his sight.]

अथ "ध्यानं सदा कार्य्यं जनेन हर्षपूर्व्वकम्।"
इत्यस्मिन् विषये तेभ्यो यीशु र्दृष्टान्तमब्रवीत्॥ १॥
क्वचिदासीत् पुरे कश्चित् प्राड्विवाको निरीश्वरः।
सोऽभिमानं समाश्रित्य न मेने मानवानपि॥ २॥
एकदा विधवा काचिदागत्य तस्य सन्निधिम्।
इदमुक्तवती "धीमन् विपक्षः प्रबलो मम॥ ३॥
तेषां दुर्ज्जनता नित्यं शान्तिं मे प्रतिबाधते।
भवान्न्यायप्रयोगेण मां परित्रातुमर्हति॥" ४॥
तन्निशम्य कियत्कालं न स तत्र मनो दधे।
ततः स्वतोषमाहृत्य मनसेदमचिन्तयत्॥ ५॥
ईश्वरान्मानवांश्चैव न यद्यपि बिभेम्यहम्।
तथापि वाक्यमेतस्याः करिष्येऽहं स्वशान्तये॥ ६॥
अन्यथेयं समागत्य प्रत्यहं मम सन्निधौ।
नाशयेन्मामकं धैर्य्यं वाक्येन हृदयच्छिदा॥ ७॥
कश्चिदेतच्छ्रुतं वाक्यं प्राड्विवाकाभिभाषितम्।
किमनेन नयेनापीश्वरो भक्तान्न तोक्ष्यति॥ ८॥
सहिष्णुरीश्वरः सत्यं किन्त्वसौ भक्तवत्सलः।
न तद्भक्ता विनश्यन्ति सत्यमेतद् ब्रवीम्यहम्॥ ९॥
किन्तु पुत्रो मनुष्याणां यदा मर्त्त्यं समेष्यति।
इह लोके मनुष्याणां किं विश्वासमवाप्स्यति॥ १०॥
स ततो धार्म्मिकम्मन्यानपरानवजानतः।
कथयामास दृष्टान्तवचनं परमात्मजः॥ ११॥

एकदा द्वौ यथाम्नायमाराधयितुमीश्वरम्।
शुल्कादायी फरीशीच जग्मतु र्धर्ममन्दिरम्॥ १२ ॥

फरीश्याराधयन्नाह स्तौमि त्वां परमेश्वरम्।
यतोऽहं सदृशो नान्यैः परसत्त्वापहारिभिः॥ १३ ॥

अन्यायाचारिभि र्नैव तथा न व्यभिचारिभिः।
न शुल्कादायिनानेन सदृशः पापिनापि वा॥ १४ ॥

द्विकृत्वः प्रतिसप्ताहं अह्नयोपवसाम्यहम्।
दशमांशं ममायस्य धर्मार्थं प्रददाम्यहम्॥ १५ ॥

शुल्कादायीतु वक्षः स्वं ताड़यित्वा कृताञ्जलिः।
प्राहेश्वरस्त्व मामीश पापिनं शरणागतम्॥ १६ ॥

अनयो र्ध्यायतोः पुंसो र्नश्रेयान् प्रथमो जनः॥ १७ ॥

नरो हि निरहङ्कारः पदमुच्चं प्रयास्यति।
साहङ्कारो नरो यस्तु स यास्यत्यधमां गतिम्॥ १८ ॥

ततस्तत् पुरतः केचिच्छिशवः सौम्यदर्शनाः।
आनीता स्तत्प्रसादार्थमाशिषे च तथा विभोः॥ १९ ॥

शिष्या स्तान् भर्त्सयामासुः शिशून् दृष्ट्वा समागतान्।
यीशुस्तान् वारयित्वातु शिष्यान् वचनमब्रवीत्॥ २० ॥

आगच्छन्तु महाभागाः शिशवो मम सन्निधिम्।
ईदृशा हि प्रयास्यन्ति स्वर्गराज्यं सनातनम्॥ २१ ॥

न येषां लौकिकी निष्ठा शिशुवत्सरला भवेत्।
न प्राप्नुवन्ति ते स्वर्गं सत्यमेतद् ब्रवीम्यहम्॥ २२ ॥

अथाधयक्षोऽब्रवीत् कश्चिद् यीशोरन्तिकमागतः।
अनन्तजीवनं लप्स्ये कर्म्मणा केन सद्गुरो॥ २३ ॥

यीशुस्तमब्रवीद् भद्र सन्तं वदसि मां कथम्।
सन् सौम्य एक एवास्ति तं विद्धि परमेश्वरम्॥ २४ ॥

नरहत्यां न कुर्य्यास्त्वं व्यभिचारं च मा कुरु।
न कदाचित् कुरु स्तेयं मिथ्यासाक्ष्यञ्च मा वद॥ २५ ॥

पूजयेः पितरौ नित्यं कुटुम्बान् पश्य चात्मवत् ।
आदेशान् प्रतिताल्यैतानक्षयं स्वर्गमाप्नुहि ॥ २६ ॥
सोऽब्रवीत् सर्व्वमेवैतत् सर्व्वथानुष्ठितं मया ।
यीशुः प्राह दरिद्रेभ्यः सर्व्वं स्वं तर्हि दीयताम् ॥ २७ ॥
तथा कृते धनं स्वर्गे प्रभूतमर्ज्जयिष्यसि ।
त्यक्त्वा च स्वजनान् सर्व्वान् मामकं शरणं व्रज ॥ २८ ॥
श्रुत्वेदं वचनं सर्व्वं स नरोऽतीव दुःखितः ।
धनासक्तमना स्तस्मात् स्थानात्तूर्णं विनिर्ययौ ॥ २९ ॥
ततस्तं प्रस्थितं वीच्य स्वशिष्यान् यीशुरब्रवीत् ।
धनिनां दुर्लभः स्वर्गः सत्यमेतद् ब्रवीम्यहम् ॥ ३० ॥
उष्ट्राणां सूचिकारन्ध्रे प्रवेशः सुकरो वरम् ।
धनिनां दुर्लभः स्वर्गः सत्यमेतद् ब्रवीम्यहम् ॥ ३१ ॥
आश्चर्य्यवदिदं श्रुत्वा जना स्तमिदमब्रुवन् ।
तर्हि केषां परित्राणं भवेत्तद् ब्रूहि नः प्रभो ॥ ३२ ॥
सोऽवदत्तन्मनुष्याणां दुष्प्रापं नात्र संशयः ।
तथापि सुलभं तत् स्यादीश्वरस्य प्रसादतः ॥ ३३ ॥
श्रुत्वेदं वचनं पित्रो बभाषे विनयान्वितः ।
त्वदर्थे त्यजतां सर्व्वमस्माकं का गति र्भवेत् ॥ ३४ ॥
यीशुस्तमुत्तरं प्राह स्वजनान् पितरौ सुतम् ।
स्त्रियं गेहं तथा भ्रातृनीश्वरार्थे त्यजन्ति ये ॥
ते तद्बहुगुणं लब्ध्वा शुभमत्रैव जन्मनि ।
परिणामे प्रपत्स्यन्ते निःश्रेयसमकल्मषाः ॥ ३५ ॥
अथ द्वादशभिः शिष्यै र्यिरुशालेममात्मवान् ।
गन्तुकामोऽवदच्छिष्यान् पथीदं रहसि स्थितः ॥ ३६ ॥
मानवात्मजमुद्दिश्य यदार्षै र्लिखितं वचः ।
अचिरेणैव कालेन प्रत्यक्षं तद्भविष्यति ॥ ३७ ॥
स हस्ते परजातीनामवश्यमर्पितो भवेत् ।
निहतः स्यात्ततः क्रूरैः कशाघातादिपीड़या ॥ ३८ ॥

उत्थास्यति स्वयं मृत्यो स्तृतीयेऽह्नि सचात्मवान् ।
यीशोरेतद् वचः सर्व्वं तच्छ्रुत्वा बोद्धुमक्षमाः ॥ ३८ ॥
यिरीहोरन्तिकं प्राप्ते सशिष्येऽथ परात्मजे ।
श्रुत्वा जनरवं कश्चिदन्धः किमिति पृष्टवान् ॥ ४० ॥
ततो जनमुखाच्छ्रुत्वा यीशोरागमनं प्रभोः ।
यायूदसन्तते पाहि मामित्युच्चैः स उक्तवान् ॥ ४१ ॥
मौनी भव त्वमित्याहु स्तन्निरग्र्याग्रगामिनः ।
उच्चकैः स पुनः प्राह नेत्रहीनं दयस्व माम् ॥ ४२ ॥
यीशुस्तदा स्थितस्तत्र तमिदं वाक्यमब्रवीत् ।
किमहं ते करिष्यामि किं वा त्वमभिवाञ्छसि ॥ ४३ ।
यीशोस्तद् वचनं श्रुत्वा स इदं वाक्यमब्रवीत् ।
प्रभो दृष्टिप्रदानेन मामन्धमनुकम्पय ॥ ४४ ॥
यीशुस्तमाह दृक्शक्तिं विश्वासात्त्वमवाप्नुहि ।
स तद्वाक्याच्छुभां दृष्टिं लब्ध्वा तमनुयातवान् ॥ ४५ ॥
अद्भुतं कर्म्म तद्दृष्ट्वा मानवा स्तत्र संस्थिताः ।
तुष्टुवु र्धन्यवादेन परमात्मानमव्ययम् ॥ ४६ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्भगवद्भाषित ख्रीष्टोपनिषदि अष्टादशोऽध्यायः ।

## ऊनविंशोऽध्यायः

St. Luke. Chapter 19. [Of Zacchæus a publican. The ten pieces of money. Christ rideth into Jerusalem with triumph : weepeth over it, driveth the buyers and sellers out of the temple : teaching daily in it. The rulers would have destroyed him, but for fear of the people. ]

यीशुं यिरीहुमध्येन गच्छन्तं तत ईक्षितुम् ।
शुल्कादायी धनी कश्चित् सक्केयाख्योऽभ्युपाययौ ॥ १ ॥

आरुह्य खर्व्वं देहत्वादुदुम्बरमहीरुहम् ।
स्थितस्तत्र प्रतीच्यासौ यीशुं तत्पथगामिनम् ॥ २ ॥
ततस्तं देशमभेत्य यीशुरूर्द्ध्वं निरीच्यच ।
प्राह्लाध एहि सक्केय: स्थास्याम्यद्य गृहे तव ॥ ३ ॥
यीशोरादेशत: च्चिप्रमवरुह्य स पादपात् ।
सानन्दमभिजग्राह तं भक्त्यातिथिवत्सल: ॥ ४ ॥
तदालोक्य जना: सर्व्वे तर्कयन्त: परस्परम् ।
अनिन्दन् रजनीवासं यीशो: पापिनिकेतने ॥ ५ ॥
सक्केयस्तु तदा स्थित्वा परमात्मजमब्रवीत् ।
प्रभो मम धनस्यार्द्धं दरिद्रेभ्यो ददाम्यहम् ॥ ६ ॥
यदिवाऽन्यस्य यत् किञ्चिदन्यायेनाहृतं मया ।
द्रव्यं चतुर्गुणं तस्य ध्रुवं प्रत्यर्पयाम्यहम् ॥ ७ ॥
तस्य तद्वचनं श्रुत्वा यीशुस्तमिदमब्रवीत् ।
तवाद्य भवने साधो परित्राणमुपस्थितम् ॥ ८ ॥
भद्राब्राहामसन्तानं त्वामवैमि न संशय: ॥ ९ ॥
हारितानहमन्वेष्टुमागतो धरणीतले ।
परित्राणं ह्यवाप्स्यन्ति ते ममान्तिकमागता: ॥ १० ॥
ततश्चाभ्यागते ख्रीष्टे यिरुशालेमसन्निधिम् ।
मेनिरे तद्वचोऽभिज्ञा भास्यतीशोऽचिरादिति ॥ ११ ॥
यीशुस्तेषामभिप्रायं ज्ञात्वा परमतत्त्ववित् ।
कथयामास दृष्टान्तवचनं परमात्मज: ॥ १२ ॥
विन्यस्य दशभृत्येषु धनानि धनवृद्धये ।
दूरदेशं गत: कश्चिद्राज्यार्थं प्रशिमान्वर: ॥ १३ ॥
स्वप्रजानां विरोधेऽपि स लब्ध्वा नृपते: पदम् ।
मानं लाभस्य पप्रच्छ स्वदासान् देशमागत: ॥ १४ ॥
आद्यो न्यवेदयल्लाभं द्विगुणं दशरूप्यकै: ।
चक्रे दशपुराध्यक्षं राजा तं बहुमानत: ॥ १५ ॥

न्यवेदयद् द्वितीयोऽपि द्विगुणं पञ्चरूप्यकैः।
राजा पञ्चपुराध्यक्षं चक्रे तं कृपयान्वितः॥ १६ ॥

अपरो दास आगत्य तद्देदं प्रभवेऽब्रवीत्।
तव मुद्रां गृहाण त्वं मया यत्नेन रक्षिताम्॥ १७ ॥

त्वत्तोऽहं सर्व्वदा भीतो निष्ठुरं हृदयं तव।
आदत्सेऽनिहितं द्रव्यमनुप्तमपि कृन्तसि॥ १८ ॥

प्रभुस्तस्य वचः श्रुत्वा वाक्यमुत्तरमब्रवीत्।
यद्येवं स्थापनीयासीत् सा मुद्रा वणिजां गृहे॥ १९ ॥

तथा सति मयागत्य परदेशाद् गृहे मम।
सा मुद्रा स्याद् ग्रहीतव्या कथञ्चिद् वृद्धिसंयुता॥ २० ॥

इत्युक्त्वा ग्राहयित्वासौ तां मुद्रामन्तिकस्थितैः।
तत्क्षणादर्पयामास दशरूप्यकभागिने॥ २१ ॥

ततोऽन्तिकस्थितान् दृष्ट्वा विस्मितांस्तेन कर्म्मणा।
नृपतिः कथयामास तेभ्यः स्वाभिष्टमुत्तरम्॥ २२ ॥

सञ्चयिभ्यः प्रदातव्यं स्थितस्यार्थस्य वृद्धये।
तस्मै किञ्चिन्नदातव्यं यस्य नास्तीह किञ्चन॥ २३ ॥

ग्राह्यं तदपि तेभ्यः स्याद् विद्यते यत्तदन्तिके।
ईदृशाश्च निहन्तव्या मद्राज्य-परिपन्थिनः॥ २४ ॥

यीशुस्ततोऽनुसंप्राप्तो यिरूशालेमसन्निधिम्।
आगतो वैत्फगीग्रामं स्थितं जैतुनपर्व्वते॥ २५ ॥

ततो द्वावादिशच्छिष्यौ प्राप्तकालमिदं वचः।
पुरोग्राममसुं तूर्णं युवां यातं ममाज्ञया॥ २६ ॥

तत्रैकं द्रक्ष्यथो बद्धं खरवत्समवाहकम्।
तं शीघ्रं बन्धनान्मुक्त्वानयतं मम सन्निधिम्॥ २७ ॥

यदि कश्चिद्वदेत् किञ्चिद् युवयोरत्र कर्म्मणि।
तं ब्रूतं विद्यतेऽनेन प्रभोः किञ्चित् प्रयोजनम्॥ २८ ॥

अथ शिष्यौ पुरोग्रामं संप्राप्य गुरुशासनात्।
आनीय गुरुनिर्दिष्टं तमेव खरशावकम् ॥
तस्य पृष्ठे स्ववस्त्राणि स्थापयित्वा ततः परम्।
श्रद्धया-परयोपेतौ स्थापयामासतुः प्रभुम् ॥ २९ ॥

ततस्तं प्रस्थितं दृष्ट्वा मानवाः पुरवासिनः।
तस्तरुः स्वस्ववस्त्राणि यीशोर्गं मनवर्त्मनि ॥ ३० ॥

अथोपस्थितमालोक्य तं जैतुननगान्तिके।
शिष्यास्तत् कर्म्म पश्यन्तः सानन्दमिदमब्रुवन् ॥ ३१ ॥

"स धन्यो नृपतिश्रेष्ठो विभो र्नाम्नाभ्युपैति यः।
स्वर्गे विराजतां शान्ति र्भूयाश्चमहिमोपरि ॥" ३२ ॥

जनमध्यात्तदोत्थाय केचिदूचुः फरीशिनः।
भगवन् भवतः शिष्यांस्तर्जयत्वनये रतान् ॥ ३३ ॥

यीशुस्तान् कथयामास सत्यमेव ब्रवीम्यहम्।
क्रोक्ष्यन्ति प्रस्तराः सर्व्वे अमी मौना भवन्ति चेत् ॥ ३४ ॥

नगरीनिकटस्थोऽथ स क्रन्दन् पुरमब्रवीत्।
त्वच्छान्तिजनकं वस्तु त्वया न विदितं कथम् ॥ ३५ ॥

तत्सर्व्वमधुना जातं प्रच्छन्नं तव दृष्टितः।
प्राकारं रचयिष्यन्ति काले तत्परितोऽरयः ॥ ३६ ॥

ततस्त्वां वेष्टयिष्यन्ति रोत्स्यन्ति च समन्ततः।
त्वच्छिशून्निहनिष्यन्ति त्वदन्तस्थांश्च देहिनः ॥ ३७ ॥

न पुरे शेषयिष्यन्ति प्रस्तरं प्रस्तरोपरि।
ईदृशैव गति सर्व्वा कार्य्यकालातिपातिनाम् ॥ ३८ ॥

अथधर्म्मगृहं तत्र प्रविश्य परमात्मजः।
वणिजो वहिरानीय तानिदं वाक्यमब्रवीत् ॥ ३९ ॥

"ईश्वराराधनायैव यद् गृहं केवलं स्मृतम्।
तदद्य खलु चौराणां गुहेव प्रतिभाति मे ॥" ४० ॥

इत्थं धर्म्मकथां धर्म्मगेहे स उपदिष्टवान् ।
तच्छ्रुत्वा तस्य नाशायायतन्त याजकादयः ॥ ४१ ॥
किन्तु ते निधनोपायं न निर्नेतुमशक्नुवन् ।
यत आमज्जनाः सर्व्वे तद्वाक्यश्रवणे रताः ॥ ४२ ॥
इति श्रीताराचरणचक्रवर्त्तिकर्त्तृसंग्रथितेन श्लोकैरुपनिबद्धायां श्रीमत्‌ग्भाषितख्रीष्टोपनिषदि ऊनविंशोऽध्यायः ।

## विंशोऽध्यायः

St. Luke. Chapter 20. [ Christ avoucheth his authority by a question of John's baptism. The parable of the vineyard. Of giving tribute to Cæsar. He convinceth the Sadducees that denied the resurrection. How Christ is the son of David. He warneth his disciples to beware of the scribes. ]

एकदा सत्कथां वक्तुं प्रवृत्ते परमात्मजे ।
मुख्ययाजकवृद्धाद्यास्तमाहु धर्म्ममन्दिरे ॥ १ ॥
त्वयैतत् क्रियते सर्व्वं कस्मात् सामर्थ्ययोगतः ।
कुतोवेतादृशी शक्तिस्त्वया लब्धा वदेति च ॥ २ ॥
स प्राह यूयमाख्यात योहनस्नापनं कुतः ।
स्वर्गतोऽभ्यागतं किन्तु मनुष्याद्वा भवद्विधात् ॥ ३ ॥
तस्य तद्वचनं श्रुत्वा तेऽभवन् संशयाकुलाः ।
स्वर्गं चेदनुमन्येरंस्तस्यावज्ञा भवेद्वृथा ॥ ४ ॥
लोकं चेदनुमन्येरन् लोकेभ्यः स्याद्भयं तु नो ।
लोके हि विविदुः सर्व्वे योहनं तत्त्वविद्वरम् ॥ ५ ॥
इत्येवं मनसि ध्यात्वा त ऊचुरात्मनोऽज्ञताम् ।
तर्हि नाहमपीवक्ष्यामि तद्वक्तुमिति सोऽब्रवीत् ॥ ६ ॥
समवेतांस्ततो वीक्ष्य जिज्ञासूनामनवान् बहून् ।
दृष्टान्तवचनं भूयः प्रोवाच परमात्मजः ॥ ७ ॥

करदेभ्यो नरः कश्चिद् द्राक्षोद्यानं समर्पयन् ।
दीर्घकालमवस्थातुं गतो देशान्तरं प्रति ॥ ८ ॥
अथासौ फलपाकस्य समये पुनरागतः ।
स्वदासं प्रेषयामास फलार्थं कृषकान्तिके ॥ ९ ॥
तं दासं व्यसृजन् सर्व्वे प्रहृत्य कृषका जनाः ।
इत्थमेव प्रजघ्नुस्ते दासावन्यौ क्रमागतौ ॥ १० ॥
ततः स प्रेषयामास सद्बुद्ध्या पुत्रमात्मनः ।
जघ्नुस्तमपि दुर्व्वृत्ता अधिकारिणमुत्तरम् ॥ ११ ॥
अतः परं ध्रुवं भर्त्ता कृषकांस्तान् हनिष्यति ।
द्राक्षाक्षेत्रंच साधुभ्यः कृषकेभ्यः प्रदास्यति ॥ १२ ॥
तस्य तद्वचनं श्रुत्वा मैवं स्यादिति तेऽब्रुवन् ।
योशुस्तानाह तर्हि तल्लिखितं विद्यते कथम् ॥ १३ ॥
"प्रस्तरोऽवज्ञया यस्तु शिल्पिभिर्गृहरूपेक्षितः ।
स एव गृहकोणेऽभूद्, गृहस्य मुख्यकुड्यकम् ॥ १४ ॥
भविष्यति स सम्भग्नो ग्राव्ण्यस्मिन् यः पतिष्यति ।
चूर्णयिष्यति तं ग्रावा यन्मूर्ध्न्येष पतिष्यति ॥" १५ ॥
उदाहरणमेतत्तानुद्दिश्य योशुरुक्तवान् ।
इत्यभिज्ञाय तं धर्त्तुं मैच्छन्नध्यापकादयः ॥ १६ ॥
किन्तु तत्समये वीक्ष्य तं जनैः परिवेष्टितम् ।
बभूवु र्विरताः सर्व्वे भीता लोकापवादतः ॥ १७ ॥
अथ ते प्रेषयामासुः साधुच्छद्मचराञ्जनान् ।
तद्वक्तृयोग्यदोषाणामाविष्काराय वाक्छलैः ॥ १८ ॥
ते गत्वोचुः प्रशस्ताभि र्भाषाभिरभिनन्द्य तम् ।
भगवन् ब्रूहि राजस्वं कैसोरोऽर्हति वा नवा ॥ १९ ॥
सोऽब्रवीन्न परीक्ष्योऽहं भवद्भि र्दुष्टमायया ।
यस्य नाम्नाङ्किता मुद्रा करस्तस्मै प्रदीयताम् ॥ २० ॥
कैसोरस्यच यत् प्राप्यं कैसोरस्तु तदर्हति ।
परमेशस्य यत् प्राप्यं तस्मै तद्दीयतां सदा ॥ २१ ॥

तस्य प्रत्युत्तरं श्रुत्वा राजभक्तिसमन्वितम् ।
तेऽक्षमा वाक्यपाशेन तं धर्त्तुं विस्मयं गताः ॥ २२
अथ सद्दूकिनोऽभेरत्यापुनरुत्थानवादिनः ।
प्रदर्श्य विणयाचारौ पप्रच्छुः परमात्मजम् ॥ २३ ॥
मोशिनाय समादिष्टो नियोगविषये विधिः ।
निरपत्यमृतजेष्ठभ्रातृपत्नीं सहोदरः ॥
स्वभ्रातुर्वंशवृद्ध्यर्थं नियुञ्ज्याद्दारकर्म्मणि ।
अस्त्यत्र संशयोऽस्माकं महांस्तस्यावधारणे ॥ २४ ॥
सप्तानां नोऽग्रजो भ्राता विवाहानन्तरं मृतः ।
अग्रहीद् वंशवृद्ध्यर्थं तत्स्त्रियं तस्यचानुजः ॥ २५ ॥
पूर्व्वं पूर्व्वं मृतेः पश्चादेवं कृत्वा परे परे ।
निरपत्याः मृताः सर्व्वे ततो नारी ममार सा ॥ २६ ॥
कस्यैषा पुनरुत्थाने भ्रातुः पत्नी भविष्यति ।
योशु स्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ २७ ॥
स्त्रीपुंसोरिहलोकेऽस्ति विवाहो विधिबोधितः ।
पुनरुत्थितदेहानामुद्वाहः श्रूयते नतु ॥ २८ ॥
म्रियन्ते नच ते तत्र स्वर्दूतैस्ते समा यतः ।
परमेशसुता स्तेच पुनरुत्थानभागिनः ॥ २९ ॥
मृतानां पुनरुत्थानं भगवान् मोशिरुक्तवान् ॥ ३० ॥
अब्राहामेश्वरं चैब्रमिस्हाकेशं च तत्त्ववित् ।
याकोबेशंच विज्ञाय यस्मान्मोशिरवर्णयत् ॥ ३१ ॥
ईश्वरो न परेतानामीशत्वानवगाहनात् ।
ईश्वराधीनजीवित्वात् सदा जीवन्ति जन्तवः ॥ ३२ ॥
अध्यापकास्तदा केचिदब्रुवन् परमात्मजम् ।
भो गुरो सत्यमेवोक्तं भवता तत्त्वदर्शिना ॥ ३३ ॥
ततः प्रभृति ते सर्व्वे योशुमुद्दिश्य किञ्चन ।
भूयो नोत्सेहिरे वक्तुं यत्तेषां मनसि स्थितम् ॥ ३४ ॥

अथ तान् कथयामास योशुस्तत्त्वविदां वरः ।
कथं दायूदसन्तानं खीष्टमाहु र्मणीषिणः ॥ ३५ ॥
दायूदः स्वयमेवाह प्रभुं तं गीतपुस्तके ।
"प्रभु र्मामप्रभुं प्राह तिष्ठ त्वं मम दक्षिणे ॥ ३६ ॥
यावन्नाहं करिष्यामि त्वच्छत्रून् स्वत्पदासनम् ।"
एतदुक्तिवशात् खीष्टो न दायूदात्मजो भवेत् ॥ ३७ ॥
जनानामथ सर्व्वेषां शृण्वतां योशुरब्रवीत् ।
शिष्यानुवाच शास्त्रिभ्यः सावधाना भवन्तु भो ॥ ३८ ॥
विहारमभिकाङ्क्षन्ति ते हि दीर्घपरिच्छदाः ।
धर्म्मगेहेषु वाञ्छन्ति जनानामभिनन्दनम् ॥ ३९ ॥
हट्टे भोज्येच सम्मानं श्रेष्ठस्थानासनानिच ।
मित्रच्छद्मचरा लोभाद् ग्रसन्ति विधवालयम् ॥ ४० ॥
सुदीर्घं प्रार्थयन्तेच च्छलतः परमेश्वरम् ।
एते घोरतरं दण्डं लप्स्यन्ते चरमे दिने ॥ ४१ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्भगभाषितखीष्टोपनिषदि विंशोऽध्यायः ।

## एकविंशोऽध्यायः

St. Luke. Chapter 21 [ Christ commendeth the poor widow. He foretelleth the destruction of the temple, and of the city Jerusalem: the signs also which shall be before the last day. He exhorteth them to be watchful. ]

ततः स धनिनोऽपश्यद्दूर्ध्वं प्रणिहितेक्षणः ।
मन्दिरस्य धनागारे स्वोपहारं प्रयच्छतः ॥ १ ॥
तस्मिन् कालेऽपिपश्यत्र विधवा काचिदागता ।
ऐकस्या स्ताम्रमुद्रायाः द्विपादांशं सुदुर्गता ॥ २ ॥
योशुस्तां सदयो वीक्ष्य स्वशिष्यानिदमब्रवीत् ।
दीनेयं विधवा नारी सर्व्वेभ्योऽधिकमार्पयत् ॥ ३ ॥

सर्व्वं प्रयोजनोद्दृत्तं ददुः किञ्चित् परात्मने ।
आत्मनो जीविकां कृत्स्नामियं दत्तवती यतः ॥ ४ ॥
ततो धर्म्मगृहैश्वर्य्यमालोक्य मुदिताञ्जनान् ।
योशुः समस्तहर्म्याणामस्थायित्वमबोधयत् ॥ ५ ॥
ध्रुवमेतानि सर्व्वाणि नङ्क्ष्यन्ति काल आगते ।
तदा वो भ्रमयिष्यन्ति मन्नाम्ना बहवो जनाः ॥ ६ ॥
युद्धविप्लवशब्देभ्योऽसन्त्रस्ताः कारणादतः ।
अभ्रमाः सावधानाश्च यूयं तिष्ठत सर्व्वदा ॥ ७ ॥
राष्ट्रं राष्ट्रस्य जातिश्च जाते र्वैरविरोधिताम् ।
करिष्यति धराकम्पो दुर्भिक्षं च भविष्यति ॥ ८ ॥
भयावहमभिज्ञानं व्योम्नि प्रादुर्भविष्यति ।
पूर्व्वं लक्षणमेतेषां भाविनां वः पराभवः ॥ ९ ॥
ताड़नं धर्म्मगेहेषु प्रेरणं राजबन्धनम् ।
राजद्वारेऽभियोगश्च मदर्थं वो भवेद्ध्रुवम् ॥ १० ॥
साक्ष्यार्थां भवतामुक्तिं यथा विश्वासमावहेत् ।
युष्मभ्यमर्पयिष्यामि तथा वाक्पटुतामहम् ॥ ११ ॥
युष्मान् समर्पयिष्यन्ति पितृभ्रातृसुहृज्जनाः ।
घानिष्यन्ते च युष्मासु तैरेव हन्त केचन ॥ १२ ॥
यूयं भविष्यथ द्वेषपात्राणि मम हेतवे ।
किन्तु धृत्यात्मजीवाणां केशोऽपि वो न नङ्क्ष्यति ॥ १३ ॥
सेनया यिरुशालेमं यदा द्रक्ष्यथ सङ्कुलम् ।
तदा ज्ञास्यथ तद्ध्वंसं ध्रुवमन्तिकमागतम् ॥ १४ ॥
यिहूदियास्थिताः सर्व्वे तदा गच्छन्तु पर्व्वतम् ।
सर्व्वे नगरवास्तव्याः प्रयान्तु नगराद्बहिः ॥ १५ ॥
मा विशन्तु पुरं सर्व्वे जनाः पल्लीनिवासिनः ।
अधर्म्मप्रतिकाराय स्मृतास्ते दिवसा यतः ॥ १६ ॥
ताः स्युः स्त्रियोऽतिसन्तप्ता गर्भिन्यः स्तनदाश्च याः ।
दुर्गति र्दैवकोपेन वसुधाया भवेद् यतः ॥ १७ ॥

खड्गस्य निशिते धारे निपतिष्यन्ति मानवाः ।
कांश्चिन्नेष्यन्ति स्वं देशं गृहीत्वा परजातयः ॥ १८ ॥
आकालोदयतो जाते यिरूशालेमपत्तनम् ।
चरणैः परजातीनामुपमर्दिष्यते बलात् ॥ १९ ॥
नक्षत्रादित्यचन्द्रेषु व्यञ्जनानि पृथक् पृथक् ।
ध्रुवं प्रादुर्भविष्यन्ति क्लेशदा स्याद्वसुन्धरा ॥ २० ॥
समुद्रगर्जनोद्विग्ना भूविपर्य्ययविह्वलाः ।
खविकारभयत्रस्ताः प्राणांस्त्यक्ष्यन्ति मानवाः ॥ २१ ॥
तदा दिव्याभ्रयानेन यशोविक्रमभूषितः ।
द्रक्ष्यते तावदस्माभिरत्र मानवैर्मानवात्मजः ॥ २२ ॥
उच्चीकृतशिरोग्रीवैरूर्द्ध्वं प्रणिहितेक्षणैः ।
भवद्भिस्तदालोक्य सर्व्वमासन्नमुक्तिभिः ॥ २३ ॥
यथोदुम्बरवृक्षस्य दृष्ट्वाभिनवपल्लवम् ।
युष्माभिर्ज्ञायते ग्रीष्मः समायात्यचिरादिति ॥ २४ ॥
तथाभिज्ञानमालोक्य यथैवेदं प्रदर्शितम् ।
ज्ञास्यते परमेशस्य राज्यमन्तिकमागतम् ॥ २५ ॥
यावन्नैवानुतिष्ठन्ति सर्व्वा एताः प्रवृत्तयः ।
ब्रवीम्यवितथं तावन्नोत्सीदेयुरिमाः प्रजाः ॥ २६ ॥
लोपो द्यावापृथिव्योश्च भविष्यत्यन्तिमे दिने ।
लोपो न मम वाक्यानां भविष्यति कदाचन ॥ २७ ॥
तथापि सर्व्वथा रक्ष्यः स्वात्मा सर्व्वप्रमादतः ।
यथा न ग्रसते बाधा भवतः सहसागता ॥ २८ ॥
सर्व्वैर्नैनमसंहार्य्यः स कालोऽत्यन्तदारुणः ।
यूयं तत्कालमत्येतुं तिष्ठतातन्द्रिताः सदा ॥ २९ ॥
स्थातुं मनुष्यपुत्रस्य सम्मुखे निर्भयास्तदा ।
श्रेयसीमैश्वरीं शक्तिं प्रार्थयध्वं गतव्यथाः ॥ ३० ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्भगवद्भाषितखोष्टोपनिषदि एकोविंशोऽध्यायः ।

## द्वाविंशोऽध्यायः

St. Luke. Chapter 22. [The Jews conspire against Christ. Satan prepareth Judus to betray him. The apostles prepare the passover. Christ instituteth his holy supper, covertly foretelleth of the traitor, dehorteth the rest of his apostles from ambition, assureth Peter his faith should not fail: and yet he should deny him thrice. He prayeth in the mount, and sweateth blood, is betrayed with a Kiss: he healeth Malchus' ear, he is thrice denied of Peter, shamefully abused, and confesseth himself to be the Son of God.]

अथोपायं विनाशस्य योशो निंस्तारपर्व्वणि ।
मन्त्रयाञ्चक्रिरे भीताः सोपाध्यायाः पुरोहिताः ॥ १
तस्मिन्नेव ततःकाले तच्छिष्यो यिहूदाभिधः ।
दुरात्मप्रेरितो मुख्ययाजकान्तिकमागतः ॥ २ ॥
ते योशो र्ग्रहणोपायं श्रुत्वा परमहर्षिताः ।
तस्मै कर्म्मानुरूपाणि रूप्याणि प्रतिशुश्रुवुः ॥ ३ ॥
स तेन सम्मतः क्रूरस्तं समर्पयितुं रहः ।
वित्तलोभविमूढात्मा युक्तावसरमैच्छत ॥ ४ ॥
अथ निस्तारपर्व्वीयाविवत्सालम्भनक्षणे ।
सम्प्रिवं योहनं खीष्ट आहूयेदं वचोऽब्रवीत् ॥ ५ ॥
द्रक्ष्यथो नगरं गत्वा जलकुम्भाभिवाहकम् ।
तद्भर्त्तृ गृहमाविश्य ब्रूतं भव इदं वचः ॥ ६ ॥
"गुरुर्वक्ति सशिष्योऽहं यत्र नैस्तारपर्व्विकम् ।
भोज्यं निर्व्वापयिष्यामि तद् गृहं कुत्र वर्त्तते ॥" ७
स तेन वचसा प्रीतः शालामेकां सुसज्जिताम् ।
दर्शयिष्यति तत्रैव भोज्यं कल्पयतं मम ॥ ८ ॥
तौ गुरोराज्ञया गत्वा यथादिष्टं निकेतनम् ।
नैस्तारपर्व्विकं भोज्यमकल्पयतमुत्तमम् ॥ ९ ॥
योशुस्ततो यथाकालं भोज्यं भोक्तुमुपागतः ।
भुञ्जानान् सम्मखे तस्य प्रेरितानिदमब्रवीत् ॥ १०

भगद्भिः सह पर्व्वीयमिदं मेऽन्तिमभोजनम् ।
ईशराज्यात्तदन्यत्र न भूयो भोक्ष्यते मया ॥ ११ ॥
पानपात्रं गृहीत्वाथ धन्यवादपुरःसरम् ।
सोऽब्रवीत् गृह्यतामेतत् स्वेषु च प्रविभज्यताम् ॥ १२ ॥
तावद्द्राक्षारसं नाहं पिबामि धरणीतले ।
यावदीश्वरसाम्राज्यं नायाति श्रेयसान्वितम् ॥ १३ ॥
ततो भङ्क्त्वाशिषा पूपं शिष्येभ्यो यीशुरब्रवीत् ।
मां स्मर्त्तुं सर्वकालेषु देहोऽयं मम गृह्यताम् ॥ १४ ॥
गृहीत्वा भोजनान्ते च तत्पात्रं यीशुरुक्तवान् ।
मयेदं स्रावितं रक्तं युष्माकं श्रेयसे नवम् ॥ १५ ॥
क्रूराणां वैरिणां हस्ते यो मां समर्पयिष्यति ।
स स्पृष्ट्वा भोजनाधारं तिष्ठत्यत्र मया सह ॥ १६ ॥
यथैव लिखितं ग्रन्थे तथैव मानवात्मजः ।
प्रयात्यर्पयिता तस्य किन्तु सन्तापभाग् भवेत् ॥ १७ ॥
यीशोस्तद् वचनं श्रुत्वा तर्कयन्तः परस्परम् ।
शिष्याः समर्पकज्ञाने बभूवुः संशयान्विताः ॥ १८ ॥
अथ तेषां महत्वेऽपि वीक्ष्य शिष्यान् प्रजल्पितान् ।
तत्सर्वसंशयच्छेत्ता यीशु र्वचनमुक्तवान् ॥ १९ ॥
राजानः परजातीनां प्रभुत्वं तेषु कुर्व्वते ।
कथ्यन्ते पुरुषा राज्ञः प्रजानां हितकारिणः ॥ २० ॥
कदापि सोपमा माभूद् भवतां भावितात्मनाम् ।
कनिष्ठो भवतां मध्ये स भवेद् यो गुणैर्वरः ॥ २१ ॥
भोजनायोपविष्टेषु यथान्न-परिवेशकः ।
तथाहं भवता मध्ये सेवको नात्र संशयः ॥ २२ ॥
नित्यं मम परीक्षासु भवन्त एव संस्थिताः ।
राज्यं वोऽहं प्रदास्यामि मत्पिता मां यथा ददौ ॥ २३ ॥
यूयं पास्यथ पानीयं भोक्ष्यध्वे च मया सह ।
स्थास्यथ सिंहासनेष्वत्र इस्रायेलवंशानां द्वादशानां विचारकाः २४ ॥

गोधूमानिव दुष्टात्मा चालयिष्यन्निर्येष वः ।
अहं प्रार्थितवान् वत्स शिमोनास्त्वलनं तव ॥ २५ ॥
यदा तेऽविप्लवा बुद्धिः भंशयं नाशयिष्यति ।
तदैते सान्त्वनीयाः सुत्र भ्रातरस्तेऽवशास्त्वया ॥ २६ ॥
शिमोनस्तमुवाचेदं निशम्योत्तं खमात्मनः ।
कारां गन्तुं त्वया सार्द्धं मर्त्तुं वाहं स्थितः प्रभो ॥ २७ ॥
यीशुरुचे त्रिकृत्वोऽद्य यावन्नाङ्गीकरोषि माम् ।
सत्यं ब्रवीमि ते तावन्न रविष्यति कुक्कुटः ॥ २८ ॥
यदा प्राहिण्वं युष्मान् यात्रोपकरणं विना ।
नाभावो वस्तदा जातः कस्यापि काम्यवस्तुनः ॥ २९ ॥
स्वस्वद्रव्याणि गृह्णीत साम्प्रतं मम शासनात् ।
क्रीणीतासिं स्ववस्त्राणि विक्रीय यस्य नास्ति च ॥ ३० ॥
"अपुण्येषु स संख्यात" इति पौराणिकं वचः ।
असंशयं महाभागा यतो मय्येव सेत्स्यति ॥ ३१ ॥
तेऽवदन्निह विद्येते शानितौ द्वावसी प्रभो ।
यीशुः प्रोवाच पर्य्याप्तमेतावद् भद्रमस्तु वः ॥ ३२ ॥
यीशु र्ययौ यथा कालं ततो जैतुनपर्व्वतम् ।
तदन्तेवासिनश्चैव श्रद्धया पृष्ठतो ययुः ॥ ३३ ॥
स तानुपस्थितान् वीक्ष्य प्रोवाच परमात्मजः ।
यूयं प्रलोभनं जेतुं प्रार्थयध्वं समागताः ॥ ३४ ॥
अथ गत्वा ततः किञ्चिद्दूरं परमतत्त्ववित् ।
पतित्वाधोमुखो भूमौ प्रार्थयन्निदमब्रवीत् ॥ ३५ ॥
पानपात्रं विनिर्यातु यदीदं तात सम्भवेत् ।
तवेच्छया भवत्वेतन्न कदाचिन्ममेच्छया ॥ ३६ ॥
स्वर्गादभ्यागतो दूतो यीशुना ददृशे ततः ।
स तमाश्वासयामास वचसाऽमृतवर्षिणा ॥ ३७ ॥
अथ भूयः समाधाय मनश्चञ्चलमस्थिरम् ।
शान्तात्मा प्रार्थयामास यीशुरेकाग्रमानसः ॥ ३८ ॥

स्वेद आविरभूत्तस्य तदा शोणितविन्दुभिः ।
सदृशः स महास्वेदः पपात च धरातले ॥ ३९ ॥

ततः शिष्यान्तिकं गत्वा सुप्तान् शोकेन वीक्ष्य तान् ।
स प्राह्णोत्थिष्ठत क्षिप्रं ध्यात्वा जेतुं प्रलोभनम् ॥ ४० ॥

इत्युक्तवत्समःचार्य्यं हिह्नदाः शक्रुनन्दनः ।
सशस्त्रैः पुरुषैः सार्द्धं योशुं चुम्बितुमागतः ॥ ४१ ॥

योशुस्तमाह किं त्वं मां समर्पयसि चुम्बनैः ।
तच्छ्रुत्वा दशशदाः सर्व्वे प्रतिहिंसामकल्पयन् ॥ ४२ ॥

तस्मिन्नेव ततःकाले तेषामेकतमो जनः ।
महायाजकदासस्य कर्णं दक्षिणमाच्छिनत् ॥ ४३ ॥

योशुस्तं वारयित्वाथ तस्य कर्णं सुखं स्पृशन् ।
प्रकृतौ स्थापयामास पूर्व्ववत् परमात्मजः ॥ ४४ ॥

योशुः प्राह ततो मुख्ययाजकादीन् समागतान् ।
दस्युं यथा ग्रहीतुं मां सशस्त्राः कथमागताः ॥ ४५ ॥

धर्म्मगेहाद् यदन्यत्र भवद्भिर्ग्रहणं मम ।
तदहं भवतां मन्ये प्रभुत्वं मौर्ख्यकल्पितम् ॥ ४६ ॥

ते तं धृत्वा ततो निन्युः प्रधानयाजकालयम् ।
तदानीं संहृताकारः पित्रोऽपि दूरतोऽन्वगात् ॥ ४७ ॥

ततः प्राङ्गणपर्य्यन्तं गत्वा तत्रोपविष्टवान् ।
आवृत्य माययात्मानं सह दीप्ताग्निसेवकैः ॥ ४८ ॥

दासी काचित्ततोऽभ्येत्य तमालोक्येदमब्रवीत् ।
अयमागन्तुकस्तेन सहासीदत्र संशयः ॥ ४९ ॥

तत्क्षणात्तामनादृत्य पित्रो वचनमुक्तवान् ।
यं लक्षयसि नारि त्वं न जाने तमहं ध्रुवम् ॥ ५० ॥

कश्चिदन्यस्तमालोक्य व्याजहार क्षणात् परम् ।
भवानेकतमस्तेषां नास्त्यत्र मम संशयः ॥ ५१ ॥

पित्रस्तं कथयामास मनुष्य, नाहमस्मि भो ।
घटिकानन्तरं कश्चित्तमालोक्यापरोऽब्रवीत् ॥ ५२ ॥

ध्रुवं तस्य सहायोऽयमासोन्नैवात्र संशयः ।
गालोलीयोऽयमाकारभाषाभ्यां प्रतिभाति मे ॥ ५३ ॥
पितरस्तमब्रवोन्नाहमवगच्छामि ते वचः ।
तस्य तद्वचसा सार्द्धं सद्यो रुराव कुक्कुटः ॥ ५४ ॥
योशु मुखं परावर्त्त्य तदा पितरमैक्षत ।
स्मारं स्मारं गुरो र्व्वाक्यं वहिर्गतो रुरोद सः ॥ ५५ ॥
अथ तं वाससावृत्य प्राहरन् रक्षका जनाः ।
आच्छाद्य लोचने तस्यावहस्य चेदमब्रवीत् ॥ ५६ ॥
आप्तोक्त्या वद रे ! सम्यक् कस्त्वां ताड़ितवानिति ।
एवमादीनि चान्यानि ते वचांसि बभाषिरे ॥ ५७ ॥
प्रभातेऽथ सभामध्ये तमानीय पुरोहिताः ।
प्राचीनाः परिपप्रच्छुः सोपाध्यायाः समागताः ॥ ५८ ॥
यदि खोष्टोऽसि भद्र त्वं ब्रूहि नो मास्तु ते भयम् ।
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ५९ ॥
न भविष्यति वः श्रद्धा यदि युष्मान् ब्रवीम्यहम् ।
पृष्टा अपि मया यूयं न मां प्रतिवदिष्यथ ॥ ६० ॥
इतः प्रभृति पुत्रस्तु मनुष्याणां परात्मनः ।
यश्मसो दक्षिणे पार्श्वे स्थास्यत्येव न संशयः ॥ ६१ ॥
तस्य तद्वचनं श्रुत्वा ते सर्व्वे सममब्रुवन् ।
तर्हि किं परमेशस्य पुत्रस्त्वं केवलात्मनः ॥ ६२ ॥
सोऽब्रवीद् वो वचः सत्यं स एवायमहं यतः ।
तेरन्यं श्रावणस्थाने किं साक्ष्यस्य प्रयोजनम् ॥ ६३ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्नगुभाषित खोष्टोपनिषदि द्वाविंशोऽध्यायः ।

---

## त्रयोविंशोऽध्यायः

St. Luke. Chapter 23. [ Jesus is accused before Pilate, and sent to Herod. Herod mocketh him. Herod and Pilate are made friends. Barabbas is desired of the people, and is loosed by Pilate, and Jesus is given to be crucified. He telleth the women, that lament him, the destruction of Jerusalem : prayeth for his enemies : two evil doers are crucified with him. His death. His burial. ]

पीलातान्तिकमानीय ततस्तं मिलिता जनाः ।
महापराधमारोप्य वक्तव्यमिदमब्रवीत् ॥ १ ॥
"राजा खीष्टोऽहमि"त्युक्त्वा जातुरम्मार्ग प्रदर्शकः ।
निवारयत्ययं धीमन् कैसोराय करार्पणम् ॥ २ ॥
यिहूदोनां नृपः किं त्वमिति पीलात उक्तवान् ।
भवता सत्यमेवोक्तमिति तं योशुरुक्तवान् ॥ ३ ॥
आहूय याजकाम्मुख्यान् पीलातस्तत उक्तवान् ।
अपराधं न पश्यामि जनस्यास्य कमप्यहम् ॥ ४ ॥
तच्छ्रुत्वा वचनं तस्य त ऊचु र्दृढ़निश्चयाः ।
गालोलस्था इहस्थाश्च प्रजा उत्तेजयत्ययम् ॥ ५ ॥
गालीलोयं ततो ज्ञात्वा पीलातो योशुमात्मवान् ।
प्राहिणोद् यिरुशालेमस्थितहेरोदसन्निधौ ॥ ६ ॥
हेरोदो योशुमालोक्य चिरात् स्वश्रुतिसंस्थितम् ।
युक्तरूपमभिज्ञानं तमयाचत हर्षितः ॥ ७ ॥
तं निरुत्तरमालोक्य याजकाद्यभियोगतः ।
हेरोदः प्रेषयामास योशुं पीलातसन्निधौ ॥ ८ ॥
पूर्वं वैरं परित्यज्य कर्म्मणानेन तावुभौ ।
अन्योन्यं मित्रभावेन मिलितौ च बभूवतुः ॥ ९ ॥
ततः पीलात आहूय प्रधानाधराच्चयाजकान् ।
धर्म्मशासननिष्णातो वाक्यज्ञो वाक्यमब्रवीत् ॥ १० ॥
भवन्तोऽस्याभियुक्तस्य प्रजोन्मार्गप्रदर्शिताम् ।
आरोपयन्ति वाक्येन केवलं ममसन्निधौ ॥ ११ ॥

महेरोदस्त्वहं नास्य दोषं पश्यामि कंचन।
शासित्वा केवलं तस्मात् स्मृत्वा मोक्षं च पर्व्वणः॥
निर्दोषं मोचयिष्यामि नरमेनं नये रतम्॥ १२॥
श्रीमन् मोचय वाराब्बामिति ते सममब्रुवन्॥ १३॥
वाराब्बादण्डमालोच्य पीलातः क्रूरकर्म्मजम्।
यीशो र्मोक्षाय सम्बोध्य ताञ्जनान् युक्तितोऽब्रवीत्॥ १४॥
क्रोशन्तस्ते ततः प्राहुः क्रुशेनायं निहन्यताम्।
किमनेन कृतोदोषः पीलात इति पृष्टवान्॥ १५॥
न मया प्राणदण्डार्हो दोषोऽस्य परिलक्ष्यते।
शासितः केवलं तस्मान्मयैष मोचयिष्यते॥ १६॥
तस्य तद्वचनं श्रुत्वा क्रोशन्तस्ते ततोऽधिकम्।
उक्तवन्तः क्रुशेनैव भवता बध्यतामयम्॥ १७॥
पीलातो वचनात्तेषां वाराब्बामुक्तिमादिशत्।
तेषामिच्छानुसारेण योशोर्दण्डं शशंसच॥ १८॥
ततस्ते यीशुमादाय गच्छन्तोऽध्वनि मानवाः।
कुरीणीयं शिमोनाख्यं क्रुशं वोढुं समादिशन्॥ १९॥
बहवः पुरुषा जग्मु र्गच्छतस्तस्य पृष्ठतः।
ताड़यन्त्यः स्ववक्षांसि ययु र्नार्य्यश्च काश्चन॥ २०॥
यीशुस्ताः सान्त्वयित्वेदमुवाच परमात्मजः।
यिरुशालेमजाः कन्याः कथं क्रन्दत मत्कृते॥ २१॥
रुदितात्मसुतानां तु हिताय स्वार्थमेवच।
कालः सन्हि समायाति यत्र वक्ष्यन्ति मानवाः॥ २२॥
धन्याः खलु स्त्रियो बन्ध्या याभिर्न प्रसुताः सुताः।
धन्याश्च ताः स्त्रियो लोके स्तना यासामदोहिताः॥ २३॥
स्वदेहोपरि पाताय वदिष्यन्ति नगाञ्जनाः।
सर्व्वांश्च शैलांश्च वक्ष्यन्ति स्वदेहाच्छादनायच॥ २४॥
यद्यग्रं व्यवहारः स्यात् सरसं पादपं प्रति।
भविष्यति विशुष्काणां तरूणां तर्हि का गतिः॥ २५॥

द्वयोर्दुष्कृतिनो र्मध्ये ततस्ते परमात्मजम् ।
क्रुशे संस्थापयामासुः स्थाने गलगथाह्वये ॥ २६ ॥
तस्मिन् काले परात्मानमब्रवीत् परमात्मजः ।
क्षमस्वैनान् पित मूढ़ान् कार्य्याकार्य्यमजानतः ॥ २७ ॥
ततस्ते तस्य वस्त्राणि गुटिकापातपूर्व्वकम् ।
व्यभजन् परिधेयानि सर्व्वाणि दर्शकान्तिके ॥ २८ ॥
न्यक्कुर्व्वन्तोऽवदन् केचित्तं दृष्ट्वा जननायकाः ।
रक्ष त्वमात्मनात्मानं यदि खीष्टोऽसि साम्प्रतम् ॥ २९ ॥
सैनिकास्तमुपागत्य गृहीत्वा चाम्लकाञ्जिकम् ।
उपहस्याब्रुवन् राजन्नात्मनात्मानमुद्धर ॥ ३० ॥
"अयं योशुरिति ख्यातो यिहुदीयप्रजाधिपः ।"
इत्येवं दोषलेखं च बबन्धुस्तस्य मस्तके ॥ ३१ ॥
एकस्तदाब्रवीत्तेन सार्द्धमुद्बद्धदोषिणोः ।
परिरक्ष त्वमावां च यदि खीष्टोऽसि साम्प्रतम् ॥ ३२ ॥
अन्यस्तस्य वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
न बिभेषि कथं भो त्वं सर्व्वस्मादीश्वरादपि ॥ ३३ ॥
अस्माकं दण्डसाम्येऽपि जनोऽयं सर्व्वथाऽनघः ।
नाकार्य्यकृदयं यस्मादावां दुष्कृतिनौ ध्रुवम् ॥ ३४ ॥
असौ ततो योशुं प्राह तव राज्यं नयस्व माम् ।
योशुस्तमाह भद्रं ते स्वाराज्यं त्वमवाप्स्यसि ॥ ३५ ॥
षष्ठहोरामथारभ्य यावन्नवमहोरकाम् ।
अभवन्निखिलो देशो घोरेण तमसावृतः ॥ ३६ ॥
अभूद् यवनिका दीर्णा धर्म्ममन्दिरसंस्थिता ।
योशुस्तदात्यजत् प्राणानाहूय परमेश्वरम् ॥ ३७ ॥
दृष्ट्वा शतपति स्तस्य दुःखं प्राणविमोचनम् ।
अब्रवीद् ध्रुवमेवैष आसीद्धर्म्मपरायणः ॥ ३८ ॥
एतद्दुःखकरं दृश्यं ये नरा द्रष्टुमागताः ।
ताडयन्तः स्ववक्षांसि ते जग्मुः स्वं स्वमालयम् ॥ ३९ ॥

यीशोः परिचिताः सर्वे तथा गालीलयोषितः ।
सर्वमालोकयामासु दूरतः समवस्थिताः ॥ ४० ॥
अथारिमाथियावासी योषेफो नाम धार्म्मिकः ।
साधकः स्वर्गराज्यस्य सुशीलो मन्त्रतत्त्ववित् ॥ ४१ ॥
पीलातमुपसङ्गम्य यीशो र्देहमयाचत ॥ ४२ ॥
पीलातेनाभ्यनुज्ञातः स तमावेष्ट्य वाससा ।
विश्रामवासरारम्भे दिने चायोजनस्य च ॥
यत्नेन स्थापयामास शैलस्य विवरे नवे ॥ ४३ ॥
गालीलाद् योषितो याश्च यीशुना सार्द्धमागता ।
अपश्यन्ननुगच्छन्त्यः सर्व्वमेतद् यथायथम् ॥ ४४ ॥
ततो निर्म्माय गन्धाढ्यं तैलं प्रत्यावृताः गृहे ।
विश्रामाज्ञानुरोधेन विश्रान्ता अवतस्थिरे ॥ ४५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमन्मङ्गलभाषितख्रीष्टोपनिषदि त्रयोविंशोऽध्यायः ।

---

## चतुर्विंशोऽध्यायः

St. Luke, Chapter 24. [ Christ's resurrection is declared by two angels to the women that come to the sepulchre. These report it to others. Christ himself appeareth to the two disciples that went to Emmaus. afterwards he appeareth to the apostles, and reproveth their unbelief : giveth them a Charge : promiseth the Holy Ghost : and so ascendeth into heaven. ]

अथ विश्रामवारान्ते सप्ताहप्रथमेऽहनि ।
ता गन्धद्रव्यमादाय श्मशानं प्रातरागताः ॥ १ ।
ददृशुः प्रवेशद्वारस्य पाषाणमपसारितम् ।
यीशो र्देहं तु नापश्यञ् छवमन्दिरमध्यगम् ॥ २ ॥

तस्मिन् द्वौ पुरुषौ काले भूषितौ शुभ्रवाससा ।
चिन्तावनतवक्राभ्य स्ताभ्यो भीताभ्य ऊचतुः ॥ ३ ॥
जीवितो मृतमध्येऽत्र युष्माभि र्मृग्यते कथम् ।
स नास्तीहोत्थितः पूर्वं गालील उक्तवान् यथा ॥ ४ ॥
ताः स्विदस्तानि वाक्यानि स्मृत्वा प्रत्यावृतास्ततः ।
तस्यैकादशशिष्येभ्योऽन्येभ्यश्च सर्व्वमब्रुवन् ॥ ५ ॥
मरीयमग्दलीन्याद्याः सहचर्य्यस्तथापरा ।
सर्व्वा स्ताश्चैव वाक्यानि प्रेरितेभ्योऽन्ववर्णयन् ॥ ६ ॥
निशम्य तानि वाक्यानि तासां ते प्रेरिता जनाः ।
न प्रतीयुरिमाः सर्वाः प्रलापसदृशीः कथाः ॥ ७ ॥
पितरस्तु त्वरयोत्थाय गत्वा शवनिकेतनम् ।
सर्वं यथायथं वीक्ष्य स्वस्थानं विस्मितोऽगमत् ॥ ८ ॥
तत द्वौ दिवसे तस्मिन्मानवौ तेष्ववस्थितौ ।
यिरूशालेमतः क्रोशचतुष्टयवहिः स्थितम् ॥
इम्मायुनामकं ग्रामं गच्छन्तौ तत्कथाश्रितौ ।
यिशुना सह सङ्गम्य जग्मतू रुद्धचक्षुषौ ॥ ९ ॥
यीशु स्तौ कथयामास युवां किमिह जल्पथः ।
क्लियपा तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ १० ॥
तत्त्वतः श्रूयतां सर्वमावाभ्यां यदिहोच्यते ।
इहस्थेनापि तद् यस्माद् भवता नावगम्यते ॥ ११ ॥
क्रियावाक्‌शक्तिसम्पन्नः परमेशपरायणः ।
आविरासीन्महाभागो यीशु र्नासरताभिधः ॥ १२ ॥
इस्रायेलस्य मोक्षाय समर्थमपि तं प्रभुम् ।
समारोप्य क्रुशे जघ्नु रध्यक्ष-मुख्ययाजकाः ॥ १३ ॥
त्रिदिनान्यद्य पूर्य्यन्ते कालात्तन्मरणात्ततः ।
नारीभिरपि काभिश्चिन् महानुत्पादितः स्मयः ॥ १४ ॥
दृष्टवस्ताः शवागारे दूतं स्वर्गात् समागतम् ।
नापश्यन् यीशुमात्मस्थं शवागारे समाहितम् ॥ १५ ॥

"स जीवत्येव" ताः प्राहु र्मृतमध्यात् समुत्थितः ।
योषिदुक्तानि वाक्यानि जना अप्यनुमेनिरे ॥ १६ ॥
स तावुवाच रे, मुढ़ौ ख्रीष्टदुःखप्रतापयोः ।
कथं विप्रतिपद्येथे आप्तोक्तिमंग्रयान्वितौ ॥ १७ ॥
ततः स निखिलैः शास्त्रैर्मोशादिशिष्टपूजितैः ।
ख्रीष्टत्वमात्मनः सम्यक् चिह्नैश्च प्रत्यपादयत् ॥ १८ ॥
तयोरग्रे ततो गच्छन् गन्तव्यस्थलमेत्य च ।
तयो र्भक्त्या स्थितस्ताभ्यां सह रात्रिमयापयत् ॥ १९ ॥
आशिषा पूपमादाय स भोक्तुं गृहमागतः ।
दिव्येन चक्षुषा ताभ्यां दृष्टश्चान्तर्दधौ पुनः ॥ २० ॥
ततः स्मृत्वा गतं वृत्तं तौ तेन पथि सङ्गतौ ।
तत्क्षणाज्जग्मतु र्हृष्टौ यिरूशालेमपत्तनम् ॥ २१ ॥
तत्रैकादश तान् शिष्यानालोक्य स्वजनांस्तथा ।
शिमोनसाक्षिकं तथ्यं प्रभोरुत्थानमूचतुः ॥ २२ ॥
यच्च संघटितं वृत्तं पथि तेषां समागमे ।
पूपभङ्गे च यद्दृष्टं तच्च तेभ्यः शशंसतुः ॥ २३ ॥
तेषामाविरभूत् ख्रीष्टस्तत्कथैकाग्रचेतसाम् ।
भूयाद् वः परमा शान्तिरिति वाचं शशंस च ॥ २४ ॥
तत्रिशम्यायमात्मेति ते भीता अनुमेनिरे ।
सतानुवाच भद्रं वोऽमा भूद् वो मनसो भयम ॥ २५ ॥
ईक्षध्वं हस्तपादं मे सोऽहमस्मि स्वयं यतः ।
विहीनमस्थिमांसाभ्यां वेत्तात्मानमसंशयम् ॥ २६ ॥
इत्युक्त्वा दर्शयामास हस्तपादं स तान् प्रभुः ।
ते तथापि न विश्वासं चक्रुरानन्दविस्मिताः ॥ २७ ॥
भूयस्तान् विस्मितान् वीक्ष्य प्रोवाच परमात्मजः ।
युष्माभिः सञ्चितं किञ्चित् खाद्यं किमिह विद्यते ॥ २८ ॥
खण्डमेकं ददुस्तस्मै ते मत्स्यमधुकोषयोः ।
बुभुजे तत्समक्षं तत् प्रभुरादाय तत्क्षणात् ॥ २९ ॥

अथ तान् कथयामास समवेतान् परात्मजः ।
भूय एव महाभागाः शृणुध्वं मे परं वचः ॥ ३० ॥
यदुक्तं मां समाश्रित्य योगिनाम्‌श्च पूजितैः ।
यद् गीतसंहिताग्रन्थे चोक्तं विमलमानसैः ॥ ३१ ॥
ध्रुवं सेत्स्यति तत् सर्व्वं सत्यमेतद् ब्रवीम्यहम् ।
इत्युक्त्वोद्घाटयामास तेषां बुद्धेः स आवृतिम् ॥ ३२ ॥
तेषां शास्त्रावबोधाय सम्पाद्यैवं सुयोग्यताम् ।
स भूयः कथयामास शास्त्रोक्तं खीष्टलक्षणम् ॥ ३३ ॥
"मनुजजन्यं महद्दुःखमुपलभ्य परात्मजः ।
तृतीयदिवसे मृत्योः पुनरुत्थास्यति ध्रुवम् ॥ ३४ ॥
आरभ्य यिरुशालेमात् समस्ते क्षितिमण्डले ।
पापक्षमा तथा शुद्धि स्तन्नाम्ना घोषयिष्यते" ॥ ३५ ॥
इत्यात्तैर्बहुधा गीतं श्रुतिभिश्च पृथक् पृथक् ।
अनुष्ठितेषु सर्वेषु यूयमेव च साक्षिणः ॥ ३६ ॥
यावन्न लभ्यते शक्तिं मम पित्रा प्रतिश्रुता ।
स्वर्गात्तावदवस्थेयं यिरुशालेमपत्तने ॥ ३७ ॥
प्रापयित्वा ततः शिष्यान् खीष्टो वैथनियां पुरीम् ।
तेभ्यः शुभाशिषं दत्त्वा जगाम परमं पदम् ॥ ३८ ॥
संपूज्य ते च तं भक्त्या महानन्दास्तपस्विनः ।
यिरुशालेममागत्य परेशं शरणं ययुः ॥ ३९ ॥

इति भारतवर्षीयचट्टग्रामजिलान्तर्गतमादार्साग्रामनिवासिना
श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमत्प्रभुभाषितखीष्टोपनिषदि चतुर्विंशोऽध्यायः ।

---

# CHRISTOPANISAT

## श्रीमद्योहनभाषिता

### प्रथमोऽध्यायः

St. John. Chapter I. [ The divinity, humanity, and office of jesus Christ. The testimony of John. The calling of Andrew, Peter, etc. ]

आसीद्वाक् सह सम्पृक्ता सर्गाग्रे परमात्मना ।
न सा जातु ततो भिन्ना तस्माद्वागीश्वरः स्मृतः ॥ १ ॥
तस्मात् सर्व्वाणि भूतानि जज्ञिरे परमात्मनः ।
परमेशादृतेऽन्यस्मान्नहि किञ्चिदजायत ॥ २ ॥
आसीत्तद्गतचैतन्यं नराणामवभासकम् ।
तन्नित्यं तिमिरं हन्ति न जग्राह तमस्तु तत् ॥ ३ ॥
ज्योतिषस्तस्य मानाय नराणां प्रत्ययाय च ।
योहनाख्यो जनः कश्चिदीश्वरप्रेरितोऽभ्यगात् ॥ ४ ॥
योहनस्तु न तज्ज्योतिः प्रमाता तस्य एव सः ।
तदेव परमं ज्योतिर्यदन्वेतिस्म भासयत् ॥ ५ ॥
तच्च ज्योतिर्जगत्यासीज्जगत्तस्मादजायत ।
जगन्न जज्ञौ तज्ज्योतिर्जगद्यतस्तमोमयम् ॥ ६ ॥
तन्निजेष्वधिकारेषु स्वरूपेण समाययौ ।
तथापि तत् परं तत्त्वं स्वजना न प्रपेदिरे ॥ ७ ॥
जगृहुर्ये च तद्भक्त्या ये वा तन्नामतत्पराः ।
अर्पयामास तत्तेभ्यः शक्तिमीशानुगामिनीम् ॥ ८ ॥
न ते जाता मनुष्याणामिच्छया देहधारिणाम् ।
सञ्जाताः सत्त्वभूयिष्ठाः केवलं विभुवाञ्छया ॥ ९ ॥
सैषा शरीरिणी वाणी दृष्टा सत्यदयान्विता ।
अस्मन्मध्यगताऽवात्सीदेककीर्त्तिरिवेशजा ॥ १० ॥

संस्थाप्य योहनो मानं तस्याः प्राहेदमुच्चकैः ।
य एतीति मया प्रोक्तं मत्परोऽपि स मेऽग्रणीः ॥ ११ ॥
स हि मत्पूर्व्वमेवासीन्नियता तस्य पूर्णता ।
सर्व्वैरेव ततः प्राप्तः परोऽस्माभिरनुग्रहः ॥ १२ ॥
व्यवस्था मोशिना दत्ता परावरविवेकिना ।
प्रावर्त्तिते दयासत्ये योशुख्रीष्टेन सर्वथा ॥ १३ ॥
न कैश्चिच्चक्षुषा दृष्टः कदाचित् परमेश्वरः ।
क्रोड़स्थेनाद्वयेनैव स्वपुत्रेण प्रकाशितः ॥ १४ ॥
यिरूशालेमवास्तव्या अथ लेवीय-याजकाः ।
यिहूदीप्रेषिताः केचिद् योहनान्तिकमागताः ॥
पप्रच्छु स्तं महाभागं तत्रास्मि संशयान्विताः ।
भगवानेलियः किं त्वं विबुद्धो वा गतस्पृहः ।
सत्यं परिचयं धीमन्नात्मनो वक्तुमर्हसि ।
येनास्मत्प्रेरकाः सर्व्वे भवेयु र्मुक्तसंशयाः ॥ १५ ॥
योहनस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
नाहं ख्रीष्टो न वैलीयो नवाप्तो विगतस्पृहः ॥
"ऋजुं कुरु प्रभो र्मार्ग" मिति प्राह मरौ तु यः ।
रवस्तस्यास्मि नान्योऽहं सत्यमेतद्वदाम्यहम् ॥ १६ ॥
ते भूयः परिपप्रच्छुः फरीशिप्रेरिता जनाः ।
ख्रीष्टादिभ्यो विभिन्नश्चेत् कथं स्नापयते भवान् ॥ १७
योहनः प्राह तच्छ्रुत्वा वारिणा स्नापयाम्यहम् ।
भवन्तस्तं न जानन्ति भवन्मध्यगतोऽस्ति यः ॥
स मत्तः परमागच्छन्नभूदेव ममाग्रणीः ।
न मोक्तमपि शक्तोऽहं बन्धनं तदुपानहोः ॥ १८ ॥
पुरी यर्द्दनपारस्था पुण्या बैथनियाविधा ।
कथेयं प्रस्तुता तत्रास्नापयद् यत्र योहनः ॥ १९ ॥
परेऽह्नि योशुमालोक्यागच्छन्तमात्मनोऽन्तिकम् ।
ईशस्य शिशुमेषोऽयं पापघ्न इति सोऽवदत् ॥ २० ॥

मदग्रणीं मदग्रस्थमागच्छन्तं च मत्परम् ।
यमहं प्रोक्तवान् पूर्व्वं स एवायमुपागतः ॥ २१ ॥
मयासोऽपि न विज्ञातः किन्तु तद्व्यक्तिकाम्यया ।
इस्रायेलेषु तोयेन स्नापनं कल्पितं मया ॥ २२ ॥
कपोताभो मया दृष्ट आत्मा मुक्तः सनातनः ।
स्वर्गात् समागतः शुद्ध एतस्योपरि संस्थितः ॥ २३ ॥
मयासोऽपि न विज्ञात इदानीं दृष्टिगोचरः ।
किन्तु मत्प्रेरको मह्यं विज्ञानमिदमब्रवीत् ॥ २४ ॥
अवरोहन्तमात्मानं यत्स्थमालोकयिष्यसि ।
पवित्रेणात्मना लोके स एव स्नापयिष्यति ॥ २५ ॥
सम्यगेष मया दृष्टः प्रमाणीक्रियते तथा ।
परमेश्वरपुत्रोऽयमिति तथ्यं ब्रवीम्यहम् ॥ २६ ॥
परस्मिन् दिवसे द्वाभ्यां शिष्याभ्यां सह संस्थितः ।
भ्राम्यन्तं यीशुमालोक्य योहनो वाक्यमब्रवीत् ॥ २७ ॥
शिशुमेषं परेशस्य भ्राम्यन्तं परिपश्यतम् ।
तच्छ्रुत्वा तस्य तौ शिष्यौ यीशुमेवानुजग्मतुः ॥ २८ ॥
यीशुस्तावनुगच्छन्तौ प्रत्यावृत्येदमब्रवीत् ।
युवयोरस्तु कल्याणं किमत्र परिमृग्यथः ॥ २९ ॥
तावाहतु गुरो स्थानं भवतः कुत्र वर्त्तते ।
यीशुः प्राह मया सार्द्धमागत्य परिपश्यतम् ॥ ३० ॥
दृष्टवन्तौ तदावासं तौ गत्वा यीशुना सह ।
तद्दिनं च स्थितौ तत्र होरा ह्यासंस्तदा दश ॥ ३१ ॥
योहनस्यैव वाक्येन यीशुना सहगामिनोः ।
एकः शिमोनपित्रस्य भ्रातासीदान्द्रियाभिधः ॥ ३२ ॥
शिमोनं सोदरं पूर्व्वं सोऽवलोक्येदमब्रवीत् ।
मशीहो भगवान् दृष्ट आवाभ्यां ख्रीष्टसंज्ञितः ॥ ३३ ॥
इत्युक्त्वा तं निनायासौ यीशोरन्तिकमान्द्रियः ।
तं दृष्ट्वा यीशुराह "त्वं पित्र" इत्यभिधास्यसे ॥ ३४ ॥

यीशु स्ततः परेऽक्षोऽच्छन् गन्तुं गालोलमण्डलम् ।
अब्रवीत् फिलिफं वीक्ष्य सौम्य त्वं मामनुव्रज ॥ ३५ ॥
पित्राब्द्रियनिजग्रामवैत्सदापुरवासज्ञात् ।
नथनेलं समालोक्य फिलिफो वाक्यमब्रवीत् ॥ ३६ ॥
यमामनन्ति सर्वाणि शास्त्राणि लोकतारकम् ।
स योषेफात्मजो लब्धो यीशु र्नासरतो मया ॥ ३७ ॥
तस्य तद्वचनं श्रुत्वा नथनेलस्तमब्रवीत् ।
भद्रं नासरतात् किञ्चित् किं समुत्पत्तुमर्हति ॥ ३८ ॥
फिलिफस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
समागत्य मया सार्द्धं तं दृष्ट्वा जहि संशयम् ॥ ३९ ॥
आगच्छन्तं समालोक्य यीशु स्तमात्मनोऽन्तिकम् ।
आह सत्येन पश्येऽकमिस्रायेलीयमण्डलम् ॥ ४० ॥
नथनेलोऽब्रवीद्धीमन् कथं मामवगच्छसि ।
यीशुः प्राह मया दृष्टस्त्वमधो यज्ञशाखिनः ॥ ४१ ॥
नथनेलोऽब्रवीद्राजा त्वमिस्रायेलसन्ततेः ।
त्वमेवेश्वरपुत्रश्च गुरो सत्यं ब्रवीम्यहम् ॥ ४२ ॥
यीशु प्राह न पर्य्याप्ता पूर्वोक्तिः प्रत्यये मम ।
द्रक्ष्यसीतोऽपि व्यक्तानि चिह्नानि प्रत्यये मम ॥ ४३ ॥
यूयं द्रक्ष्यथ संजुष्टं स्वर्दूतै र्मानवात्मजम् ।
तथा विमुक्तसन्देहाः स्वर्गद्वारमपावृतम् ॥ ४४ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकेरुपनिबद्धायां श्रीमद्योहनभाषित-खोष्टोपनिषदि प्रथमोऽध्यायः ।

## द्वितीयोऽध्याय:

St. John, chapter 2. [Christ turneth water in to wine, departeth in to Capernaum, and to Jerusalem, where, he purgeth the temple of buyers and sellers. He foretelleth his death and resurrection. Many believed because of his miracles, but he would not trust himself with them.]

अथ गालीलदेशस्थे कान्नाख्यनगरे शुभे ।
अनुष्ठित: शुभोद्वाह स्तृतीयेऽहनि कस्यचित् ॥ १ ॥
आसीदुपस्थिता तत्र योशो र्माता यशस्विनी ।
योशुश्चामन्त्रितोऽतिष्ठत् सह तस्यान्तेवासिभि: ॥ २ ॥
तत्र मद्याल्पतां वीक्ष्य योशो र्माता तमब्रवीत् ।
मद्यस्य न्यूनता वत्स गृहस्थेनानुभूयते ॥ ३ ॥
योशुस्तामवदन्नारि त्वया किं कार्य्यमस्ति मे ।
इदानीमपि मे कालो नहि पूर्णत्वमागत: ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा सा भृत्यानिदमब्रवीत् ।
युष्माभिरस्य निर्द्देश: सर्वथा परिपाल्यताम् ॥ ५ ॥
आसंस्तत्र यिहूदीनां शुच्यर्था: षड्घटा: स्थिता: ।
द्रोणद्विद्रोणपूर्य्यास्ते प्रस्तरेण विनिर्म्मिता: ॥ ६ ॥
योशुस्तानब्रवीद्वाभि: पूरयन्तु घटानिमान् ।
आकर्णं पूरयामासुस्ते च तास्तस्य वाचया ॥ ७ ॥
योशुराज्ञावहान् प्राह भूयस्तान् परिचारकान् ।
इत: किञ्चित् समुद्धृत्य भोज्याध्यक्षाय दीयताम् ॥ ८ ॥
भोज्याध्यक्ष स्तदास्वाद्य जलं मद्यत्वमागतम् ।
अब्रवीद्वरमाहूय कीदृशोयं कृतिस्तव ॥ ९ ॥
परिवेषयति ह्यग्रे सर्व्वोऽपि मद्यमुत्तमम् ।
प्रयच्छत्यवरञ्चैव पर्य्याप्तपानत: परम् ॥ १० ॥
किन्तु त्वं कालमेतावदरक्षत् सर्व्वथोत्तमम् ।
इत्थं कान्नापुरे कार्य्यं योशुनाद्यं प्रदर्शितम् ॥ ११ ॥

अनेन विमलं तस्य यशो व्याप्तमलौकिकम्।
व्याप्तसंस्थं तदालोक्य सर्व्वं तद्देशवासिनः॥ १२॥
यिरूशालिममागत्य ततो निस्तारपर्व्वणि।
यीशुर्गवादिविक्रेतॄन् ददर्श धर्म्मकेतने॥ १३॥
स क्षुद्रतृणसंघाते रचयित्वा ततः कशाम्।
बहिश्चक्रे गवादीनि यीशुर्धर्म्मनिकेतनात्॥ १४॥
मुद्राव्यापारिणां क्षिप्ता मुद्राधारांस्ततः परम्।
तेषां मुद्राश्च विक्षिप्य कपोतवणिजोऽब्रवीत्॥ १५॥
सान्नयाम् कपोतान् सर्व्वान् भवन्तोऽपनयन्त्वितः।
मत्पित्राराधनस्थानं मा कुर्व्वन्तु वणिग्गृहम्॥ १६॥
"त्वद्गृहार्थः समुद्योगो मामवश्यं ग्रसिष्यति।"
इत्युक्तिः कर्म्मणैतेन तच्छिष्यैरपि संस्मृता॥ १७॥
यिहूदीयास्ततः प्राहुरीदृशेनैव कर्म्मणा।
किं भवान् दर्शयत्यस्मान् सत्याभिज्ञानमैश्वरम्॥ १८॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत्।
यूयं धर्म्मगृहं भङ्क्त निर्म्मास्ये त्रिदिनेष्वहम्॥ १९॥
स्वशरीरं समाश्रित्य यीशुना कथितं वचः।
अबुद्धा विस्मिता भूयो यिहूदीया वचोऽब्रुवन्॥ २०॥
षट्चत्वारिंशता वर्षैर्मन्दिरं यद्विनिर्म्मितम्।
त्रिदिनाभ्यन्तरे तत्त्वं कथमुत्थापयिष्यसि॥ २१॥
रहस्यं यीशुवाक्यस्य शिष्यास्तन्मरणान्तरम्।
सस्मरुस्तस्य वाक्येषु शास्त्रे च प्रत्ययान्विताः॥ २२॥
तत्क्रिया यिरूशालेमे वीक्ष्य निस्तारपर्व्वणि।
विश्वस्तास्तस्य माहात्म्ये बभूवुर्बहवो जनाः॥ २३॥
यीशुस्तु तेषु विश्वासं नाकरोत् परचित्तवित्।
यदजानादभिप्रायं स नराणां शुभाशुभम्॥ २४॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि द्वितीयोऽध्यायः।

## तृतीयोऽध्यायः

St. John, Chapter 3. [ Christ teacheth Nicodemus the necessity of regeneration. Of faith in his death. The great love of God towards the world. Condemnation for unbelife. The baptism, witness, and doctrine of John concerning Christ. ]

अथ रात्रौ यिहूदीनां फरीशी शासकः सुधीः ।
योशोरन्तिकमागत्य नीकदीमाभिधोऽब्रवीत् ॥ १ ॥
गुरो वयं विजानीमस्त्वामीशादागतं गुरुम् ।
क्रियामेवंविधां कर्त्तुं न समर्थो ह्यतद्विधः ॥ २ ॥
योशुस्तस्य वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
अलब्ध्वाभिनवं जन्म नेक्षते कश्चिदीश्वरम् ॥ ३ ॥
नीकदीमस्तदाकर्ण्य पुन स्तमिदमब्रवीत् ।
भगवन् कथमाप्नोति वृद्धो जन्म नवं नरः ॥ ४ ॥
प्रविश्य जठरं मातुः किं पुनः स प्रजायते ।
योशुस्तस्य वचः श्रुत्वाः वाक्यमुत्तरमब्रवीत् ॥ ५ ॥
अजनित्वा जलात्मभ्यां कश्चिन्नेश्वरमीक्षते ॥ ६ ॥
यत् किञ्चित् मांसजं वस्तु मांसमेवामनन्ति तत् ।
तदात्मानमवेहि त्वं सत्यं यज्जातमात्मनः ॥ ७ ॥
न त्वया विस्मयः कार्य्यो मदुक्तेऽस्मिन् पुनर्भवे ॥ ८ ॥
शब्दं शृणोषि वायोस्त्वं स्वेच्छया वहतो यथा ।
न जानासि कुतोऽभ्येति स वायुः कुत्र याति वा ॥ ९ ॥
तथात्मनः प्रजाता ये मानवाः शुद्धबुद्धयः ।
तेषामाहात्म्यनाहर्त्ती न कश्चिज् ज्ञातुमर्हति ॥ १० ॥
नीकदीमः पुनः प्राह कथमेतद्भवेद् गुरो ।
योशुः प्राह न वेत्स्येतदिस्रायेलगुरो कथम् ॥ ११ ॥
प्रत्यक्षतो यदस्माभिर्दृष्टं विज्ञातमेव वा ।
तदेव कथ्यते तथ्यं युष्माभिस्तन्न गृह्यते ॥ १२ ॥

मद्गुणे पार्थिवे ज्ञाने न श्रद्धा यदि वो भवेत् ।
स्यात् कथं तर्हि वः श्रद्धा स्वर्गीयायां मतौ मम ॥ १३ ॥
न कश्चित् स्वर्गमारूढो यस्तु स्वर्गात् समागतः ।
स्वर्गवासी स विज्ञेयः केवलं मानवात्मजः ॥ १४ ॥
मरुभूमौ स्थितः सर्पो मोशिनोच्चोन्नतो यथा ।
तथा मनुष्यपुत्रोऽपि यास्यत्युच्चतमं पदम् ॥ १५ ॥
तस्मिन् विश्वाससम्पन्ना न नङ्क्ष्यन्ति कदाचन ।
तत्प्रसादाच्च कल्यान्ते लप्स्यन्तेऽनन्तजीवनम् ॥ १६ ॥
ईश्वरः परमं प्रेम चकार जगतीं प्रति ।
एकमेवाद्वितीयं यद्ददौ पुत्रं विभुः स्वयम् ॥ १७ ॥
य एतस्मिन्महाभागे प्रीतिं कुर्व्वन्ति साधवः ।
ते मृत्युबन्धनं छित्वा लप्स्यन्तेऽनन्तजीवनम् ॥ १८ ॥
न हि विश्वविचारार्थमोशेन प्रहितः सुतः ।
प्रहितः सर्व्वभूतानां परित्राणाय केवलम् ॥ १९ ॥
ये तस्मिन् भक्तिमम्पन्ना नास्ति तेषां विचारणा ।
प्राङ्निर्व्वृत्तविचारास्ते ये तत्राश्रद्धयान्विताः ॥ २० ॥
विचारः कर्म्मवैगुण्यं तेषामत्र निदर्शितम् ।
यत्ते ज्योतिः परित्यज्य भेजे सम्मोहजं तमः ॥ २१ ॥
निजदुष्कृतकर्म्माभिव्यक्तिसाध्वसशङ्किताः ।
ज्योतिर्द्विषन्ति ते भ्रष्टा ज्योतिषो दूरतः स्थिताः ॥ २२ ॥
ईश्वरानुगृहीतानां व्यक्तये निजकर्म्मणाम् ।
समुपैति सदाचारः परं ज्योतिरकल्मषम् ॥ २३ ॥
यिहूदियामथाभेत्य योशुः शिष्यसमन्वितः ।
शुद्ध्यर्थं स्नापयामास मानवांस्तत्र संस्थितः ॥ २४ ॥
कारावन्धनतः पूर्व्वं शालिमान्तिकसंस्थितः ।
ऐनोने स्नापयामास योहनोऽपि बहूदके ॥ २५ ॥
अथ योहनशिष्याणां यिहूदीयेन केनचित् ।
वादः सप्रतिवादोऽभूच्छुचितत्त्वविनिर्णये ॥ २६ ॥

योहनान्तिकमागत्य ततस्त इदमब्रुवन् ।
गुरो यर्द्दनतीरे यस्त्वया सार्द्धमवस्थितः ॥
साक्ष्यं च विषये यस्य त्वयैव कथितं पुरा ।
स्नापयत्यधुना सर्व्वान् स शुद्ध्यर्थं समागतान् ॥ २७ ॥
योहनस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
न ग्राह्यं नरैः किञ्चिद् यन्न स्वर्गात् समागतम् ॥ २८ ॥
नाहं ख्रीष्टस्तदग्रे तु प्रेषितः परमात्मना ।
इत्युक्तं यन्मया पूर्व्वं भवन्तस्तत्र साक्षिणः ॥ २९ ॥
यः कन्यां विधिनाप्नोति तं वदन्ति वरं जनाः ।
मोदते वरबन्धुस्तु वरशब्देन केवलम् ॥ ३० ॥
यो मया वाञ्छितो हर्षः सोऽधुना पूर्णतां गतः ।
ह्रसितव्यं मयेदानीं भाव्यमुच्चेन तेन च ॥ ३१ ॥
ऊर्द्ध्वतो यः समायाति स सर्व्वोपरि तिष्ठति ।
भुवो यस्तु समायाति सोऽधश्एवावतिष्ठते ॥ ३२ ॥
पार्थिवः पार्थिवान् भावान् सदा वदति मानवः ।
स्वर्ग्यां दृष्टाञ् श्रुतां श्चैव स्वर्गीयानेव भाषते ॥ ३३ ॥
तत्साक्ष्यं नैव गृह्णन्ति मायोपहतचेतसः ।
ये तु गृह्णन्ति ते सत्यं जानन्ति परमेश्वरम् ॥
ईशस्य हि वचो ब्रूते ईश्वरप्रेरितो जनः ॥ ३४ ॥
किञ्चिदप्यात्मने मेशः परिमाय प्रयच्छति ।
तदीयं प्रियपुत्राय पिता सर्व्वं प्रदत्तवान् ॥ ३५ ॥
ये त्वेतस्मिन्महाभागे प्रीतिं कुर्व्वन्ति साधवः ।
क्रोडीकृत्यावतिष्ठन्ते ते सर्व्वेऽनन्तजीवनम् ॥ ३६ ॥
यस्त्वेनमवजानाति न स द्रक्ष्यति जीवनम् ।
प्रत्युतेश्वरजः क्रोधः सदा तमधितिष्ठति ॥ ३७ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्रीकैइपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः

St. John, Chapter 4. [ Christ talketh with a woman of Samaria, and revealeth himself unto her. His disciples marvel. He declareth to them his zeal to Gods' glory. Many Samaritans believe on him. He departeth in to Galilee, and healeth the ruler's son that lay sick at Capernaum. ]

अथाभुग्रदयमाकर्ण्य यीशोर्मुख्याः फरीशिनः ।
तमत्यन्तमसूयन्त इदमाहुः परस्परम् ॥ १ ॥
योहनादधिकाञ्छिष्यान् करोति यीशुरात्मवान् ।
स्नापयत्यधिकं चैव स्वशिष्यैर्विरतः स्वयम् ॥ २ ॥
यीशुस्तेषामभिप्रायं विदित्वा परमात्मजः ।
यिहूदियां परित्यज्य प्रतस्थे गालिलं प्रति ॥ ३ ॥
शमरीयाप्रदेशेन गत्वा तत्कूपसन्निधिम् ।
याकोबो यत्र पुत्राय दत्तवान् भूमिमात्मनः ॥
उपविष्टोऽध्वना श्रान्तः शुकराख्यपुरान्तिके ।
षड्होराप्रमितः कालस्तदा प्राय उपागतः ॥ ४ ॥
तत्रापः काञ्चिदुद्धर्तुं शमरीयकुलस्त्रियम् ।
यीशुरभ्यागतां वीक्ष्य तामिदं वाक्यमब्रवीत् ॥ ५ ॥
मदन्तेवासिनः सर्व्वे भक्ष्यार्थं नगरं गताः ।
अतः सलिलमुद्धृत्य देहि त्वं तृषिताय मे ॥ ६ ॥
सा नारी तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
यिहूदीयो भवाञ् जात्या शमरीयेषु मे जनिः ॥
न सौम्य व्यवहारोऽस्ति यिहूदी-शमरीययोः ।
मत्स्पृष्टं सलिलं पातुं कथं प्रार्थयते भवान् ॥ ७ ॥
यीशुस्तस्या वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
ईशदानं त्वमज्ञास्यस्तञ्चेद्वा जलयाचकम् ॥
असंशयं तमेव त्वं पानीयं प्रार्थयिष्यथाः ।
अदास्यत् सदयं सोऽपि जलं तुभ्यं सजीवनम् ॥ ८ ॥

तस्य तद्वचनं श्रुत्वा सा नारीदं वचोऽब्रवीत् ।
भगवन् भवतो वाक्ये संशयोऽस्ति महान् मम ॥ ९ ॥
न जलोद्धारणोपायो भवतोऽत्रास्ति कश्चन ।
कूपश्च गहनो लब्धं त्वया जीवि जलं कुतः ॥ १० ॥
याकोबात् किं भवाञ्छ्रेष्ठो मानस्मत्पूर्व्वं पितामहात् ।
योऽस्मभ्यं दत्तवान् कूपमिमं शीतजलान्वितम् ॥ ११ ॥
याकोबः स्वयमेतस्य कूपस्य सलिलं पपौ ।
तत्पुत्रैः पशुभिश्चास्य जलं चिरमपीयत ॥ १२ ॥
यीशु स्तस्या वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
पिपासिष्यति भूयोऽपि पिबन्नेतज्जलं नरः ॥ १३ ॥
मद्दत्तजलपानात्तु पुनस्तृष्णा न जायते ।
अनन्तजीवनं यावत्तृप्तिरप्यनुवर्त्तते ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा सा योषिदिदमब्रवीत् ।
भगवंस्तज्जलं मह्यं देहि तृष्णानिवर्त्तकम् ॥ १५ ॥
येनात्रागमनक्लेशो नश्येदेकान्ततो मम ।
यीशुस्तामाह कल्याणि स्वभर्त्तारमिहानय ॥ १६ ॥
सा योषिदुत्तरं प्राह मम भर्त्ता न विद्यते ।
यीशुस्तामाह कल्याणि सत्यमेतद्वचस्तव ॥ १७ ॥
आसंस्ते पतयः पञ्च मृता स्ते ह्यधुनानघे ।
इदानीं योऽस्ति ते भर्त्ता स बिभर्त्ति चराचरम् ॥ १८ ॥
यीशोस्तद्वचनं श्रुत्वा सा स्त्रीदं वाक्यमब्रवीत् ।
भगवन्नवगच्छामि भवन्तं सत्यवादिनम् ॥ १९ ॥
एतस्मिन् पर्व्वते ध्यानं चक्रुरस्मत्पितामहाः ।
तत्स्थानं यिरूशालेमेऽस्तीति युष्माभिरुच्यते ॥ २० ॥
यीशुस्तामब्रवीन्नारि कालोऽसौ त्वरते ध्रुवम् ।
यदान्यत्र न गन्तव्यं युष्माभि र्ध्यानसिद्धये ॥ २१ ॥
यूयं धेयमविज्ञाय श्रुत्वा प्रार्थयतान्यतः ।
प्रत्यक्षतश्च यद्दृष्टं तदेवोपास्महे वयम् ॥ २२ ॥

यिहूदीभ्यः परित्राणमिति यद्बहुधा श्रुतम् ।
स एवाभ्यागतः काल इदानीं नात्र संशयः ॥ २३ ॥
इतः प्रभृति कल्याणि श्रद्दधाना उपासकाः ।
सत्यात्मभ्यां करिष्यन्ति प्रार्थनां परमात्मनः ॥ २४ ॥
एवं निरन्तरं भक्त्या ये जनाः पर्य्युपासते ।
ईश्वरः सर्व्वकालेषु तानेव परिमार्गयति ॥ २५ ॥
ईशमेनमवेहि त्वमात्मानं नात्र संशयः ।
स सत्येनात्मनाचैव समाराध्यः सदा जनैः ॥ २६ ॥
सेदमुक्तवती नारी मशीहः ख्रीष्टसंज्ञितः ।
अभेतीति विजानामि स नः सर्व्वं प्रवक्ष्यति ॥ २७ ॥
यीशुस्तस्याः वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
सोऽहं ख्रीष्टोऽस्मि कल्याणि भाषमानस्त्वया सह ॥ २८
तस्मिन्नेव ततः काले शिष्यास्तत्र समागताः ।
संलपन्तं स्त्रिया सार्द्धं यीशुं वीक्ष्य सुविस्मिताः ॥
"किमिच्छति भवान् सार्द्धं स्त्रिया वा भाषते कथम् ।
इत्येवंविधवाक्यानि न तं कानिचिदब्रुवन्" ॥ २८ ॥
ततः स्वकलसं त्यक्त्वा सा नारी नगरं गता ।
आहूय स्वजनान् सर्व्वानिदं वचनमब्रवीत् ॥ ३० ॥
आगच्छन्तु महाभागाः पश्यन्तु तादृशं नरम् ।
यो मह्यमवदत्तत्तन्मया यद् यदनुष्ठितम् ॥ ३१ ॥
स किं ख्रीष्टोऽपरो वेति विजानन्त्वग्रया धिया ।
पौरास्तस्या वचः श्रुत्वा यीशोः सन्निधिमागताः ॥ ३२ ॥
तस्मिन्नेव ततः काले शिष्या स्तमिदमब्रुवन् ।
गुरो भोजनकालोऽयमश्नातु कृपया भवान् ॥ ३३ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
यूयं तन्न विजानीत यद्भक्ष्यं मम वर्त्तते ॥ ३४ ॥
श्रुत्वा तस्य वचः शिष्या इदमाहुः परस्परम् ।
भक्ष्यं केनचिदन्येन किमेतस्मै समर्पितम् ॥ ३५ ॥

यीशुस्नानाद्ध मद्भ्रामोशेच्छाकार्य्यसाधनम् ।
प्रेषितः परमेशेन यतोऽहमवनीतले ॥ ३६ ॥
यथा वेतस्य शस्यानि वीक्ष्य तच्छेदनाहृता ।
आचतुर्म्मासतः पश्चाद् युष्माभिरनुमीयते ॥
तथाहं श्रीक्षमालोक्य सत्यमेव ब्रवीमि वः ।
शस्यच्छेदोचितः कालः सम्प्रतेव समागतः ॥ ३७ ॥
शस्यानां लभते च्छेत्ता वेतनं स्वक्रियोचितम् ।
संगृह्णाति च शस्यानि लब्धुं शाश्वतजीवनम् ॥ ३८ ॥
वपते यस्तु बीजानि यो वा शस्यानि क्रन्तति ।
तावुभौ कर्म्मणैतेन लभेते परमं सुखम् ॥ ३९ ॥
वपत्येकश्छिनत्यन्य इति या लौकिकी कथा ।
सात्रैव सत्यरूपेण सर्वथा प्रतिभाति मे ॥ ४० ॥
छेत्तुं तादृशशस्यानि भवन्तः प्रेषिता मया ।
अपरेषां श्रमस्तेत्र प्रविशेयवाऽकृतश्रमाः ॥ ४१ ॥
अथ नारीमुखाच्छ्रुत्वा सर्व्वं तत्पुरवासिनः ।
शमरीयाः स्थितिं तस्य तत्र भक्त्या ययाचिरे ॥ ४२ ॥
स तेषामनुरोधेन स्थितस्तत्र दिनद्वयम् ।
बहूनां जनयामास विश्वासं परया गिरा ॥ ४३ ॥
श्रद्दधाना: परां वाचं जनास्तां स्त्रियमब्रुवन् ।
इदानीं नोऽत्र विश्वासो न त्वद्वाक्यप्रयुक्तितः ॥ ४४ ॥
सोऽस्माभिः संश्रुतः सम्यग् विज्ञातो मननेन च ।
प्रत्यक्षतश्च संदृष्टः ख्रीष्टोऽयमिति नो मतिः ॥ ४५ ॥
स्वदेशे पूज्यते नाप्त इति मत्वा ततः प्रभुः ।
दिनद्वये व्यतीते तु यीशुर्गालीलमागतः ॥ ४६ ॥
यिरूशालेमहृत्तान्तं निशम्य पर्व्वणि स्थिताः ।
जगृहुर्गालिलीयास्तं सादरं परमात्मजम् ॥ ४७ ॥
ततो गालीलदेशस्थं यीशुः "कान्नापुरं" ययौ ।
तोयं द्राक्षारसीकृत्य स यत्र ख्यातिमार्ज्जयत् ॥ ४८ ॥

तदा राजजन: कश्चित् पीड़ितं पुत्रमात्मन: ।
दृष्ट्वा कफर्णाहुमे मृतकल्पमवस्थितम् ॥
गालीलदेशमागत्य सत्वरं यीशुसन्निधिम् ।
गत्वा निवेदयामास पुत्रो मे रुग्णतामिति ॥ ४९ ॥
यीशुस्तत्राह विश्वासो युष्माकं लक्षणानुग: ।
स प्राह भगवन्नेहि प्राङ्मृत्योरात्मजस्य मे ॥ ५० ॥
यीशुस्तमाह याहि त्वं पुत्रस्ते जीवति ध्रुवम् ।
स तस्मिन्प्रतिविश्वस्य प्रतस्थे राजपूरुष: ॥ ५१ ॥
तमागच्छन्तमालोक्य पथि तत्परिचारका: ।
अब्रुवन्नाथ पुत्रस्ते जीवत्येव निरामय: ॥ ५२ ॥
कस्मिन्दण्डे रुज: शान्तिर्जातेति पृष्टवान् स तान् ।
त ऊचु: सप्तहोरायां ह्योऽभवज्ज्वरमोचनम् ॥ ५३ ॥
सोऽथ पुत्रज्वरत्यागं यीशुना कथिते क्षणे ।
विज्ञाय स्वजनै: सार्द्धं व्यश्वसीत् परमात्मजे ॥ ५४ ॥
यीशुर्गालीलमागत्य यिहूदियाप्रदेशत: ।
अभिज्ञानार्थकं कर्म्म द्वितीयं कृतवानिदम् ॥ ५५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित खीष्टोपनिषदि चतुर्थोऽध्याय: ।

---

## पञ्चमोऽध्याय:

St. John, Chapter 5. [ Jesus on the sabbath day cureth him that was diseased eight and thirty years. The Jews therefore cavil, and persecute him for it. He answereth for himself, and reproveth them, shewing by the testimony of his Father, of John, of his works, and of the scriptures, who he is. ]

अथ पर्व्वणि संप्राप्ते यिहूदिया-निवासिनाम् ।
यीशुरभ्याययौ हृष्टो यिरूशालेमपत्तनम् ॥ १ ॥

मेषद्वाराख्यदेशस्य सन्निधौ तत्र वर्त्तते ।
चलिन्दैः पञ्चभिर्युक्तं "वैथेष्दा"ख्यं महत् सरः ॥ २ ॥
विशुष्काङ्गान्धखञ्जाद्या रोगिणस्तेषु संस्थिताः ।
स्वद्रूतजलावःकम्पस्पर्शेनारोग्यकाङ्क्षिणः ॥ ३ ॥
आसीत्तत्र नरः कश्चित् क्षीणमांसबलेन्द्रियः ।
त्रिंशदष्टौ च वर्षाणि यावत् कष्टगदान्वितः ॥४ ॥
तं तथा पीड़ितं वीक्ष्य बहुकालादवस्थितम् ।
"किमिच्छसि त्वमारोग्यमि"त्यवाचेश्वरात्मजः ॥ ५ ॥
स प्राह नास्ति मे कश्चित्तादृशो मानवः प्रभो ।
यो वारिकम्पमात्रेण सलिले मां विनिक्षिपेत् ॥ ६ ॥
यावद्दुःखेन गच्छामि तत्राहं स्वयमुत्थितः ।
तावद् यातत्परः कश्चित् प्राङ्मत्तः सहसा जनः ॥ ७ ॥
योशुः प्राह त्वमुत्तिष्ठ खट्वामादाय गच्छ च ।
स प्राप तत्क्षणं स्वास्थ्यं सखट्वो विचचार च ॥ ८ ॥
खट्वां वहन्तमालोक्य यिहूदीयास्तमब्रुवन् ।
विश्रामदिवसे खट्वावहनं तव नोचितम् ॥ ९ ॥
सोऽवदन्मम यो रोगं निराचक्रे दयान्वितः ।
खट्वावहनमप्येतदादिदेश स एव मे ॥ १० ॥
कोऽसौ तवोपदेष्टेति स पृष्टो न वचोऽब्रवीत् ।
बहुमानवसंसर्गाद् योशुरन्तर्दधौ यतः ॥ ११ ॥
धर्मधाम्नि समासाद्य पुनस्तं योशुरुक्तवान् ।
सुस्थोऽसि मा कृथाः पापमन्यथा तेऽशुभं भवेत् ॥ १२ ॥
सोऽपसृत्य यिहूदीयानब्रवीद् विगतामयः ।
असाध्यव्याधितो मुक्तिं योशुर्मे व्यदधाद्विति ॥ १३ ॥
विश्रामदिवसे चक्रेऽत्र योशोः कर्म निशम्य ते ।
बाधितुं तं निहन्तुं च यिहूदीयाः समुद्यताः ॥ १४ ॥
योशुस्तेषामभिप्रायं विज्ञायोत्तरमब्रवीत् ।
मयाद्य क्रियते कर्म मत्पित्रा क्रियते यथा ॥ १५ ॥

इत्थं वदन्तमात्मानमात्मजं परमात्मन: ।
तथा स्वेश्वरयोरैक्यं कथयन्तं जनान्तिके ॥
विधिं विश्रामवारस्य लङ्घयन्तंच शाश्वतम् ।
योशुमिकान्ततो हन्तुं यिहूदीया: प्रयेतिरे ॥ १६ ॥
योशुस्तेषामभिप्रायं विज्ञायोत्तरमब्रवीत् ।
युष्मभ्यं भूय एवाहं ब्रवीमि परमं वच: ॥ १७ ॥
पितु: कार्य्यमनोक्षित्वा न किञ्चित् कुरुते सुत: ।
स हि सर्व्वेषु कालेषु पितुर्वर्त्मानुवर्त्तते ॥ १८ ॥
करोति परमं प्रेम पिता पुत्रे निरन्तरम् ।
यत् स्वयं कुरुते कर्म्म दर्शयत्या जं च तत् ॥ १९ ॥
एतेभ्योऽपि महत् कर्म्म स पुत्रं दर्शयिष्यति ।
यद्दृष्ट्वा महदाश्चर्य्यं युष्माभिरभिमंस्यते ॥ २० ॥
पिता दत्वा यथा प्राणानुत्थापयति देहिन: ।
ताञ्जीवयति पुत्रोऽपि तथा यानभिकाङ्क्षति ॥ २१ ॥
पिता जन्तो र्न कस्यापि विचारं कुरुते स्वयम् ।
विचारस्य समस्तस्य शक्तिं पुत्राय दत्तवान् ॥ २२ ॥
पुत्रे कुर्य्यात् परं प्रेम पितृवत् कारणादत: ।
पुत्रतोषं विना यस्मान्न पिता परितुष्यति ॥ २३ ॥
प्रेरके मम विश्वस्य य: शृणोति वचो मम ।
स मृत्योर्ब्बन्धनं छित्वा लभतेऽनन्तजीवनम् ॥ २४ ॥
अचिरादीशपुत्रस्य मृता: श्रोष्यन्ति शब्दनम् ।
तत: परमवाप्स्यन्ति जीवनं चातिरोहितम् ॥ २५ ॥
पितुर्यथात्मनि प्राणा: सन्ति पुत्रेऽपि ते तथा ।
नियन्तृत्वं च जीवानां पिता पुत्राय दत्तवान् ॥ २६ ॥
यस्मात् पुत्रे मनुष्यत्वं पुत्रत्वं च व्यवस्थितम् ।
पितुरादेशतस्तस्मात् स्थिता पुत्रे नियन्तृता ॥ २७ ॥
न चात्र विस्मय: कार्य्य: कालोऽसौ त्वरते ध्रुवम् ।
भूगर्भस्था मृता: सर्व्वे यदा श्रोष्यन्ति तद्ध्वनिम् ॥ २८ ॥

उत्थास्यन्ति पुनः पुण्यास्तदा जीवनलब्धये ।
पापिनस्तु विचारार्थं प्राप्स्यन्ति पुनरुत्थितिम् ॥ २९ ॥
नाहं किमपि शक्नोमि कर्म्म कर्त्तुं ममेच्छया ।
सदा श्रुत्यनुसारेण विचारः क्रियते मया ॥ ३० ॥
नाय्यो मम विचारोऽपि स्वार्थं किञ्चिदनिच्छतः ।
कुर्व्वतः केवलं वाञ्छमस्मत्प्रेरकतुष्टये ॥ ३१ ॥
यदि स्वविषये साक्ष्यं स्वयमेव ददाम्यहम् ।
तत्साक्ष्यं सर्व्वथा मिथ्या भवेन्नास्त्यत्र संशयः ॥ ३२ ॥
प्रयच्छत्यपरः कश्चिन्मदर्थं साक्ष्यमुत्तमम् ।
जानामि सत्यमेवाहं तत्साक्ष्यं स्वार्थवर्ज्जितम् ॥ ३३ ॥
विश्वस्ताः प्रहिता दूता युष्माभि र्योहनं प्रति ।
स सर्व्वथा महाभागो युष्मभ्यं सत्यमब्रवीत् ॥ ३४ ॥
अहं मानवतः साक्ष्यं न गृह्णामि कदाचन ।
परित्राणाय युष्माकं तथापि कथयाम्यहम् ॥ ३५ ॥
स आसीज्ज्वलिता युक्तः प्रदीपोऽधूमको यथा ।
यूयं तत्र क्षणं यावन्मोदमाना व्यवस्थिताः ॥ ३६ ॥
साक्ष्यतो योहनस्यास्ति मम साक्ष्यं महत्तरम् ।
पितुः कर्म्माण्यभीष्टानि यतः सम्पादयाम्यहम् ॥ ३७ ॥
प्रमाणयन्ति कर्म्माणि प्रेष्यत्वं तानि मे ध्रुवम् ।
साक्ष्यं पितु र्जगत्स्रष्टुः श्रुतयोऽप्यत्र निदर्शितम् ॥ ३८ ॥
न युष्माभिः श्रुता वाणी दृष्टं वा तस्य लक्षणम् ।
अविश्वासाच्च तत्प्रेष्ये तत्कथा नावधार्य्यते ॥ ३९ ॥
भवन्तः प्राप्तुमिच्छन्ति शास्त्रैः शाश्वतजीवनम् ।
प्रमाणयन्ति तान्येव सततं मम सत्यताम् ॥ ४० ॥
एवं ज्ञात्वा निशम्यापि भवन्तो मम लक्षणम् ।
अनन्तजीवनं लब्धुं नागच्छन्ति ममान्तिके ॥ ४१ ॥
अहं मनुष्यसम्मानं न गृह्णामि कदाचन ।
भवतः किन्तु जानामीश्वरप्रेमविवर्ज्जितान् ॥ ४२ ॥

भवन्तो मां न गृह्णन्ति पितु र्नाम्ना समागतम् ।
ग्रहिष्यन्त्यपरं कश्चिन्निजनाम्ना य एष्यति ॥ ४३ ॥
ईश्वरादन्यतोऽलभ्यं हित्वा विमलगौरवम् ।
लौकिकीं भजतां कीर्त्तिं विश्वासो वः कथं भवेत् ॥ ४४ ॥
न पितुरन्तिके युष्मानभियोक्ष्याम्यहं ध्रुवम् ।
युष्माकमभियोक्ता तु मोशिरेव भविष्यति ॥ ४५ ॥
व्यश्वसिष्यत मौशौ चेद्व्यश्वसिष्यत मय्यपि ।
स मामेव व्यपाश्रित्य शास्त्रं लिखितवान् यतः ॥ ४६ ॥
विश्वासस्तस्य लेखेषु युष्माकं न भवेद् यदि ।
वचनेषु मदुक्तेषु विश्वासो वः कथं भवेत् ॥ ४७ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः

St. John. Chapter 6. [ Christ feedeth five thousand men with five loaves and two fishes. Thereupon the people would have made him king. But withdrawing himself, he walked on the sea to his disciples : reproveth the people flocking after him, and all the fleshly hearers of his word : declareth himself to be the bread of life to believers. Many disciples depart from him. Peter confesseth him. Judas is a devil. ]

अथोपागतमालोक्य गालीलाब्धेः परं तटम् ।
योशुमारोग्यदातारमन्वीयु र्बहवो जनाः ॥ १ ॥
ततः पर्व्वतमारुह्य पर्व्वैष्यदूरवर्त्तिनि ।
नरसङ्घान् समालोक्य योशुः फिलिपमब्रवीत् ॥ २ ॥

आगच्छन्ति निराहारा बहवो मां दिदृक्षया ।
पूपाः कुत्रोपलभ्यन्ता एतेषां परितृप्तये ॥ ३ ॥
अभिज्ञस्य निजार्थेषु गदतस्तु परीक्षया ।
अबुद्धा वचनं तस्य फिलिपो वाक्यमब्रवीत् ॥ ४ ॥
पादरूप्यैः क्रीयन्ते चेत् पूपा द्विशतसंख्यकैः ।
भविष्यन्ति न पर्य्याप्ता अमीषां परितृप्तये ॥ ५ ॥
तन्निशम्यान्द्रियः प्राह सन्तीह करुणामय ।
मीनौ द्वौ पञ्च पूपाश्च शिशोः कस्यचिदन्तिके ॥ ६ ॥
यीशोरादेशतः सर्वे तत अभ्यागता जनाः ।
तत्रोपविविशुः प्रायः पञ्चसाहस्रसंख्यकाः ॥ ७ ॥
तान् पूपान् मीनकौ तौ च संगृह्योत्वा ततः स्वयम् ।
अतिथिभ्योऽर्पयामास धन्यवादपुरःसरम् ॥ ८ ॥
ततस्तेषु सुतृप्तेषु स शिष्यानिदमादिशत् ।
गृह्णीत पूपभग्नांशानवशिष्टानशेषतः ॥ ९ ॥
तस्य वाक्यानुसारेण जनानां भोजनात् परम् ।
शिष्या द्वादश शिष्टानि डल्लकानि समादधुः ॥ १० ॥
एतच्चालौकिकं कर्म्म संवीक्ष्याभ्यागता जनाः ।
अयं भावी परित्रातेत्येवमेवाब्रुवन् समम् ॥ ११ ॥
एते मां नृपतिं कर्त्तुं बलादेष्यन्ति मानवाः ।
इति मत्वा रहः शीघ्रं यीशुः पर्व्वतमभ्यगात् ॥ १२ ॥
यीशोः शिष्याश्च सन्ध्यायां समुद्रतटमागताः ।
सर्व्वे कफरनाहूमं नौकया गन्तुमुद्यताः ॥ १३ ॥
प्रायः क्रोशद्वयं यावद् यदा ते समुपस्थिताः ।
तमोऽभूदपागमच्छीघ्रं यीशुश्च नागतस्तदा ॥
वातिस्म प्रबलो वायु शुक्षोभ च महोदधिः ॥ १४ ॥
तस्मिंस्ते दारुणे काले व्रजन्तं सागरोपरि ।
यीशुं निकटमायान्तं दृष्ट्वा भयकातराः ॥ १५ ॥

माभैष्टेति गुरोर्व्वाक्यमथ तथ्यं निशम्य तं ।
अगृह्णुस्तं ततो नौका सहसा तीरमागता ॥ १६ ॥
अथ ये पूपभोक्तारोऽपरपारे व्यवस्थिताः ।
योशुं तेऽप्यनुसन्धाय परं पारमुपागताः ॥ १७ ॥
तमवाप्य ततः प्राहुः "कदेहागतवान् भवान्" ।
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ १८ ॥
दृष्टालौकिककर्म्माणि यूयं मां नेह मृग्यथ ।
मदर्थेऽध्यसायो व स्तत्पूपादनलम्भिजः ॥ १९ ॥
न विनश्वरभक्ष्यार्थं करणीयः परिश्रमः ।
अविनश्वरभक्ष्यस्य लाभाय क्रियतां श्रमः ॥ २० ॥
अर्पयिष्यति युष्मभ्यं मानवात्मज एव तत् ।
पिता समस्तकर्त्तृत्वं यतस्तस्मै प्रदत्तवान् ॥ २१ ॥
त ऊचुः किं करिष्याम ईश्वराभीष्टसिद्धये ।
तदात्मजे परा श्रद्धा कार्य्येति योशुरब्रवीत् ॥ २२ ॥
त ऊचुः किमभिज्ञानं दर्श्यते कर्म्म वा त्वया ।
व्यक्तव्यो येन विश्वास स्त्वय्यस्माभिरसंशयम् ॥ २३ ॥
प्रान्तरेऽभक्ष्य"मान्ना" मस्मत्पूर्व्वपितामहाः ।
तदाप्तवचने स्तथ्यमस्माभिरवबुध्यते ॥ २४ ॥
योशुस्तानाह वः स्वर्गं न भक्ष्यं मोशिरभ्यधात् ।
स्वर्गीयो मे पिता किन्तु ददाति भक्ष्यमुत्तमम् ॥ २५ ॥
स एवेश्वर आहार योऽवरुह्य त्रिविष्टपात् ।
प्रजास्तर्प्पयते प्राणैः प्रज्ञालोकसमन्वितैः ॥ २६ ॥
त ऊचु दीर्घकालार्थं तद् भक्ष्यं देहि नः प्रभो ।
योशुस्तानाह तद्भक्ष्यमहमेव न संशयः ॥ २७ ॥
मामेकं शरणं प्राप्तं क्षुधा जातु न बाधते ।
मयि विश्वसतस्तृष्णा न कदापि प्रजायते ॥ २८ ॥
यूयं पश्यथ मां नित्यं विश्वासोऽस्ति न वो मयि ।
इत्यहं बहुशस्त्वस्तु युष्मभ्यं पूर्व्वमुक्तवान् ॥ २९ ॥

यद्ददाति पिता मह्यं तदायाति मदन्तिके ।
प्रतिजानीत मे भक्तो न कदाचिद् विनश्यति ॥ ३० ॥
मदीयाभीष्टसिद्ध्यर्थं न स्वर्गादहमागतः ।
यतोऽहमवनीं प्राप्तः पैतृकाभीष्टसिद्धये ॥ ३१ ॥
तस्याभीष्टं तदीयस्य वस्तुनः परिरक्षणम् ।
नापहारणमन्त्येश्च चरमोत्थापनं तथा ॥ ३२ ॥
श्रद्धया भजतः पुत्रमनन्तजीवनागतिः ।
चरमे दिवसे तस्य पुत्रेणोत्थापनं तथा ॥ ३३ ॥
"अहं स्वर्गीय आहार" इति वाक्यं निशम्य ते ।
यीशुसामर्थ्यमाश्रित्य यिहूदीया अतर्कयन् ॥ ३४ ॥
अयं यीशुरिति ख्यातो योषेफस्य सुतो न किम् ।
वयं यस्य विजानीमः पितरं मातरं तथा ॥ ३५ ॥
स कथं वदति स्वर्गादहमागतवानिति ।
यीशुस्तेषामभिप्रायं विज्ञायोत्तरमब्रवीत् ॥ ३६ ॥
यदिदं भक्ष्यमाख्यातं युष्मभ्यं तत्त्वतो मया ।
न तत्तर्केण जानन्ति मानवा अल्पबुद्धयः ॥ ३७ ॥
न मामुपैति तर्केण न शास्त्रवचनेन वा ।
स एव मां नरोऽभ्येति यमाकर्षति मत्पिता ॥ ३८ ॥
भविष्यन्ति नराः सर्व्वे परमेशेन शिक्षिताः ।
इत्येवं बहुधामानां श्रुतयोऽप्यन्ववर्णयन् ॥ ३९ ॥
तस्मात् पित्रा परमेशेन शिक्षिता ये च मानवाः ।
आप्नुवन्ति महात्मानस्त एव मां न संशयः ॥ ४० ॥
न चक्षुषा नरः कश्चित् पितरं परिदृष्टवान् ।
ईश्वरप्रेषित स्त्वेको दृष्टवानजमीश्वरम् ॥ ४१ ॥
यो मामेवं विजानाति सोऽनन्तं सुखमश्नुते ।
अहमेवाक्षयो भक्ष्यः सत्यमेतद् ब्रवीम्यहम् ॥ ४२ ॥
"मान्नां" भुक्त्वापि युष्माकं मृताः पूर्व्वपितामहाः ।
भुक्त्वैतत्तु दिवो भक्ष्यं मृत्युं तरति मानवः ॥ ४३ ॥

सोऽहमेवात्मयो भक्ष्यः स्वर्गात् क्षितिमुपागतः ।
भक्ष्यमेतन्नरो भुक्त्वा लप्स्यतेऽनन्तजीवनम् ॥ ४४ ॥
अहमेव प्रदास्यामि भक्ष्यार्थं मांसमात्मनः ।
नात्मार्थं नापि कामार्थं जगद्धिताय केवलम् ॥ ४५ ॥
"मम मांसं प्रदास्येऽहमि"ति वाचं निशम्य ते ।
यिहूदीया विवादेन कथां चक्रुः परस्परम् ॥ ४६ ॥
भोजनायात्मनो मांसं कथं नोऽयं प्रदास्यति ।
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ४७ ॥
मम मांसं न खादित्वा न पित्वा मम शोनितम् ।
युष्माभिः परमं श्रेयो मनसापि न लप्स्यते ॥ ४८ ॥
योऽस्ति मे सात्त्विकं मांसं पिबतीदं च शोनितम् ।
मयैवोत्थापितः सोऽन्ते लप्स्यतेऽनन्तजीवनम् ॥ ४९ ॥
यो मद्रुधिरमांसाभ्यां तृप्तो भवति मानवः ।
तिष्ठाम्यहं सदा तस्मिन् सच मय्येव तिष्ठति ॥ ५० ॥
प्रेषितो जीवता पित्रा तेन जीवाम्यहं यथा ।
जीविष्यति नरः प्राश्य तथा मां मानवात्मजम् ॥ ५१ ॥
एतदेव परं भक्ष्यं न समं मान्नया तया ।
यां भुक्त्वा मृत्युमापन्ना युष्मत्पूर्व्वपितामहाः ॥ ५२ ॥
एतदालम्वनं श्रेष्ठमेतदालम्वनं परम् ।
एतदालम्वनं ज्ञात्वा लभतेऽनन्तजीवनम् ॥ ५३ ॥
इति धर्म्मगृहे तस्य वचः कफरणाहूमे ।
शिष्याः श्रुत्वा ब्रुवन्नेतदवोध्यं सर्व्वमानवैः ॥ ५४ ॥
यीशुस्तेषामभिप्रायं ज्ञात्वेदं वाक्यमब्रवीत् ।
युष्माकं प्रबला भीतिर्यदि मद्वाक्यमात्रतः ॥
तर्हि मां तत्त्वतो ज्ञात्वा कथं स्थास्यथ निश्चलाः ॥ ५५
प्राप्यन्ते ह्यात्मना प्राणा न मांसमुपकारकम् ॥ ५६ ॥
यदिदं ज्ञानमाख्यातं युष्मभ्यं वचसा मया ।
आत्मैव तत्परं ज्योति स्तदेव जीवनं परम् ॥ ५७ ॥

अथ ज्ञात्वान्यचित्तत्वः स्वगतिं श्रीयुरब्रवीत्।
अविश्वासहतज्ञाना: सन्ति युष्मासु केचन ॥ ५८ ॥
कथये भूय एवाहमेतस्मादेव कारणात्।
पितुराज्ञां विना कश्चिन्न मामुपैतुमर्हति ॥ ५८ ॥
एतच्छ्रुत्वा वचस्तस्य तस्माच्चलितमानसा: ।
बहवोऽपाव्रजञ्छिष्यास्तं त्यक्त्वा परमात्मजम् ॥ ६० ॥
ततः स द्वादशाप्राक्षीत् सम्मतानन्तवासिनः ।
किं यूयमपि मां त्यक्त्वा गन्तुमन्यत्र वाञ्छथ ॥ ६१ ॥
पितरस्तस्य वचः श्रुत्वा शिमोन इदमब्रवीत्।
गुरो वयं क्व यास्यामो हित्वा त्वां मोक्षवादिनम् ॥ ६२ ॥
जीवतः परमेशस्य पुत्रस्त्वं खीष्टनामकः ।
इत्यस्माकं ध्रुवा बुद्धिर्विश्वासश्च स्थिरस्त्वयि ॥ ६३ ॥
अथैष्कारियोदुपाख्यं स यिहूदां गुरुद्रुहम्।
शत्रुपक्षाश्रितं मत्वा प्राब्रवीत् परमात्मजः ॥ ६४ ॥
य इमे वरिता यूयं शिष्या द्वादशसंख्यकाः ।
तत्रापिएकः स्थितो दुष्टो यो मां दास्यति शत्रवे ॥ ६५ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-खीष्टोपनिषदि षष्ठोऽध्यायः ।

---

## सप्तमोऽध्याय:

St. John, Chapter, 7. [ Jesus reproveth the ambition and boldness of his kinsmen : goeth up from Galilee to the feast of tabernacles : teacheth in the temple. Divers opinions of him among the people. The Pharisees are angry that their officers took him not, and chide with Nicodemus for taking his part. ]

यीशोरेतत् समाकर्ण्य धर्म्मार्थसहितं वचः ।
तं निहन्तुं मनश्चक्रु यिहुदीया दुराशयाः ॥ १ ॥
यीशुस्तेषामभिप्रायं विज्ञाय परमात्मजः ।
यिहुदीयां परित्यज्य शीघ्रं गालीलमाययौ ॥ २ ॥
ततश्चोटजवासाख्य उत्सवे समुपागते ।
यिहुदियां प्रयाहीति यीशुमूचुः सहोदराः ॥ ३ ॥
द्रक्ष्यन्ति तव कर्म्माणि तत्र ते शिष्यसत्तमाः ।
प्रत्यक्षं कुरुते कर्म्म य इच्छेद् विपुलं यशः ॥ ४ ॥
नियतं कुरु कर्म्म त्वं जनानां परिपश्यताम् ।
अस्माकमपि विश्वासो भवेत्तेनाचलस्त्वयि ॥ ५ ॥
यीशुस्तानाह मे कालो नेदानीमप्युपागतः ।
युष्मांस्तु शोभनः कालः सर्व्वदा समुपागतः ॥ ६ ॥
न शक्नोति जगद्द्वेष्टुं युष्मान् मां द्वेष्टि सर्व्वदा ।
यतोऽहं जगतः कर्म्म विनिन्दामि निरन्तरम् ॥ ७ ॥
सम्प्रत्यहं न गच्छामि यूयं यात महोत्सवम् ।
यस्मिन् काले गमिष्यामि स कालो नागतोऽधुना ॥ ८ ॥
ततो भ्रातृषु गच्छत्सु यीशु र्गालीलतो रहः ।
ययावुटजवासाख्यमुत्सवं परमात्मजः ॥ ९ ॥
तत्र तं केचिदन्विष्य चक्रु र्निन्दां परे स्तुतिम् ।
तथापि यिहुदीयानां भयात् मौनं समाश्रिताः ॥ १० ॥
उत्सवस्यार्द्धकालेऽथ प्रविश्य धर्म्ममन्दिरम् ।
यीशुराध्यात्मिकं ज्ञानं सप्रकाशमुपादिशत् ॥ ११ ॥

यिहूदीया सदाकर्ण्य विस्मिता इदमब्रुवन् ।
अनधीत्य कथं जातो ज्ञानविज्ञानवानयम् ॥ १२ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
प्रेषितुः पितुरेतन्मे ज्ञानं यदहमुक्तवान् ॥ १३ ॥
शक्नोतीदं परिज्ञातुं सर्व्वथा पितृकर्म्मकृत् ।
मार्व्वं स्वरं लभते यस्मात् पित्राज्ञां प्रतिपालयन् ॥ १४ ॥
यः स्वतो भाषते जन्तुः स स्वगौरवमीहते ।
यः पितुर्यशसे वक्ति सत्यवक्ता स मानवः ॥ १५ ॥
युष्मभ्यं मोशिना दत्तं शास्त्रीयमनुशासनम् ।
तत्र यूयमुदासीनाः किमर्थं मां जिघांसथ ॥ १६ ॥
तस्य तद्वचनं श्रुत्वा जनसङ्घा स्तमब्रुवन् ।
किं त्वं भूतेन ग्रस्तोऽसि कस्त्वां हन्तुं समीहते ॥ १७ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
वीक्ष्यैकं मामकं कर्म्म भवन्तो विस्मिताः कथम् ॥ १८ ॥
पितृपैतामहप्राप्तं त्वक्छेदं मोशिरभ्यधात् ।
भवद्भिश्छिद्यते सा त्वग् विश्रामदिवसे पुनः ॥ १९ ॥
वर्जयित्वा त्वचश्छेदं यदि वैश्रामिको विधिः ।
तथास्तु रोगमोक्षेऽपि तर्कैरतां मा कुतर्क्यताम् ॥ २० ॥
तं वीक्ष्याथाब्रुवन् केचिद् यिरूशालेमवासिनः ।
नायका यं जिघांसन्ति किमयं न स मानवः ? ॥ २१ ॥
सप्रकाशं वदत्येष न ते किञ्चिद्वदन्ति च ।
ख्रीष्टमेनं विजानन्ति नायकाः किमसंशयम् ? ॥ २२ ॥
विजानीमो वयं कस्मात् स्थानादयमिहागतः ।
न तु केचिद् विजानन्ति ख्रीष्टस्यागमनं भुवि ॥ २३ ॥
यीशुस्तेषामभिप्रायं विज्ञाय परमात्मजः ।
धर्म्मव्याख्याप्रसङ्गेन धर्म्मधाम्नीदमब्रवीत् ॥ २४ ॥
जानन्तोऽपि भवन्तो मां नाभिजानन्ति तत्त्वतः ।
यतो मां प्रेषयामास सत्यात्मा विभुरव्ययः ॥ २५ ॥

न जानन्ति भवन्तस्तं विजानाम्यहमेव तम् ।
यतोऽहमागतस्तस्य सकाशात् परमात्मनः ॥ २६ ॥
इति तस्य वचः श्रुत्वा मानवास्तं जिघृक्षवः ।
परन्त्वप्राप्तकालत्वाद् ग्रहणाय नच क्षमाः ॥ २७ ॥
तस्मिन् केचन विश्वस्य मानवा इदमब्रुवन् ।
इतः किमधिकं चिह्नं ख्रीष्टो नो दर्शयिष्यति ? ॥ २८ ॥
एवं योशुं समाश्रित्य जल्पतो वीक्ष्य मानवान् ।
याजकैः प्रेषितास्तस्य ग्रहणाय पदातयः ॥ २९ ॥
योशुस्तानाह युष्माभि र्मे चिराय वसाम्यहम् ।
अतः परं गमिष्यामि मत्पितुः परमं पदम् ॥ ३० ॥
यूयं मां मृगयिष्यध्वे सदा मद्भावभाविताः ।
किन्तु मां मत्पदं चापि न कदाचिदवाप्स्यथ ॥ ३१ ॥
तच्छ्रुत्वा कथयामासु र्यिहूदीयाः परस्परम् ।
अनेन कुत्र गन्तव्यं यत्रायं नोपलप्स्यते ॥ ३२ ॥
युनानमनुसंप्राप्तो देशतोऽस्माद्बहिर्गतः ।
विप्रकीर्णान् युनानीयान् किमयं शिक्षयिष्यति ? ॥ ३३ ॥
अथ श्रुत्वा वचस्तेषामुत्सवस्यान्तिमेऽहनि ।
जनमध्ये समुत्थाय योशुरुच्चै र्वचोऽब्रवीत् ॥ ३४ ॥
तृषार्त्तो मामुपाश्रित्य पिबत्वापः सुशीतलाः ।
मयि विश्वसतां यस्मान्नित्यां तृप्तिं श्रुति र्जगौ ॥ ३५ ॥
अप्राप्तयशसस्तस्य तदाप्यनर्पितात्मनः ।
उद्दिष्टं ज्ञानमध्यात्मं भक्तान् प्रत्येव केवलम् ॥
समाकर्ण्य जनौघेषु केचिदाप्तं तमब्रुवन् ।
अपरे ख्रीष्टमित्याहुः सन्दिग्धास्त्वदमब्रुवन् ॥ ३६ ॥
गालीलान्नैष्यति ख्रीष्टः किन्त्वसौ वैतलेहमः ।
दायूदवसतिग्रामात्तथा दायूदवंशतः ॥ ३७ ॥
वादिनां ख्रीष्टमाश्रित्य विवादा इत्थमुत्थिताः ।
अनेऽप्यतन्त्त तं धर्त्तं निवृत्तास्तेऽपि शङ्किताः ॥ ३८ ॥

ततः प्रत्याहृतान् राज-पुरुषान् याजकादयः ।
अपृच्छंस्तमनादाय कथं यूयमुपागताः ' ॥ ३८ ॥
त ऊचुस्तस्य वाक्येन वयं सर्व्वे विमोहिताः ।
फरीशिनोऽब्रुवन् यूयमपि किं भ्रान्तिमाश्रिताः ॥ ४० ॥
तस्मिन् किं कोऽपि विश्वस्तः सम्रासकफरीशिषु ॥
तेऽभिशप्ता नरा लोके ये शास्त्रविधिवर्ज्जिताः ॥ ४१ ॥
नीकदीमस्तु नेत्याह नैषा वो मतिरुत्तमाः ।
एकान्तग्राहिता क्वापि न विधे दृश्यते यतः ॥ ४२ ॥
तेऽब्रुवन् गालिलीयः किं भवांस्तस्य समर्थकः ।
अनुसन्धत्स्व गालीलान्नोदेत्याप्तः कदाचन ॥ ४३ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्रीकीर्त्तनिबद्धायां श्रीमद्योहनभाषित-खीष्टोपनिषदि सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः

St. John, Chapter 8. [ Christ delivereth the woman taken in adultery. He preacheth himself the light of the world, and justifieth his doctrine : answereth the Jews that boasted of Abraham. and conveyeth himself from their cruelty. ]

ततस्ते स्वगृहं जग्मुः फरीशि-मुख्ययाजकाः ।
यीशुस्तु स्थानतस्तस्माद् ययौ जैतूनपर्व्वतम् ॥ १ ॥
प्रत्यूषे पुनरागत्य धर्म्मगेहमुपागतः ।
जनमध्यगतो ज्ञानमात्मवानुपदिष्टवान् ॥ २ ॥
तस्मिन्नेव ततःकाले सोपाध्यायाः फरीशिनः ।
दुःशीलां रमणीं कांचिदानीय यीशुमब्रुवन् ॥ ३ ॥
व्यभिचारक्रियाकाले धृतेयं रमणी प्रभो ।
ईदृशीनां शिलाघाते मोशिरस्मान् व्यजिज्ञपत् ॥ ४ ।

विषयेऽस्मिन् भवान् दण्डं विधापयितुमर्हति ।
मायिकं तद्वचः श्रुत्वा यीशू रेखामपातयत् ॥ ५ ॥
पुनः पुनश्च पृष्टस्तैः स इदं वाक्यमब्रवीत् ।
शिलामग्रे क्षिपत्वस्यां यो युष्मासु न पापभाक् ॥ ६ ॥
तस्य तद्वचनं श्रुत्वा स्वं स्वं दोषं निरूप्य ते ।
सर्वेऽपि वहिराजग्मुः सा स्त्री तु तत्र संस्थिता ॥ ७ ॥
यीशुस्तामवदद् योषिद् जना दण्डं न ते ददुः ।
ममापि एषा मतिर्याहि माकार्षीर्दुष्कृतं पुनः ॥ ८ ॥
भूय एवं महाभागो यीशुरात्मविदां वरः ।
जनानामवबोधाय वभाषे परमं वचः ॥ ९ ॥
यो मामेकं जगज्ज्योतिरूपैति तमसः परम् ।
सोऽतीत्य सर्व्वदुःखानि लप्स्यते परमं पदम् ॥ १० ॥
फरीशिनस्तदाकर्ण्य तमिदं वाक्यमब्रुवन् ।
स्वार्थमेव ब्रवीषि त्वं न प्रमाणं वचस्तव ॥ ११ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
ब्रवीमि यद्यपि स्वार्थं सत्यमेव वचो मम ॥ १२ ॥
तत्त्वतोऽहं विजानामि ह्यात्मनः प्रभवाप्ययौ ।
न जानन्ति भवन्तस्तु मदीयां चागतिं गतिम् ॥ १३ ॥
युष्माभिर्देहमाश्रित्य विचारः क्रियते सदा ।
न केषामपि मर्त्यानां विचारः क्रियते मया ॥ १४ ॥
सत्यमेव विजानीत विचारं कुर्व्वतोऽपि मे ।
यतस्तिष्ठति मय्येव मम प्रेषयिता पिता ॥ १५ ॥
द्वयोः साक्ष्यं सदा सत्यमिति व्याहरति श्रुतिः ।
अतोऽहं मम तातश्च प्रमाणं प्रत्यये मम ॥ १६ ॥
क्व ते पितेति तैरुक्तो यीशुरुत्तरमब्रवीत् ।
मामज्ञात्वा न कश्चिन्मे पितरं ज्ञातुमर्हति ॥ १७ ॥
इत्युक्तवन्तमागारे धनस्य [illegible]धामनि ।
अप्राप्तकालमद्यापि न कश्चिद्धृतवान् प्रभुम् ॥ १८ ॥

योशु र्भूयोऽपि तानाह ध्रुवमेव व्रजाम्यहम् ।
यूयं मां मृगयिष्यध्वे स्वपापेश्च मरिष्यथ ॥ १९ ॥
अहं सम्प्रति गच्छामि मत्पितुः परमं पदम् ।
तत्र गन्तुं प्रवेष्टुं वा युष्माभिर्नैव शक्यते ॥ २० ॥
तस्य तद्वचनं श्रुत्वा यिहूदीयास्तदाब्रुवन् ।
किमयं स्वयमात्मानं वृथा व्यापादयिष्यति ॥ २१ ॥
योशुस्तानब्रवीत् यूयं मधस्थास्तमसान्विताः ।
ऊर्द्ध्वस्थः सर्व्वदैवाहं शुद्धसत्त्वमयत्वतः ॥ २२ ॥
पितृभुक्तान्नजाद्दोर्षाद्‌दुत्पत्तिर्भवतामिह ।
अनादेरीश्वरादेव जातोऽहमैशसम्पदा ॥ २३ ॥
स एवाहमिति ज्ञानं यदि वो नोपजायते ।
यूयं स्वेनैव पापेन ध्रुवमेव मरिष्यथ ॥ २४ ॥
ततस्तैः कस्त्वमित्युक्तो योशुस्तानिदमब्रवीत् ।
अस्ति मे बहु वक्तव्यं युष्माकं हितकाम्यया ॥ २५ ॥
मत्प्रेरकस्य सत्यस्य मुखाद् यद् यच्छ्रुतं मया ।
मर्त्यानामवबोधाय तदेव कथ्यते मया ॥ २६ ॥
परमेश्वरमाश्रित्य यदिदं ज्ञानमुक्तवान् ।
तेषां तदाज्ञतां बुद्ध्वा योशुस्तान् पुनरब्रवीत् ॥ २७ ॥
यूयं यदा नियत्यैव मामूर्द्ध्वं प्रापयिष्यथ ।
स एवाहमिति ज्ञानं तदेव वो जनिष्यते ॥ २८ ॥
तस्यैव विनियोगेन सर्व्वं कर्म्म करोम्यहम् ।
कथयामि च विज्ञानं तेनैव प्रतिबोधितः ॥ २९ ॥
मत्पिता परमात्मापि सदा तत्प्रियकर्म्मणः ।
पुत्रस्य मम सान्निध्यं न जहाति कदाचन ॥ ३० ॥
इत्युक्तवति विश्वस्तास्तस्मिंस्तद्वचसा ततः ।
योशुः कांश्चित् समालोक्य यिहूदीयान् वचोऽब्रवीत् ॥ ३१ ॥
मय्येव यदि युष्माकं मतिस्तिष्ठति निश्चला ।
ममान्तेवासिनो यूयं सर्व्वथा भद्रमस्तु वः ॥ ३२ ॥

विदित्वा मत्प्रसादेन तं सत्यं परमेश्वरम् ।
पारतन्त्र्यमतिक्रम्य स्वतन्त्रत्वमवाप्स्यथ ॥ ३३ ॥
त ऊचुस्तं वयं वंश्या अब्राहमस्य धीमतः
न वयं कस्यचिद्दासाः केयं तव स्वतन्त्रता ॥ ३४ ॥
यीशुस्तानब्रवीत् पापं यः करोतीह मानवः ।
स दासस्तस्य पापस्य तथ्यमेतद्ब्रवीम्यहम् ॥ ३५ ॥
अनित्यत्वान्न दासस्य सत्ता भवति शाश्वती ।
किन्तु पुत्रस्य नित्यत्वात् स्थिति र्भवति शाश्वती ॥ ३६ ॥
स्वातन्त्र्यं नश्वरं तस्मात् पितृपैतामहार्ज्जितम् ।
यत्तु पुत्रप्रदत्तं तत् स्वातन्त्र्यमविनश्वरम् ॥ ३७ ॥
अब्राहमस्य सन्तानान् युष्माञ्जानाम्यहं ध्रुवम् ।
मद्वाक्यमविदित्वा तु यूयं मां हन्तुमिच्छथ ॥ ३८ ॥
पितुर्दृष्टाऽन्तिके सर्व्वं युष्मभ्यं कथयाम्यहम् ।
युष्माभिः क्रियते सर्व्वं पितृपैतामहोदितम् ॥ ३९ ॥
अब्राहामः पितास्माकमिति ते तमवादिषुः ।
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ४० ॥
अब्राहामस्य सन्ताना यूयं चेदभविष्यथ ।
अकरिष्यथ कर्म्मापि तर्ह्यब्राहामसम्मतम् ॥ ४१ ॥
ईश्वरस्य वचः श्रुत्वा युष्मभ्यं कथयाम्यहम् ।
यूयं मामुद्यता हन्तुमब्राहामो नचेदृशः ॥ ४२ ॥
ते तस्मै कथयामासुर्न वयं व्यभिचारजाः ।
एक एव पितास्माकमीश्वरोऽस्ति सनातनः ॥ ४३ ॥
यीशुस्तानाह चेदीशोऽभविष्यद् भवतां पिता ।
अकरिष्यन् परं प्रेम भवन्तो मयि तत्सुते ॥ ४४ ॥
प्रेषितोऽहं परेशेन न निजाभीष्टसिद्धये ।
प्राप्तोऽस्मि पृथिवीं किन्तु तत एव विनिर्गतः ॥ ४५ ॥
या मया कथिता भाषा न सा वः श्रुतिगोचरा ।
अतो मद्वाक्यतात्पर्य्यं युष्माभिर्नावबुध्यते ॥ ४६ ॥

यूयं दुष्टसम्बन्धा दुष्टकामसाधकाः ।
न सत्यं विद्यते तस्य नरहन्ता स आदितः ॥ ४७ ॥
स मिथ्या भाषते नित्यं जनकः सोऽनृतस्य च ।
सत्यादीशात् समुद्‌भूतः सत्यमेव ब्रवीम्यहम् ॥ ४८ ॥
तादृशो मानवः कश्चिद् युष्मास्वपि न विद्यते ।
मम यो दुष्कृतं कर्म्म लेशतोऽपि प्रमाणयेत् ॥ ४९ ॥
अथ चेत् सत्यमेवाहं ब्रवीमि सर्व्वथा सदा ।
न कथं मयि विश्वासो युष्माकं तत्त्ववादिनि ॥ ५० ॥
ईशवाक्यानि शृण्वन्ति जना ईशानुकम्पिताः ।
न यूयं तद्गतप्राणास्तस्मात्तद्वाक्यविद्विषः ॥ ५१ ॥
यिहूदीया वचस्तस्य श्रुत्वेदं वाक्यमब्रुवन् ।
त्वद्वाक्यं भूतविक्षिप्तशमरीयजनोचितम् ॥ ५२ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
न मे भूतेन सम्बन्धः स्वतानैकाग्रचेतसः ॥ ५३ ॥
यूयं मामवजानीथ यशोऽहं न तु कामये ।
न्यायाधीशस्य नित्यस्य तदस्तु परमात्मनः ॥ ५४ ॥
यः पालयति मद्वाक्यं मनोवाक्कायकर्म्मभिः ।
स मृत्युं मत्प्रसादेन तरिष्यति न संशयः ॥ ५५ ॥
यिहूदीया वचस्तस्य श्रुत्वेदं वाक्यमब्रुवन् ।
असंशयं विजानीमस्त्वां भूतोन्मादपीड़ितम् ॥ ५६ ॥
अब्राहामो मृतो मन्त्रुणामाश्च विमलौजसः ।
किमुत्मत्त ब्रवीषि त्वं किं त्वं तेभ्यो महत्तरः ॥ ५७ ॥
यीशुस्तानाह मन्यध्वे यदि मां मानकाङ्क्षिणम् ।
प्रदाता तस्य मानस्य मत्पितैव न संशयः ॥ ५८ ॥
यूयं तमीश्वरं ब्रूत किन्तु तं नावगच्छथ ।
अहं तमवगच्छामि तद्वाक्यं पालयामि च ॥ ५९ ॥
यदि ब्रवीमि नैवाहं विजानामि तमव्ययम् ।
मिथ्याचारो भविष्यामि युष्माभिः सदृशो ध्रुवम् ॥ ६० ॥

अब्राहामोऽपि युष्माकं पिता मद्दिनदृष्टये ।
सुमुदे परमौत्सुक्याद्दृष्ट्वा चानन्दमाप्तवान् ॥ ६१ ॥
त ऊचुस्तं न पञ्चाशद्वर्षं तेऽप्यधुना वयः ।
अब्राहामं पुरातीतं कथं तं परिदृष्टवान् ॥ ६२ ॥
यीशुस्तानाह युष्मभ्यं सत्यमेव ब्रवीम्यहम् ।
अहं प्राक्कालमारभ्य तस्याप्यस्मि समुद्भवात् ॥ ६३ ॥
इत्युक्तया तेऽश्मघातेन हमाहन्तुं यदोद्यताः ।
प्रच्छन्नोऽन्तर्हितो यीशु स्ततोऽन्यत्र तदा ययौ ॥ ६४ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि अष्टमोऽध्यायः ।

---

## नवमोऽध्यायः

St. John. Chapter 9. [The man that was born blind restored to sight. He is brought to the Pharisees. They are offended at it, and excommunicate him: but he is received of Jesus, and confesseth him. Who they are whom Christ enlighteneth.]

तच्छिष्याः पथि गच्छन्तस्तेन सार्द्धं ततः परम् ।
जन्मान्धं कंचिदालोक्य पप्रच्छु र्विनयान्विताः ॥ १ ॥
भगवन् स्वस्य पापेन पित्रो र्वा पापकर्मणा ।
अन्धोऽयं जन्मना जातः कृपया ब्रूहि नः प्रभो ॥ २ ॥
यीशुस्तानाह जन्मान्धो नायं कस्यापि पापतः ।
अस्य जन्मान्धतेशस्य क्रियार्थेति मतिर्मम ॥ ३ ॥
यावद्दिवा करिष्यामि तावन्मे प्रेषितुः क्रियाम् ।
आयाति सा निशा यत्र कर्म कर्त्तुं न शक्यते ॥ ४ ॥
यावदहं जगत्यस्मि तावज्ज्योतिर्मयं जगत् ।
इत्युक्त्वा भुवि निष्ठीव्य चक्रे पङ्कं परात्मजः ॥ ५ ॥

नेत्रे लिप्त्वा ततस्तेन योशुस्तमिदमुक्तवान् ।
शीलोहाख्यं सरो गच्छ प्रक्षालयच कर्दमम् ॥ ६ ॥
स गत्वा तत्र पङ्कार्द्रे नेत्रे प्रक्षाल्य वारिभिः ।
लब्ध्वा ज्योतिष्मतीं दृष्टिं योशुमभ्याययौ सुखम् ॥ ७ ॥
ततस्तर्कयतो दृष्ट्वा तद्ग्रामवासिनः ।
स जगाद स एवाहं माभूद् वो मनसः क्षयः ॥ ८ ॥
इत्युक्त्वा सोऽब्रवीत्तेभ्यो योशुना विहितां क्रियाम् ।
दृष्टिलाभोपदेशं च योशोः स्थानं तु नोक्तवान् ॥ ९ ॥
योशुनैतत् कृतं कर्म्म विश्रामेऽह्नि विगर्हितम् ।
इति ते प्राप्तनेत्रं तं निन्युः फरीशिसन्निधौ ॥ १० ॥
फरीशिनस्तमालोक्य पप्रच्छुः प्राप्तचक्षुषम् ।
कथं त्वं प्राप्तवान् दृष्टिं ब्रूहि नो यदि वाञ्छसि ॥ ११ ॥
निशम्याद्यन्तवृत्तान्तं तन्मुखात् केचिदब्रुवन् ।
स विश्रामविधिं छित्वा कृतवानीश्वराप्रियम् ॥ १२ ॥
अपरे कथयामासुर्नैषा वो मतिरुत्तमा ।
नष्टोदृशानि कर्म्माणि पापकृत् कर्त्तुमर्हति ॥ १३ ॥
इत्थं विवदमानास्ते पप्रच्छुस्तं पुनर्नरम् ।
यस्तुभ्यं दत्तवांश्चक्षुः किं त्वं वदसि तं प्रति ॥ १४ ॥
स तेषां वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
जानामि तमहं साधुं मानवं सत्यवादिनम् ॥ १५ ॥
ते तद्वचस्यविश्वस्याब्रुवंस्तत्पितरौ प्रति ।
युवयोरन्धपुत्रोऽयं कथं दृष्टिमवाप्तवान् ॥ १६ ॥
तेषां तद्वाक्यमाकर्ण्य पितराविदमूचतुः ।
पुत्रोयमावयोः पूर्व्वमन्ध आसीन्न संशयः ॥ १७ ॥
न जानीवः कथं दृष्टिं स इदानीमवाप्तवान् ।
पृच्छतैनं वयःप्राप्तं स्वयमेव स वक्ष्यति ॥ १८ ॥
एतौ निगदितं ताभ्यां यिहूदीयभयाकुलम् ।
यं ख्रीष्टं हुवता तेहि जातिच्युतिमघोषयन् ॥ १९ ॥

ततः पूर्व्वान्धमाहूय त इदं वाक्यमब्रुवन् ।
पापिनं तं विजानीमः ख्रीकुर्व्वीश्वरगौरवम् ॥ २० ॥
सोऽब्रवीत् सुकृतं तस्य दुष्कृतं वा न वेद्म्यहम् ।
आसमन्धोऽथ पश्यामीत्येषा मे परमार्थता ॥ २१ ॥
तेऽब्रुवन् किं कृतं कर्म्म तेन दृष्टिप्रसादनम् ।
जन्मान्धोऽपि भवान् दृष्टिं येनेदानीमवाप्तवान् ॥ २२ ॥
स प्राहासकृदेवाहं भवद्भ्यः प्रोक्तवानिदम् ।
किं भूयः श्रोतुमिच्छन्ति तस्य शिष्यत्वकाम्यया ॥ २३ ॥
तेऽब्रुवंस्तस्य शिष्य स्त्वं मोशेः शिष्या वयं विभोः ।
अज्ञातकुलशीलोऽयं मोशिस्त्वीश्वरतत्त्ववित् ॥ २४ ॥
सोऽब्रवीत्तं न जानन्ति भवन्तः किन्तु मेऽसकौ ।
दत्तवांश्चक्षुषी दृष्टिं किमाश्चर्य्यमतः परम् ॥ २५ ॥
ईश्वरः पापिनो वाक्यं न शृण्वन्ति कदाचन ।
पूरयत्यचिरादेव भक्तेच्छां भक्तवत्सलः ॥ २६ ॥
ईश्वर-प्रेषितादन्यो भिषजां निपुणोऽपि सन् ।
जन्मान्धचक्षुषी दृष्टिं न कश्चिद्दातुमर्हति ॥ २७ ॥
ते तस्य वचनं श्रुत्वा हेत्वन्वर्थसमन्वितम् ।
बहिष्कुरुत्स्वकारात्तं न्यक्कारपुरःसरम् ॥ २८ ॥
अथ तस्य बहिष्कारात् सापमानादनन्तरम् ।
यदृच्छया तमासाद्य यीशुर्व्वचनमब्रवीत् ॥ २९ ॥
किं भवाञ्जातविश्वासस्तनये परमात्मनः ।
सोऽब्रवीत् कोऽसकौ तस्मिन् विश्वसिम्यहमात्मवान् ॥ ३० ॥
यीशुनोचे त्वया दृष्टस्तत्त्वतः स परात्मजः ।
सम्प्रत्यपि त्वया सार्द्धं यो ब्रवीति स एव सः ॥ ३१ ॥
सोऽब्रवीद् विश्वसिम्येव भगवन् परया धिया ।
इत्युक्त्वा तं नमस्कृत्य सोऽर्चयत् परमात्मजम् ॥ ३२ ॥
अथ तं कथयामास यीशुः संप्रीतमानसः ।
भूय एव महाभाग शृणु मेऽवितथं वचः ॥ ३३ ॥

येऽस्मद्वारमनाश्रित्य न विद्म इति वादिनः ।
तेभ्यो दृष्टिप्रदानाय पृथिवीमहमागतः ॥ ३४ ॥
दृशमाश्रित्य ये विद्म इत्याहुः प्राज्ञमानिनः ।
प्रान्ध्यं तेभ्यः प्रयच्छामीत्येष मे न्याय उत्तमः ॥ ३५ ॥
यीशोस्तद्वचनं श्रुत्वा परमार्थसमन्वितम् ।
तर्हि किं वयमप्यन्धा इति प्राहुः फरीशिनः ॥ ३६ ॥
यीशुस्तानब्रवीदन्धा यूयं चेदभविष्यत ।
अभविष्यत निष्पापा तर्हि सत्यं समाश्रिताः ॥ ३७ ॥
यस्माद्दृशं समाश्रित्य जानीम इति जल्पथ ।
तस्माद्वो हृदये पापमवश्यमेव विद्यते ॥ ३८ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकेरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि नवमोऽध्यायः ।

## दशमोऽध्यायः

St. John, Chapter, 10. [ Christ is the door, and the good shepherd. Divers opinions of him. He proveth by his works that he is Christ the Son of God : escapeth the Jews, and went again beyond Jordan, where many believed on him. ]

भूय एव वचस्तथ्यं युष्मभ्यं कथयाम्यहम् ।
यज्ज्ञात्वा न पुनर्मोहं यूयं यास्यथ मां प्रति ॥ १ ॥
मुख्यद्वारं परित्यज्य साधनान्तरमाश्रितः ।
वाटं विशति मेषाणां य कश्चिच्चोर एव सः ॥ २ ॥
विशति द्वारतो यस्तु स एव मेषरक्षकः ।
दौवारिकः क्षते तस्य मुख्यद्वारं विमुञ्चति ॥ ३ ॥
स्वस्वनाम्ना क्षताह्वानास्ततो वाटाद्विनिर्गताः ।
मेषास्तमनुगच्छन्ति रक्षकं यान्तमग्रतः ॥ ४ ॥

ते नान्यमनुगच्छन्ति कदापि निजरक्षकात् ।
ततो भयात् पलायन्ते न यस्य विदितो रवः ॥ ५ ॥
अत्रापि संशयं तेषां विज्ञाय परमात्मजः ।
वर्णयामास भूयोऽपि तामुक्तिमुपमान्विताम् ॥ ६ ॥
मामेव मेषवाटस्य द्वारं जानीथ तत्त्वतः ।
मत्पूर्व्वमागतास्चौरा स्तद्वाक्यं तेन शुश्रुवुः ॥ ७ ॥
मया द्वारेण यः कश्चिद् विशत्यन्तरतन्द्रितः ।
स वुद्धिमान् मनुष्येषु परित्राणं स लप्स्यते ॥ ८ ॥
सोऽध्यन्तर्मया सार्द्धं वहिरन्तश्च यास्यति ।
लप्स्यते रक्षकत्वंच सर्व्वत्र समदर्शनः ॥ ९ ॥
चौरोऽभ्येति विनाशाय मेषाणां हरणायच ।
अहमभ्यागतस्तेषां सिद्धये जीवनायच ॥ १० ॥
वृकं वैतनिको वीक्ष्य मेषान् हित्वा पलायते ।
ततो मेषान् वृको हन्ति रक्षकेण विना स्थितान् ॥ ११ ॥
मेषार्थमात्मनः प्राणान् यस्मात् समर्पयाम्यहम् ।
अतोऽस्मि लोके मेषाणां रक्षकः सर्व्वथोत्तमः ॥ १२ ॥
जानेऽहमात्मनो मेषाञ् जानन्ति मांच मामकाः ।
यथाहं पितरं जाने विजानातिच मां पिता ॥ १३ ॥
एतेभ्योऽन्येऽपि मे मेषाः सन्त्येव किन्तु नात्र ते ।
अहं तानपि नेष्यामि श्रोष्यन्ति तेऽपि मे वचः ॥ १४ ॥
इत्थं पृथक् स्थिताः सर्व्वे मेषाः क्रोडीकृता मया ।
एकत्वमनुयास्यन्ति रक्षिणैकेन चालिताः ॥ १५ ॥
पिता मयि परं प्रेम करोति कारणादतः ।
त्यजाम्यहमात्मनः प्राणान् यथा तान् पुनराददे ॥ १६ ॥
न तान् हरति मत्तोऽन्यः स्वयमेवोत्सृजाम्यहम् ।
तान् सम्त्यक्तुं ग्रहीतुञ्च पैतृकं वलमस्ति मे ॥ १७ ॥
एतत्तस्य वचः श्रुत्वा तर्कयन्तः परस्परम् ।
केचित्तं कथयामासु भूतोन्मादप्रपीड़ितम् ॥ १८ ॥

तत्रेति चापरे प्राहु र्नह्नि भूतप्रपीड़ितः।
अन्धस्य चक्षुषी कश्चिदुन्मीलयितुमर्हति॥ १९ ॥

एकदा यिरुशालेमे हेमन्ते मन्दिरोत्सवे।
शलोमालिन्दमारुह्य भ्राम्यन्तं परमात्मजम्॥
यिहूदीयाः समालोक्य वेष्टयित्वा तमब्रुवन्।
ख्रीष्टस्त्वमसि चेत् सौम्य ब्रूहि नः स्पष्टभाषया॥ २० ॥

योश्चस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत्।
मयोक्ता बहुशो यूयं विश्वासस्तत्र वो नतु॥ २१ ॥

प्रमाणयति मां शश्वन्मदीया पैतृकी क्रिया।
नास्ति मन्मेषवाह्यानां युष्माकं प्रत्ययो मयि॥ २२ ॥

शृण्वन्ति मामका मेषाः स्पष्टमेव मम ध्वनिम्।
तानहञ्च विजानामि तेऽपि मामनुयान्ति च॥ २३ ॥

ततस्ते मम सान्निध्यमवाप्य विगतज्वराः।
अदृश्याः सर्व्वभूतानां लप्स्यन्तेऽनन्तजीवनम्॥ २४ ॥

सर्व्वेषु स पिता श्रेष्ठो यस्तान्मह्यं प्रदत्तवान्।
न तत्तस्तेऽपहार्य्यन्ते यस्मादेकत्वमावयोः॥ २५ ॥

तस्य तद्वचनं तथ्यं यिहूदीया निशम्य ते।
पुनरेव तमाहन्तुं प्रस्तरान् क्षिप्रमाददुः॥ २६ ॥

योश्चस्तानाह सत् कर्म्म मयका भूरि दर्शितम्।
आहथ प्रस्तरैर्यूयं मां कस्माच्छुभकर्म्मणः॥ २७ ॥

यिहूदीयास्तदाकर्ण्य वाक्यमुत्तरमब्रुवन्।
न त्वां शिलाभिराहन्मः केनापि शुभकर्म्मणा॥ २८ ॥

यतस्त्वं मानवो भूत्वा करोष्यात्मानमीश्वरम्।
आहन्मः प्रस्तरैस्तस्मात् कारणात्त्वामसंशयम्॥ २९ ॥

योश्चस्तेषां वचःश्रुत्वा वाक्यमुत्तरमब्रवीत्।
"मयोक्तमीश्वरा यूय" मिति किं न विधिर्जगौ॥ ३० ॥

स चेदोश्रस्तुतिस्तत्तुनोश्रानुज्ञा न दोषभाक् ।
अहं लिं ज्ञातवान् पापमुक्तात्मानं तदात्मजम् ॥ ३१ ॥

पवित्रोऽत्यं मामीश्रः प्राहिणोत् स्वयमेव यत् ।
तमहं मेव निन्दामि सर्व्वलोकमहेश्वरम् ॥ ३२ ॥

यदि नाम न वर्त्तेऽहं पितुः कर्म्मस्वतन्द्रितः ।
युष्माकं मयि विश्वासः कदाचिदपि नोचितः ॥ ३३ ॥

यदि तत्कर्म्मयुक्तेऽपि न विश्वासो भवेन्मयि ।
तस्य कर्म्मणि विश्वस्ता लभध्वं मतिमुत्तमाम् ॥ ३४ ॥

इत्थं तत्कर्म्मविश्वस्ता इयं ज्ञास्यथ तत्त्वतः ।
यदहं संस्थितस्तस्मिन् स चापि मयि संस्थितः ॥ ३५ ॥

अथतस्त पुनर्धर्तुं तं तामुक्तिं निशम्य ते ।
यीश्रस्तु तत् परिज्ञाय स्थानात्तस्मादहिर्ययौ ३६ ॥

अथ यर्द्दनपारस्थं तत् स्तानं योश्रुरागतः ।
योहनोऽस्नापयद् यत्र योशोः पूर्वं समागमात् ॥ ३७ ॥

तत्रत्या मानवा दृष्ट्वा तं तत्र समवस्थितम् ।
तस्यान्तिकं समागत्य केचिद्वचनमब्रुवन् ॥ ३८ ॥

अभिज्ञानार्थकं कार्य्यं न किञ्चिद् योहनोऽकरोत् ।
किन्त्वमेतदर्थं यत् समस्तं सत्यमेव तत् ॥ ३९ ॥

इति संस्मृत्य संस्मृत्य योहनस्य शुभं वचः ।
अनेके पूजयामासुस्तत्र भक्तोश्वरात्मजम् ॥ ४० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शणतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहन-भाषितख्रीष्टोपनिषदि दशमोऽध्यायः ।

## एकादशोऽध्यायः

St. John. Chapter 11. [Christ raiseth Lazarus, four days buried. Many Jews believe. The high priests and Pharisees gather a council against Christ. Caiaphas prophesieth. Jesus hid himself. At the passover they inquire after him, and lay wait for him.]

अथ वैथनियाग्रामे कश्चिल्लासारनामकः ।
मरीयम्मार्थयो र्भ्राताऽभवद् व्याधिप्रपीड़ितः ॥ १ ॥

मरीयम् सैव या भक्त्या तैलेनातिसुगन्धिना ।
यीशोः शरीरमासिञ्चत् पादौ चास्य कचैर्मृशत् ॥ २ ॥

गुरुणा व्याधिना वीक्ष्य भगिन्यौ तं प्रपीड़ितम् ।
प्रेषयामासतु र्दूतं त्वरितं यीशुसन्निधौ ॥ ३ ॥

यीशुः श्रुत्वाऽब्रवीद् व्याधिरेष जातो न मृत्यवे ।
परमेशसुतोऽनेन लप्स्यते विपुलं यशः ॥ ४ ॥

इत्युक्त्वोवास तत्रैव यीशुः प्राग् यत्र संस्थितः ।
दिवसद्वयपर्य्यन्तं मार्थादीनां प्रियोऽपि सन् ॥ ५ ॥

ततो यिहूदियां गन्तुमियेष परमात्मजः ।
शिष्यास्तु वारयामासुः प्रस्तराघातशङ्किताः ॥ ६ ॥

तेषां शङ्कानिरासार्थं यीशुरुत्तरमब्रवीत् ।
वत्सा द्वादशहोरात्मं दिनमानं प्रकीर्त्तितम् ॥ ७ ॥

तस्मिन् काले जगज्ज्योतिः पश्यन्तो यान्ति ये जनाः ।
सर्व्वबाधाविनिर्मुक्ता न कदापि स्खलन्ति ते ॥ ८ ॥

निशायां येतु गच्छन्ति तमसा बाधिता जनाः ।
ते स्खलन्ति तदन्तस्थं ज्योति र्यस्मान्न भासते ॥ ९ ॥

इत्युक्त्वा स ततः प्राह लासारो मम बान्धवः ।
निद्राति साम्प्रतं यामि तस्य निद्रापनुत्तये ॥ १० ॥

यीशुर्मरणतात्पर्य्यं निद्राशब्दं प्रयुक्तवान् ।
इत्यबुद्ध्वा तदीयान्तेवासिनो वाक्यमब्रुवन् ॥ ११ ॥
अवश्यं लप्स्यते प्राणान् प्रभो स्वपिति यद्यसौ ।
यीशुस्तेषां वचः श्रुत्वा तानिदं स्पष्टमब्रवीत् ॥ १२ ॥
युष्मदर्थं स्थितोऽत्राहं स मृतस्तेन हेतुना ।
इति चेत् प्रत्ययो वः स्यात् सन्तोषो मे महान् भवेत् ॥ १३ ॥
यथातथं भवत्वेतद् यास्यामस्तस्य सन्निधिम् ।
तद्वचो दिदुमस्थोमा श्रुत्वेदं वाक्यमब्रवीत् ॥ १४ ॥
मयापि तत्र गन्तव्यं सहैभिरन्तेवासिभिः ।
सर्व्वं वयं मरिष्याम स्तस्य प्रियचिकीर्षया ॥ १५ ॥
यीशुर्वैथनीयां गत्वा मृतुं तस्याशृणोत्ततः ।
शयनं च शवागारे यावद्दिनचतुष्टयम् ॥ १६ ॥
यिरूशालेमवास्तव्यै र्यिहूदीयैः समागतैः ।
मरियम्मार्थयोस्तस्य भगिन्योः सान्त्वनं तथा ॥ १७ ॥
यीशोरागमनं श्रुत्वा मार्था मरियमं विना ।
अचिरादुपसंगम्य तमिदं वाक्यमब्रवीत् ॥ १८ ॥
नामरिष्यन्मम भ्राता यद्यस्थास्यस्त्वमिह ।
जानेऽहं भवदाशास्यमधुनापि फलिष्यति ॥ १९ ॥
यीशुस्तामाह ते भ्राता पुनरुत्थास्यति ध्रुवम् ।
मार्था प्राह विजाने स उत्थास्यत्यन्तिमे दिने ॥ २० ॥
यीशुस्तस्या वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
जीवनं पुनरुत्थानं चाहमेव न संशयः ॥ २१ ॥
मृतोऽपि मयि विश्वासो लप्स्यते निजजीवनम् ।
जीवितो मयि विश्वासो न कदाचिन्मरिष्यति ॥ २२ ॥
कच्चित् कल्याणि विश्वासो मदुक्ते वचने तव ।
सा प्राहेशसुते ख्रीष्टे त्वयि विश्वसिमि प्रभो ॥ २३ ॥
इत्युक्त्वा सा रहो गत्वा मार्था मरियमोऽन्तिके ।
उवाच "गुरुरागत्य त्वामाह्वयति सत्वरम्" ॥ २४ ॥

सा तस्य वचनं श्रुत्वा गृहात्तूर्णं विनिर्गता ।
द्रुतं ग्रामाद्बहिर्गत्वा ददर्श परमात्मजम् ॥ २५ ॥

इयं याति शवागारं रोदितुं शोकविह्वला ।
इति मत्वानुजग्मुस्तां यिहूदीयाः शमैषिणः ॥ २६ ॥

ततो यीशुं समालोक्य मरीयम् शोककातरा ।
ववन्दे चरणौ तस्य वचनं चेदमब्रवीत् ॥ २७ ॥

नामरिष्यन्मम भ्राता यद्यत्रास्थास्यवानिह ॥
इत्युक्त्वा बन्धुभिः सार्द्धं यिहूदीयै रुरोद सा ॥ २८ ॥

यीशुस्तां रुदतीं वीक्ष्य तांश्चापि रुदतो जनान् ।
संक्षुभ्य परिपप्रच्छ तस्य क्वास्ते कलेवरः ॥ २९ ॥

ततस्तै र्दर्शितं वीक्ष्य लासारशवमन्दिरम् ।
रुरोद धैर्य्यमुत्सृज्य सुधीरः परमात्मजः ॥ ३० ॥

तं तथा कृपयाविष्टं यिहूदीयाः समीक्ष्य ते ।
तर्कयामासुरन्योन्यं तस्य शक्तिमलौकिकीम् ॥ ३१ ॥

यीशुस्तेषां वचः श्रुत्वा सन्त्यज्य धैर्य्यमात्मनः ।
आदिशच्छववेश्मस्य प्रस्तरस्यापसारणम् ॥ ३२ ॥

लासारस्य स्वसा मार्था विश्वस्ता परमात्मजे ।
अपासारयदश्मानं यिहूदीयैः समागतैः ॥ ३३ ॥

यीशुस्तदोर्द्ध्वमालोक्य साधुवादपुरःसरम् ।
तुष्टाव परमात्मानं वचनं चेदमब्रवीत् ॥ ३४ ॥

पितस्त्वं मामकं वाक्यं श्रुतवान् संशृणोषि च ।
प्रेषितोऽहं त्वयैवेति जानन्त्वामे यथार्थतः ॥ ३५ ॥

इत्युक्त्वोच्चैः प्रभुः प्राह "लासार बहिरेहि भो" ।
सोऽपि वस्त्रेण संबद्धस्तत्क्षणाद्बहिरागमत् ॥ ३६ ॥

तं तथा बद्धमालोक्य यीशुस्तानिदमब्रवीत् ।
मुक्त्वास्य बन्धनं शीघ्रं गमनायानुमन्यताम् ॥ ३७ ॥

इत्थालौकिककर्म्मैतद् यिहूदीयाः सदाशयाः ।
केचित्तस्मिन् सुविश्वस्ता बभूवुर्विमलात्मनि ॥ ३८ ॥

अपरे सत्वरं गत्वा जनाः फरीशिसन्निधौ ।
तत्त्वतः कथयामासुर्यिशोः सर्व्वं विचेष्टितम् ॥ ३९ ॥

तेषां वचनमाकर्ण्य फरीशिमुख्ययाजकाः ।
सभायां मिलिताः सर्व्वे करणीयमचिन्तयत् ॥ ४० ॥

अभिज्ञानार्थकं कर्म्म यद्यंतस्य सहामहे ।
एतस्मिन् विश्वसिष्यन्ति श्रद्धया सर्व्वमानवाः ॥ ४१ ॥

रोमीयास्तत आगत्य हरिष्यन्ति इमाः प्रजाः ।
पितृपैतामहप्राप्तं स्थानं च बलिनां वराः ॥ ४२ ॥

तस्य सम्वत्सरस्याथ सर्व्वमुख्यपुरोहितः ।
कायाफाख्यो नरस्तेभ्य इदं वचनमब्रवीत् ॥ ४३ ॥

कुतो ज्ञाने वितर्कं च मोहो वः समुपस्थितः ।
एकस्य निधनं श्रेयः सर्व्वसन्ततिगुप्तये ॥ ४४ ॥

ईदृशे वचने तस्य करणीयो न विस्मयः ।
लौकिकस्य सतो यस्माद् वागर्थमनुवर्त्तते ॥ ४५ ॥

परित्राणाय सर्व्वासां प्रजानामीशचेतसाम् ।
यीशुनाऽवश्यमर्त्तव्यमित्येवाख्याति तद्वचः ॥ ४६ ॥

ततः प्रभृति तं हन्तुं मन्त्रयन्ते स्म ते मिथः ।
यीशुस्तेषामभिप्रायं ज्ञात्वेफ्रयिममाययौ ॥ ४७ ॥

यिरूशालेममभ्येत्य ततो निस्तारपर्व्वणि ।
फरीशियाजकादेशाज्जनास्तमनुसन्दधुः ॥ ४८ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमद्‌योहन-भाषितख्रीष्टोपनिषदि एकादशोऽध्यायः ।

---

## द्वादशोऽध्यायः

St. John, Chapter 12. [ Jesus excuseth Mary anointing his feet. The people flock to see Lazarus. The high priests consult to kill him. Christ rideth into Jerusalem. Greeks desire to see Jesus. He foretelleth his death. The Jews are generally blinded : yet many chief rulers believe, but do not confess him : therefore Jesus calleth earnestly for confession of faith. ]

अथ षड्दिवसात् पूर्व्वं शुभनिस्तारपर्व्वणः ।
सम्मृतोत्थितलासारो योशुर्वैथनियां गतः ॥ १ ॥

मार्थया पूजितस्तत्र लासारेण समन्वितः ।
सोऽन्नकालेऽनुसंप्राप्ते भोजनायोपविष्टवान् ॥ २ ॥

तदा मरियमानीय सुगन्धितैलमाणिकाम् ।
असिञ्चच्चरणौ तस्योपामृशच्च निजैः कचैः ॥ ३ ॥

तस्य तैलस्य गन्धेन क्षतस्नमापूरितं गृहम् ।
समर्पकस्तदा तस्य यिहूदा वाक्यमब्रवीत् ॥ ४ ॥

तैलस्य बहुमूल्यस्य कथमस्य वृथा व्ययः ।
एतन्मूल्यं दरिद्रेभ्यो न कथं वा समर्पितम् ॥ ५ ॥

वञ्चकस्य क्षतघ्नस्य न्यस्तमुद्रापहारिणः ।
तस्य तद्वचनं श्रुत्वा योशुरेतद्वचोऽब्रवीत् ॥ ६ ॥

त्वमिमामनुजानीहि मत्समाध्यपपत्तये ।
सदा वः सङ्गिनो दीना अहमस्मि न तादृशः ॥ ७ ॥

सलासारं विदित्वाथ तत्रस्थं परमात्मजम् ।
द्रष्टुमभ्यागताः सर्व्वे यिहूदीयाः समुत्सुकाः ॥ ८ ॥

लासारहेतुकं वीक्ष्य योशोः सुविमलं यशः ।
मुख्यास्तस्यापि हत्यार्थं मनश्चक्रुः पुरोहिताः ॥ ९ ॥

अथ यीशुः स्व आगन्तेति श्रुत्वागन्तुका जनाः ।
खर्ज्जुरच्छदमादाय प्रत्युद्गमाय निर्ययुः ॥ १० ॥
ततस्ते कीर्त्तयन्तिस्म गौरवं परमात्मनः ।
यीशुं च पुरतो वीक्ष्य भक्त्येदं वाक्यमब्रुवन् ॥ ११ ॥
स धन्यः परमेशस्य नाम्ना यो भुवमागतः ।
इस्रायेलप्रजाधीश जय त्वमीशनन्दनः ॥ १२ ॥
तस्मिन् काले समारुह्य यीशुर्गर्द्दभशावकम् ।
इदमुद्बोधयाश्चक्रे शास्त्रवाक्यं पुरातनम् ॥ १३ ॥
"सियोनपुत्रि माभैषीरेष ते परमप्रियः ।
समायाति समारुह्य राजा गर्द्दभशावकम्" ॥ १४ ॥
यीशोः शिष्यैस्तु नाबोधि प्रथमं तत्कृता क्रिया ।
यथावद् बुबुधे पश्चात्तस्योर्द्ध्वगमनात् परम् ॥ १५ ॥
तमेव सर्व्वशास्त्राणि खीष्टमाहुर्मनीषिणाम् ।
शास्त्रोक्तिश्चरितार्थाच नृणामीदृशकर्म्मणा ॥ १६ ॥
लासारोत्थापनाश्चान-प्राणदानादिकर्म्मभिः ।
खीष्टत्वं दर्शकास्तस्य प्राहुः सर्व्वेऽप्यसंशयम् ॥ १७ ॥
एतस्मात् कारणात्तस्मिन् विश्वस्ता बहवो जनाः ।
ददृशुस्तं महाभागमभिज्ञानप्रदर्शकम् ॥ १८ ॥
फरीशिनो विदित्वैतदन्योन्यमिदमब्रुवन् ।
युष्माकं विफला चेष्टा लोकास्तमनुवव्रजुः ॥ १९ ॥
यूनानीयास्ततः केचिद् भजनार्थमुपागताः ।
यीशोर्दर्शनमिच्छन्तः फिलोफाय न्यवेदयन् ॥ २० ॥
फिलोफस्त्वान्द्रियं प्राह ततस्तौ यीशुमूचतुः ।
यीशुस्तयोर्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ २१ ॥
तत्त्वतो भाषमाणस्य शृणुतं परमं वचः ।
कालोऽयं नरपुत्रस्य गौरवार्थमुपागतः ॥ २२ ॥
गोधूमस्य पतित्वा चेद् भूमौ वीजं न नश्यति ।
तत्तिष्ठत्येकलं तर्हि फलस्य बहुतान्यथा ॥ २३ ॥

प्राणिषु ममता यस्य स प्राणान् धारयिष्यति ।
रक्षिष्यति सतान्नित्यं यस्तेषु विगतस्पृहः ॥ २४ ॥
यदि कश्चिन्मनुष्येषु परिचर्य्यां ममेच्छति ।
सोऽनुगच्छतु मामेव त्यक्तसर्व्वपरिग्रहः ॥ २५ ॥
नेष्यामि तत्र यत्राहं स्थास्यामि शरणागतम् ।
मत्पितापि सदा तस्मिन् सान्निध्यं कल्पयिष्यति ॥ २६ ॥
प्राणा ममाधुनोद्विग्ना अहमत्र वदानि किम् ।
त्वमेव शरणं तात त्वेतदर्थमहं स्थितः ॥ २७ ॥
पितस्त्वमेव त्वन्नाम यशसा कुरु मण्डितम् ।
परात्मजे ब्रुवत्येवं दिवि वाणीयमुत्थिता ॥ २८ ॥
"तदहं कृतवानेव करिष्ये पुनरेव तत्" ।
तच्छ्रुत्वा मेघनादोऽयमिति केचिदवादिषुः ॥ २९ ॥
स्वर्दूतोऽनेन संवादं चकारेत्यपरेऽवदन् ।
योशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ३० ॥
उत्थिता युष्मदर्थैव नाभसीयं सरस्वती ।
वक्ष्यिर्नेष्यति लोकेशं लोकन्यायोऽधुना यतः ॥ ३१ ॥
यद्यहं भूतलाद् यातो भवामि महिमान्वितः ।
नेष्यामि मानवान् सर्व्वान् यथाकालं ममान्तिकम् ॥ ३२ ॥
स्वस्य मृत्यो ब्रुवत्येवमिङ्गितं परमात्मजे ।
तत्रत्या मानवाः सर्व्वे तमिदं वाक्यमब्रुवन् ॥ ३३ ॥
जगौ ख्रीष्टस्य नित्यत्वं श्रुतिः श्रोतृहितैषिणी ।
कोऽयं मनुष्यपुत्राख्यः का वा तस्य समुन्नतिः ॥ ३४ ॥
इत्युदीरितमाकर्ण्य नराणां विधिवादिनाम् ।
अथ तत्संशयच्छेत्ता प्रत्युवाच परात्मजः ॥ ३५ ॥
नातः परं चिरं ज्योति युष्माभिः सह तिष्ठति ।
आयात तत्स्थितिं यावत् प्रवेक्ष्यति तमोऽन्यथा ॥ ३६ ॥
अन्धकारे महादुःखे यः करोति गतागतम् ।
स तत्त्वतो न जानाति क्व याति तमसावृतः ॥ ३७ ॥

तस्माद् भवत विश्वस्ता ज्योतिष्येवान्तिके स्थिते ।
परस्य ज्योतिषः पुत्रा येन युक्ता भविष्यथ ॥ ३८ ॥
इति तेभ्यः परं तत्त्वं कथयित्वा परात्मजः ।
तस्मात् स्थानादपाक्रम्य यीशुरन्तरधीयत ॥ ३९ ॥
यद्यपीत्थं विधं कर्म यीशुना बह्वनुष्ठितम् ।
तेषां तथापि विश्वासो न जातः परमात्मजे ॥ ४० ॥
यिशायाख्योक्तिरेतेन चरितार्था पुरातनी ।
यद्व्याजहार शान्तात्मा यिशायाख्यो महामुनिः ॥ ४१ ॥
"उपदिष्टं यदस्माभिः प्रभो केन तदादृतम् ।
ईश्वरस्य भुजो वाभूत् कमुद्दिश्य प्रकाशितः" ॥ ४२ ॥
तेषां तस्मिन्न विश्वास एतस्मादेव कारणात् ।
इतोऽन्यत् कारणं यच्च तदिदं पुनरुक्तवान् ॥ ४३ ॥
"चक्षुर्मनश्च तेषां स चक्रे तत्त्वपराङ्मुखे ।
न यतन्ते विमोक्षाय तस्मात्ते स्थूलदर्शिनः" ॥ ४४ ॥
यिशायाह: स्वयं बुद्ध्वा तमुद्दिश्येदमब्रवीत् ।
इति बुद्ध्वा सुविश्वस्तास्तस्मिन् केचन नायकाः ॥ ४५ ॥
तथापि ते फरीशीयपङ्क्तिभङ्गभयार्दिताः ।
न स्वीचक्रुस्तमीशस्य पुत्रं प्रेयःप्रिया जनाः ॥ ४६ ॥
यीशुस्तेषामभिप्रायं ज्ञात्वोच्चैरिदमब्रवीत् ।
स मत्प्रेषकमेवेति यो मां भजति मानवः ॥ ४७ ॥
यश्च मां परया भक्त्या पश्यत्यमलमानसः ।
स मत्तो ज्योतिरासाद्य तमेव परिपश्यति ॥ ४८ ॥
अहमेव स्वयं ज्योतिर्नियतं तमसः परम् ।
मामेव ये प्रपद्यन्ते तमः कृत्स्नं तरन्ति ते ॥ ४९ ॥
यश्च मद्वचनं श्रुत्वा न विश्वसिति मानवः ।
तमहं नाभियोक्ष्यामि यतो मुक्त्यै ममागतिः ॥ ५० ॥
यस्तु मामवजानाति न गृह्णाति च मे वचः ।
विचारं तस्य वाक्यास्ते मत्कथैव करिष्यति ॥ ५१ ॥

इदं ज्ञानं सविज्ञानं नह्यहं स्वयमुक्तवान्।
पितुरेवाज्ञया सर्व्वमुक्तं भूतानुकम्पया॥ ५२॥
पित्रा दत्तमिदं ज्ञानं येऽनुतिष्ठन्ति मानवाः।
तत्प्रसादादवाप्स्यन्ति ते नित्यं पदमव्ययम्॥ ५३॥

इति श्रीताराचरणचक्रवर्त्ति-तर्कदर्शनतीर्थेन श्लोकरूपनिबद्धायां
श्रीमद्‌योहन-भाषितख्रीष्टोपनिषदि द्वादशोऽध्यायः।

## त्रयोदशोऽध्यायः

St. John. Chapter 13. [ Jesus washeth the disciple's feet: exhorteth them to humility and charity. He foretelleth, and discovereth to John by a token, that Judas should betray him: commandeth them to love one another, and forewarneth Peter of his denial. ]

अथ स्वमरणं ज्ञात्वा प्राङ्‌निस्तारमहोत्सवात्।
स्वजनेष्वन्तिमं प्रेम चकार परमात्मजः॥ १॥
अथ नैशान्नवेलायां यिहूदा-पापचेष्टितम्।
विज्ञाय चिन्तयामास योशुरेकमनाः स्वयम्॥ २॥
पितास्य जगतो भारं मय्येव समार्पयत्।
ततोऽहमागतो लोकं गच्छामि च तदन्तिकम्॥ ३॥
इत्येवं चिन्तयित्वासावुत्तस्थौ भोजनासनात्।
केवलं गात्रमाच्छन्या कटिं स्वस्य बबन्ध च॥ ४॥
ततः प्रक्षाल्य शिष्याणां चरणान् पूतवारिभिः।
तेनैव कटिवस्त्रेण कृतवान् परिमार्ज्जनम्॥ ५॥
ततः पित्रः समालोक्य गुरुमन्तिकमागतम्।
उवाच मम पादौ किं भवान् प्रक्षालयिष्यति॥ ६॥

यीशुस्तमाह यत् कर्म्म साम्प्रतं क्रियते मया ।
न बुध्यते त्वयेदानीं ज्ञास्यते तदतः परम् ॥ ७ ॥
पितरेण वारितो भूयोः यीशुस्तमिदमब्रवीत् ।
कार्यमेतन्मया सार्द्धं त्वदंशित्वोपपत्तये ॥ ८ ॥
पितरः प्रोवाच यद्येवं तर्हि प्रक्षालय प्रभो ।
धर्म्मात्मन् सह पादाभ्यां मदीयं हस्तमस्तकम् ॥ ९ ॥
यीशुस्तमाह यः स्नातस्तस्य शौचं न शोभनम् ।
पादप्रक्षालनं युक्तं शुद्धदेहस्य केवलम् ॥ १० ॥
न शौचमस्ति सर्व्वेषु मम शिष्येषु यद्यपि ।
तथापि शुचयोऽनेके स्नाननिर्धूतकल्मषाः ॥ ११ ॥
यस्मादेकं स्वशिष्येषु बुबुधे स समर्पकम् ।
तस्मादनेक इत्यूचे सर्व्ववित् परमात्मजः ॥ १२ ॥
अथाङ्गरक्षकं वासः परिधाय पुनः प्रभुः ।
पादक्षालनमाहात्म्यं शिष्येभ्यः स्वयमुक्तवान् ॥ १३ ॥
मामाचार्य्यं प्रभुं चैव यूयं वदथ सर्व्वदा ।
कथ्यते सम्यगेवैतद् युष्माभिः सत्यभाषिभिः ॥ १४ ॥
लोके य एष दृष्टान्तो दर्शितो गुरुणा मया ।
शिष्यैरप्यनुसर्त्तव्यः स युष्माभिरमायया ॥ १५ ॥
न दासः प्रभुतः श्रेष्ठः प्रेरकात् प्रेषितो नच ।
अशेषेण विदित्वैतत् सद्भ्रू समनुपाल्यताम् ॥ १६ ॥
इदन्त्वपि न सर्वेभ्यो युष्मभ्यं कथयाम्यहम् ।
यानहं मनसा वव्रे जाने तांस्त्वत्तो जनान् ॥ १७ ॥
तथापि "बुभुजे पूपं यो मया सह मानवः ।
सोऽस्मन्निजपादाभ्यां दूषितो मम मस्तकम्" ॥ १८ ॥
इत्याप्तवचसा भाव्यं फलितार्थेन सर्व्वथा ।
तस्मात् प्रागेव संसिद्धेस्तत्त्वतः कथ्यते मया ॥ १९ ॥
स्मृतिः सत्यवती यस्मिन् काले सिद्धिं गमिष्यति ।
तदा सोऽहमिति श्रेयं युष्माभिश्छिन्नसंशयैः ॥ २० ॥

मया प्रेषितमादाय मामेव भजते जनः ।
मम सेवारतो याति मत्पितुः परमं पदम् ॥ २१ ॥
इत्युक्त्वात्यन्तमुद्विग्नो यीशुस्तानिदमब्रवीत् ।
युष्माकमेव मामेको धृत्वारिभ्योऽर्पयिष्यति ॥ २२ ॥
इत्येवं ब्रुवति क्रोष्टे ते परस्परमब्रुवन् ।
कोऽस्माकं विद्यते पापी गुरुद्रोही नराधमः ॥ २३ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
यस्मै दास्यामि सूपाक्तं पूप-खण्डं स एव सः ॥ २४ ॥
इत्युक्त्वा पूपखण्डं तत् सूपपात्रे निमज्जितम् ।
इष्कारियेदुपाख्याय यिहूदै स प्रदत्तवान् ॥ २५ ॥
ततो दुष्टात्मनाविष्टं यीशुस्तमिदमब्रवीत् ।
शीघ्रं तत् कुरु कर्म्म त्वं यत्ते मनसि वर्त्तते ॥ २६ ॥
शिष्या यीशोरभिप्रायमबुद्ध्वा भोजने रताः ।
परस्परं वदन्ति स्म किमेतद्गुरुरुक्तवान् ॥ २७ ॥
पर्वीयं दानमुद्दिश्य किंवा सम्भारकल्पनम् ।
विमृश्याह गुरुस्तस्मै मुद्रापुटकधारिणे ॥ २८ ॥
इति तेषु ब्रुवाणेषु यिहूदाः पापकृत्तमः ।
पूपखण्डं समादाय निशायां वहिराययौ ॥ २९ ॥
अथ तस्मिन् विनिष्क्रान्ते बभाषे परमात्मजः ।
पुत्रोऽधुना मनुष्याणां महिमानमवाप्तवान् ॥ ३० ॥
तस्मिन् दिव्ययशोधाम्नि परमात्मा सनातनः ।
सुतरां कल्पयामास सान्निध्यं स्वेन तेजसा ॥ ३१ ॥
एतस्मात् कारणादीशः सर्वैश्वर्य्यसमन्वितम् ।
करिष्यत्यचिरादेव स्वमहिम्ना तमन्वितम् ॥ ३२ ॥
स्थास्यामि सह युष्माभिः स्वल्पकालमतः परम् ।
युष्माभिर्यदगम्यं तत् स्थानं यास्याम्यतः परम् ॥ ३३ ॥
युष्माभि र्मे नवादेशात् कार्य्यं प्रेम परस्परम् ।
तथैव मम शिष्यत्वं भवेद्वः सर्व्वसम्मतम् ॥ ३४ ॥

ततः शिमोन-पितरेण "कुत्र याति भवान् प्रभो?" ।
इत्युक्तः कथयामास योशुस्तत्परमात्मवान् ॥ ३५ ॥
'मामनुव्रजितुं वत्स न शक्नोत्यधुना भवान् ।
मत्परन्तु यथाकालं भवांस्तत्र गमिष्यति ॥ ३६ ॥
पितरस्तमुत्तरं प्राह का तेऽनुगमने कथा ।
प्राणानपि प्रदास्यामि त्वदर्थं नात्र संशयः ॥ ३७ ॥
योशुः प्रोवाच यावत् त्रिः प्रत्याख्याति मां भवान् ।
सत्यं ब्रवीमि इति तावन्न रविष्यति कुक्कुटः ॥ ३८ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि त्रयोदशोऽध्यायः ।

---

## चतुर्दशोऽध्यायः ॥

St. John, Chapter 14. [Christ comforteth his disciples with the hope of heaven: professeth himself the way, the truth, and the life, and one with the Father: assureth their prayers in his name to be effectual: requesteth love and obedience, promiseth the Holy Ghost the comforter, and leaveth his peace with them.]

स ततः प्राह "विश्वस्य परमेशे तथा मयि ।
मत्पितुर्वैकुण्ठगेहस्य स्थानं यास्यथ शाश्वतम्" ॥ १ ॥
तत् स्थानमभिनिर्द्देष्टुं गच्छामि पूर्व्वमेकलः ।
पश्चान्नेष्यामि वस्तत्र स्थानायने विजानतः ॥ २ ॥
थोमा प्राह क्व गन्तव्यं भवतेति न बुध्यते ।
कथं नाम विजानीमो भवतः पदवीं प्रभो ॥ ३ ॥
योशुः प्राह गतिः सत्यमहमेव च जीवनम् ।
मया द्वारेण गन्तव्यमन्तिकं परमात्मनः ॥ ४ ॥

मामश्रास्यत यूयं चेन्मम तातमवैष्यत ।
इतः प्रभृति जानीथ दृष्टवन्तश्च तत्त्वतः ॥ ५ ॥
फिलोपस्तं ततः प्राह पितरं नः प्रदर्शय ।
पर्य्याप्तमेतदस्माकं भविष्यति न संशयः ॥ ६ ॥
यीशुस्तमाह॰युष्माभिः सह तिष्ठाम्यहं चिरम् ।
येनाहमीक्षितस्तेन मत्पितापि समीक्षितः ॥ ७ ॥
इति किं नाभिजानासि जानन्नपि महामते ।
तत् कथं पितरं द्रष्टुं भूय एवाभिकाङ्क्षसि ॥ ८ ॥
अहं पितरि तिष्ठामि पिता च मयि तिष्ठति ।
किमत्र त्वं महाभाग न विश्वसिषि तत्त्वतः ॥ ९ ॥
एतानि यानि वाक्यानि युष्मभ्यं कथयाम्यहम् ।
भाषते तानि पितैव सततं मयि संस्थितः ॥ १० ॥
यद्यावयोर्मिथः स्थित्यां नै विश्वासो मदुक्तिभिः ।
प्रत्ययस्तत्र कर्त्तव्यस्तर्हि मत्कृतकर्म्मभिः ॥ ११ ॥
यो विश्वसिति मय्येव चेतसाऽनन्यगामिना ।
स मत्तोऽपि महत् कर्म्म करिष्यति न संशयः ॥ १२ ॥
तनये पितुरैश्वर्य्यं यतो दर्शयता मया ।
कामा वः पूरयिष्यन्ते गच्छता पितुरन्तिकम् ॥ १३ ॥
यदि मय्यचला प्रीतिर्युष्मभ्यमभिरोचते ।
पालनीया सदा भक्त्या सर्व्वथाज्ञा मयोदिता ॥ १४ ॥
तर्हि मत्तः पिता श्रुत्वा परमेकं सहायकम् ।
प्रहेष्यति स युष्माभिः सह स्थास्यति सर्व्वदा ॥ १५ ॥
जगत्तं न विजानाति न दृष्टातिच शाश्वतम् ।
यूयं तु तं विजानीथ स्तितं वोऽन्तस्तथान्तिके ॥ १६ ॥
नानाथान् परिहास्यामि युष्मान् मे शरणागतान् ।
अचिरादागमिष्यामि युष्माकमहमन्तिके ॥ १७ ॥

स्तोके काले व्यतीते मां नेह द्रक्ष्यन्ति जन्तवः ।
जीवद्भिरहमोऽक्षिषेऽ युष्माभिः किन्तु जीवितः ॥ १८ ॥
तदा द्रक्ष्यथ यूयं मां मत्पितर्य्यव्यये स्थितम् ।
युष्मासु चामलात्मानं युष्मांश्च मयि संस्थितान् ॥ १९ ॥
यो यस्त्वाज्ञा इमा नित्यमनुतिष्ठन्ति मानवाः ।
स करोति मयि प्रेम स एव कृतसत्कर्म्मकृत् ॥ २० ॥
एवं मामनुगच्छन्तं तं पितानुग्रहीष्यति ।
ततः प्रकाशयिष्यामि स्वमहञ्च तदात्मनि ॥ २१ ॥
इष्कारियदुपाख्यान्यो यिहूदास्तं तदाऽब्रवीत् ।
त्यक्त्वान्यान् कथमस्मासु भवानाविर्भविष्यति ॥ २२ ॥
यीशुः प्रोवाच कश्चिच्चेन्मयि प्रेम चिकीर्षति ।
मदाज्ञाः सर्व्वथा तेन पालनीया मयोदिताः २३ ॥
तर्हि मज्जनकस्तस्मिन् परं प्रेम करिष्यति ।
निवत्स्यति च तस्यान्तरत ऊर्द्ध्वं मया सह ॥ २४ ॥
यदिदं श्रूयते वाक्यं युष्माभि कथितं मया ।
तदहं न स्वयं वच्मि तत्रापि मत्पिता प्रभुः ॥ २५ ॥
सार्द्धं स्थित्वैव युष्माभिरेतावत् कथयाम्यहम् ।
सहायो वः पवित्रात्मा शिक्षयिष्यत्यतः परम् ॥ २६ ॥
मत्पिता सर्व्वलोकेशस्तमपि प्रेषयिष्यति ।
स युष्मान्मम नाम्नैव मदुक्तीः स्मारयिष्यति ॥ २७ ॥
शान्तिं मेऽनुपमां न्यस्य युष्माकमहमन्तिके ।
व्रजामि पैतृकं धाम माभूद्वो मनसो भयम् ॥ २८ ॥
युष्मभ्यमसकृत् प्रोक्तं मया मम गतागतम् ।
पितुर्महत्तरत्वं च मत्तः सम्यक्प्रदर्शितम् ॥ २९ ॥
अकरिष्यत चेद्यूयं मयि प्रेमानिमित्तकम् ।
अभविष्यत् परानन्दो युष्माकं भावितात्मनाम् ॥ ३० ॥
सिद्धेः प्रागेव युष्मभ्यं मया सम्यग् निवेदितम् ।
सिद्धिकाले यथा बुद्धिर्युष्माकं स्यादचञ्चला ॥ ३१ ॥

इतः परं न युष्माभि र्वक्ष्यहं वचनं बहु ।
जगदीशः समायाति न मयि तस्य किञ्चन ॥ ३२ ॥
पितरि क्रियते प्रेम तद्वचः कुर्व्वता मया ।
इत्येव जगता ज्ञेयमुत्तिष्ठत प्रयात च ॥ ३३ ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्रीकैरपनिबद्धायां श्रीमद्योहनभाषित-खीष्टोपनिषदि चतुर्द्दशोऽध्यायः ।

## पञ्चदशोऽध्यायः

St. John. Chapter 15. [The consolation and mutual love between Christ and his members, under the parable of the vine. A comfort in the hatred and persecution of the world. The office of the Holy Ghost, and of the apostles.]

अहं द्राक्षालतोत्कृष्टा मत्पिता कृषकः परः ।
अफलां मत्स्थितां शाखां छिनत्ति चैतिकः पिता ॥ १ ॥
फलं फलति या शाखा तामादाय पिताव्ययः ।
तथा संस्कुरुते नित्यं सा फलत्यधिकं यथा ॥ २ ॥
सञ्जाता वोऽमला बुद्धिर्मदुक्तिसंस्कृतात्मनाम् ।
मयि तिष्ठत वर्त्तेऽहं युष्मासु सर्व्वदा यथा ॥ ३ ॥
लताच्युता यथा शाखा न फलायोपकल्पते ।
मयि स्खलितबुद्धीनां युष्माकमपि सा दशा ॥ ४ ॥
शुष्यन्ति सर्व्वथा शाखा लता सङ्गविवर्ज्जिताः ।
ताश्चैकत्रीकृता वह्निर्भस्मसात् कुरुतेऽञ्जसा ॥ ५ ॥
यदि तिष्ठत मय्येव यूयं मदुक्तितत्परा ।
अहमेव प्रयच्छामि युष्मभ्यं सर्व्वसम्पदः ॥ ६ ॥
युष्माकं फलसम्पत्त्या मत्पिता लप्स्यते यशः ।
यूयञ्च मम शिष्यत्वं मत्प्रसादवाप्स्यथ ॥ ७ ॥
पिता मयि परं प्रेम कृतवानव्ययो यथा ।
तथाहं कृतवान् प्रेम युष्मास्वप्यतिनिर्म्मलम् ॥ ८ ॥

पितृनिष्ठो यथाचाहं पित्राज्ञापरिपालनात् ।
तथा मद्वचनं ज्ञात्वा यूयं मय्येव तिष्ठत ॥ ९ ॥
ज्ञानमेतत् सविज्ञानं युष्मभ्यं प्रोक्तवानहम् ।
मदीयानन्दलाभाय पूर्णानन्दोदयाय च ॥ १० ॥
आज्ञां मम पुरस्कृत्य कार्य्यं प्रेम परस्परम् ।
यथाहं कृतवान् प्रेम युष्मास्वत्यन्तनिर्मलम् ॥ ११ ॥
मित्राणामुपकारार्थं निजप्राणविसर्ज्जनम् ।
प्रेम्णामपि समस्तानामेतदत्यन्तदुर्लभम् ॥ १२ ॥
करणीयतया यद् यद् युष्मभ्यं कथयाम्यहम् ।
सम्यक् तत्तदनुष्ठाय लभध्वं मम मित्रताम् ॥ १३ ॥
न वो दासान् पुनर्वच्मि प्रभोः कार्य्यमजानतः ।
ज्ञातवांस्तत्त्वमेतच्च बन्धुभावेन पैतृकम् ॥ १४ ॥
युष्माभिर्वरितो नाहं यूयं तु वरिता मया ।
सन्तु वः सफलाः कामाः प्रसादात् परमात्मनः ॥ १५ ॥
युष्माभिः प्रेम कर्त्तव्यं परस्परमतन्द्रितैः ।
इत्यर्थमेव युष्मभ्यं कथयाम्यतिविस्तरम् ॥ १६ ॥
यदि युष्माञ्जगद्द्वेष्टि मामेव द्वेष्टि तद् ध्रुवम् ।
इति यूयं विजानीथ भूयोऽपि कथयाम्यहम् ॥ १७ ॥
जगज्जागतिकं वस्तु स्वकीयत्वेन मन्यते ।
तस्मादतद्विधान् युष्मान् द्वेष्टि मद्वरितांस्तु तत् ॥ १८ ॥
न दासः प्रभुतः श्रेष्ठ इत्युक्तामस्मदुक्तयाम् ।
तद्वचः स्मरतां नित्यं माभूद्वो मनसो भयम् ॥ १९ ॥
ये मामुपाद्रवन्नित्यं तीव्रया मर्म्मपीड़या ।
ते युष्मान् पीड़यिष्यन्तीत्यत्र को विद्यते स्मयः ॥ २० ॥
मम वाक्यमवज्ञातं यैरहङ्कारमाश्रितैः ।
कथं ते मानयिष्यन्ति भवतामनुशासनम् ॥ २१ ॥
ते युष्मांस्ताड़यिष्यन्ति मम निर्य्यातनं प्रति ।
मत्प्रेरकमविज्ञाय दम्भमानमदान्विताः ॥ २२ ॥

तेषां हृदयपापानि प्रकाशयति मत्कथा ।
मम सन्दर्शनं तेषां हृदयानि भिनत्ति च ॥ २३ ॥
योऽहङ्कारं समाश्रित्य द्वेष्टि मामीश्वरात्मजम् ।
पितरं मम स द्वेष्टि सर्व्वलोकमहेश्वरम् ॥ २४ ॥
अन्यदुष्करकर्म्माणि बहूनि ते समीक्ष्य मे ।
द्विषन्ति पितरं मां च सततं भोगलम्पटाः ॥ २५ ॥
एतेन "तैरहं द्विष्टो वृथे"ति शाश्वती श्रुतिः ।
चरितार्थाऽभवल्लोके व्यवस्थायामनूदिता ॥ २६ ॥
यं पितुः परमेशस्य सकाशादहमव्ययम् ।
आत्मानं प्रेषयिष्यामि भवतामन्तिके विभुम् ॥ २७ ॥
सहायकः स निर्य्याय मत्पितुः परमात्मनः ।
सत्यः सनातनोऽनन्तः साक्ष्यं मां प्रति दास्यति ॥ २८ ॥
सर्व्वेषणाः परित्यज्य मामेव शरणं गताः ।
जितात्मनो भवन्तोऽपि भवन्तु मम साक्षिणः ॥ २९ ॥

इति श्रीताराचरणचक्रवर्त्तिकर्दमशतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहन-भाषितख्रीष्टोपनिषदि पञ्चदशोऽध्यायः ।

---

## षोड़शोऽध्यायः

St. John. Chapter 16. [ Christ comforteth his disciples against tribulation by the promise of the Holy Ghost, and by his resurrection and ascension : assureth their prayers made in his name to be acceptable to his Father. Peace in Christ, and in the world affliction. ]

सविज्ञानमिदं ज्ञानं युष्मभ्यं प्रोक्तवानहम् ।
मत्तः सत्याच्च विभ्रष्टा यथा यूयं न नश्यथ ॥ १ ॥
अपाङ्क्तेयान् करिष्यन्ति केचिद्वः कुलगर्व्विताः ।
ईशायोपहरामीति हनिष्यन्त्यपरे जनाः ॥ २ ॥
अज्ञात्वा परमात्मानं माञ्चैव परमात्मजम् ।
त एतानि करिष्यन्ति माभूद्वः स्मृतिविच्युतिः ॥ ३

युष्माभिः सह सान्निध्यं सर्व्वथा मम संस्थितम् ।
एतस्मात् कारणान्नाहमुक्तवानहमादितः ॥ ४ ॥
अधुनाहमितो यामि मत्पितुः परमं पदम् ।
अपृष्टेन मया तस्माद् यूयमुक्ताः सुदुःखिताः ॥ ५ ॥
ममापगमनं वत्सा श्रेयसे वो भविष्यति ।
ममापगमनादेव सहायो यत एष्यति ॥ ६ ॥
स आगत्य जगत्पापधार्म्मिकत्वविचारणाः ।
दूषयिष्यति सर्व्वज्ञः सर्व्वसाक्षी सनातनः ॥ ७ ॥
मयि तेषामविश्वासं स वक्ष्यत्यघकारणम् ।
धार्म्मिकत्वप्रमाणेच वक्ष्यत्यन्यां गतिं मम ॥ ८ ॥
विचारं जगदीशस्य जगद्देवाकरोत् स्वयम् ।
इति दोषं विचारस्य विभुरावेदयिष्यति ॥ ९ ॥
न मेऽन्यंबहुवक्तव्यमिदानीं सोढुमर्हथ ।
स सत्यात्मा समागत्य सत्यं वो ग्राहयिष्यति ॥ १० ॥
मत्तः श्रुत्वैव युष्मभ्यं स सर्व्वं श्रावयिष्यति ।
भविष्यन्ति च तत्त्वानि मद्यशश्च तनिष्यति ॥ ११ ॥
पिता मां सकलं प्राह सच मत्तः सहायकः ।
गृहीत्वा मम विज्ञानं युष्मभ्यं बोधयिष्यति ॥ १२ ॥
भवन्तो मां न द्रक्ष्यन्ति स्वल्पकालादनन्तरम् ।
स्तोके काले व्यतीतेतु द्रक्ष्यन्ति पुनरेव माम् ॥ १३ ॥
येशोः शिष्या मिथस्तेऽस्य वचोऽत्यन्तदुरन्वयम् ।
वयमेतन्न जानीम इतिप्रोचुः परस्परम् ॥ १४ ॥
येशुस्तेषामभिप्रायं विज्ञायोत्तरमब्रवीत् ।
कथं विप्रतिपद्यन्ते भवन्तो वचने मम ॥ १५ ॥
भवतां रोदनं श्रुत्वा जगद्धेतत् प्रहृष्यति ।
शोकश्च भवतां तस्य हर्षत्वेनोपपत्स्यते ॥ १६ ॥
लभते महतीं पीडां प्रसवात् प्राक् प्रजायिनी ।
सा हृष्यति पुनर्वीक्ष्य निर्वृत्तप्रसवात्मजम् ॥ १७ ॥

भवन्तोऽप्यधुना दुःखमाप्नुवन्ति न संशयः ।
किन्तु मां पुनरालोक्य प्राप्स्यन्ति परमं सुखम् ॥ १८ ॥
तदा लयमवाप्स्यन्ति युष्माकं सर्व्वसंशयाः ।
पिता च कामनाः सर्व्वाः सर्व्ववित् पूरयिष्यति ॥ १९ ॥
अद्य यावन्न युष्माभि र्याचितं वस्तु किञ्चन ।
प्रार्थ्यतां लप्स्यते शर्म्म परिपूर्णमनश्वरम् ॥ २० ॥
इत्यन्तमुपमावाक्यै र्युष्मभ्यमहमुक्तवान् ।
सुस्पष्टं ज्ञापयिष्यामि पितुर्वाक्यमतः परम् ॥ २१ ॥
मत्पिता वीच्य विश्वस्तान्मयि वस्तुत आगते ।
पूरयिष्यति वः कामान् विना मम निवेदनम् ॥ २२ ॥
पितृतोऽहं विनिःसृत्य जगदेतदवाप्तवान् ।
पुनरेतत् परित्यज्य गच्छामि पितुरन्तिकम् ॥ २३ ॥
इत्यन्तं कथयित्वाथ विरते परमात्मजे ।
विमृश्यैतदशेषेण तच्छिष्या इदमब्रुवन् ॥ २४ ॥
सद्‌गुरो सर्व्वमेवैतत् स्पष्टमेवोक्तवान् भवान् ।
सर्व्वज्ञमवगच्छामो भवन्तमधुना वयम् ॥ २५ ॥
इदानीं स्मृतिरस्माभिर्लब्धा ते कृपया गुरो ।
ईश्वरात्त्वं समायात इति विश्वसिमो वयम् ॥ २६ ॥
यीशुस्तेषां वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
कालः स पुनरभ्येति किं वा नूनं समागतः ॥ २७ ॥
यत्र काले भवन्तो मामनादृत्यान्तवासिनः ।
विप्रकीर्णाः परित्यज्य यास्यन्ति स्वं स्वमालयम् ॥ २८ ॥
तथापि न मया स्थेयमेकलेन कदाचन ।
यतो मे सर्व्वदा सङ्गी परमात्मा सनातनः ॥ २९ ॥
युष्माकं शाश्वती शान्तिर्मयि नित्यं विराजताम् ।
समाश्वसित भद्रं वो मया जितमिदं जगत् ॥ ३० ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्लोकेरूपनिबद्धायां श्रीमद्‌योहनभाषित-ख्रीष्टोपनिषदि षोड़शोऽध्यायः ।

## सप्तदशोऽध्यायः

St. John, Chapter 17. [ Christ prayeth to his Father to glorify him, to preserve his apostles, in unity, and truth, to glorify them, and all other believers with him in heaven. ]

समापैरताः कथा सर्व्वाञ्जह्नुं प्रणिहितेक्षणः ।
स्वर्गं प्रति प्रशान्तात्मा यीशुरेतद् वचोऽब्रवीत् ॥ १ ॥
पितः समागतः कालः कुरु पुत्रं यशोऽन्वितम् ।
यथा पुत्रोऽपि शक्नोति त्वां कर्त्तुं महिमान्वितम् ॥ २ ॥
कर्त्तृत्वं सर्व्वमन्यच्च यत्तस्मै दत्तवान् भवान् ।
सोऽपि दास्यति भक्तेभ्यो नूनं शाश्वतजीवनम् ॥ ३ ॥
यल्लब्ध्वा ते परात्मानं ज्ञास्यन्ति त्वां सनातनम् ।
तथा त्वत् प्रेषितं खीष्टं तदेवानन्तजीवनम् ॥ ४ ॥
त्वदादिष्टानि कर्म्माणि सर्व्वथा कुर्व्वता मया ।
यथा सम्पादितं लोके त्वदीयं विपुलं यशः ॥ ५ ॥
तथा मामपि तेनैव महिम्ना त्वयि योजय ।
य आसीदग्रतः सृष्टे र्जगतोऽस्य मम त्वयि ॥ ६ ॥
भवता मे प्रदत्तेभ्यो नरेभ्यो मर्त्त्यमध्यतः ।
भवत्कृतया भवन्नाम पितः प्रदत्तवानहम् ॥ ७ ॥
पित स्तेच तवैवासंस्त्वत्तोऽहं तानवाप्तवान् ।
ते चक्रुस्तव वाक्यानि विविदुर्मां च तावकम् ॥ ८ ॥
त्वया दत्तानि वाक्यानि तेभ्योऽहञ्च प्रदत्तवान् ।
जगृहुस्तानि ते भाश्च प्रतीयुस्त्वत्त आगतम् ॥ ९ ॥
हे पितर्नहि लोकार्थमेतन्मम निवेदनम् ।
भवद्दत्तमदीयानामुपकाराय केवलम् ॥ १० ॥
मदीयं वस्तु यत् किञ्चित् सर्व्वं पितस्तवाव्यय ।
त्वदीयमपि यत् किञ्चिन्ममैव सकलं विभो ॥ ११ ॥

अहञ्च परया कीर्त्या पितस्तेषु समन्वितः ।
त्वामुपैमि जगत्यन्ना ते तु सुग्रभुँवि संस्थिताः ॥ १२ ॥
यन्निष्पादितमेकत्वमुभयोरावयोस्त्वया ।
तत्तानेकतया पाहि प्रितस्त्वं लोकपावन ॥ १३ ॥
त्वन्नाम्ना रचितास्तात ते मया सहसंस्थितौ ?
विनैकं शास्त्रनिर्द्दिष्टं सर्व्वे तव पथि स्थिताः ॥ १४ ॥
त्वामिदानीमहं यामि तेभ्योऽत इदमुक्तवान् ।
मदीयं परमानन्दं यान्तु ते त्वत्प्रसादतः ॥ १५ ॥
मयोक्तं त्वद्वचस्तेभ्य इति जागतिका जनाः ।
मां यथा त्वद्गतप्राणानहिषंस्तानपार्थिवान् ॥ १६ ॥
वहिस्त्वं नय ताँल्लोकादिति नाहं वदामि ते ।
आपदः पाहि तान्नित्यमित्येव मे निवेदनम् ॥ १७ ॥
न मे जागतिकं जन्म तेषां जन्मापि तादृशम् ।
पितः पुनीहि तान्नित्यं सत्येन वचसा तव ॥ १८ ॥
ते मया प्रेषिता लोके यथाहं प्रेषितस्त्वया ।
तेषामेव विशुद्ध्यर्थमात्मानं शोधयाम्यहम् ॥ १९ ॥
न केवलमहं याचे तेषामेव कृते विभो ।
तेषामर्थेऽपि याचेऽहमनुयास्यन्ति ये च तान् ॥ २० ॥
तव प्रसादतस्तात तेषामैक्यं विराजताम् ।
संप्रतीत्यावयोरैक्यं तेऽपि तिष्ठन्तु चावयोः ॥ २१ ॥
मयि त्वं तेष्वहञ्चेति ज्ञात्वा त्वन्महिमान्विताः ।
प्रेषितोऽहं त्वयेत्येतज्जगति ज्ञापयन्तु ते ॥ २२ ॥
यथा मयि तव प्रेम तत् प्रेम तव तेष्वपि ।
पितरेतद् विजानन्तु पृथिव्यां सर्व्वमानवाः ॥ २३ ॥
मया सार्द्धं पितस्तेषामनुजानीहि संस्थितिम् ।
अनादि मत्परं प्रेम ते द्रक्ष्यन्त्यावयोर्यथा ॥ २४ ॥
न धर्म्ममय तात त्वां विविदुर्जगदोकसः ।
अहं जानेऽविदुस्तेच त्वत्तो मां भुवमागतम् ॥ २५ ॥

उक्तवानहमेतेभ्यस्तव नाम सनातन ।
तावच्च कथयिष्यामि यावन्तैः सह मे स्थितिः ॥ २६ ॥
मयि यत् कृतवान् प्रेम भवानत्यन्तनिर्मलम् ।
तेष्वस्तु तव तत् प्रेम स्थितिश्च मम शाश्वती ॥ २७ ॥

इति श्रीताराचरणचक्रवर्त्ति तर्कदर्शनतीर्थेन श्रीकैष्टपनिबद्धायां श्रीमद्‌योहनभाषित-ख्रीष्टोपनिषदि सप्तदशोऽध्यायः ।

## अष्टादशोऽध्यायः

St. John. Chapter 18. [ Judas betrayeth Jesus. The officers fall to the ground. Peter smiteth off Malchus'ear. Jesus is taken, and led unto Annas and Caiaphas. Peter's denial. Jesus examined before Caiaphas. His arraignment before Pilate. His kingdom. The Jews ask Barabbas to be let loose. ]

इत्युक्त्वा वहिरागत्य सशिष्यः परमात्मजः ।
किद्रोणस्रोत उत्तीर्य्य योशुरारामम।विशत् ॥ १ ॥
तस्मिन्नेव ततःकाले यिहूदाः शत्रुनन्दनः ।
योशुमभ्याययौ क्षिप्रं समस्तै राजसैनिकैः ॥ २ ॥
योशुस्तानग्रतो वीक्ष्य यिहूदासहितान् भटान् ।
स्वं नाम ज्ञापयामास स्मृत्वा नियतिमात्मनः ॥ ३ ॥
ते तस्य वचनं श्रुत्वा भयचञ्चलमानसाः ।
ततः पश्चाद्दिशं गत्वा निपेतुः सहसा भुवि ॥ ४ ॥
उत्थितानां पुनस्तेषामभिप्रायं विचिन्त्य सः ।
स्वनाम पुनरावेद्य वक्तव्यमिदमब्रवीत् ॥ ५ ॥
युष्मभ्यमात्मनो नाम मयासकृन्निवेदितम् ।
हत एते बहिर्यान्तु यदि मामेव मृग्यथ ॥ ६ ॥

एतेन "तावका मत्तो न भ्रष्टा" इति यत् स्वयम् ।
उक्तवान् परमेशाय तत् सत्यं कृतवान् प्रभुः ॥ ७ ॥
अथ पित्रः शिमोनः स्वं खड्गमाकृष्य कोपतः ।
महायाजकदासस्य दक्षिणं कर्णमच्छिनत् ॥ ८ ॥
तं मल्कनामकं वीक्ष्य च्छिन्नकर्णं परात्मजः ।
पित्रं निवार्य्य निर्व्वैरो योशुर्व्वचनमब्रवीत् ॥ ९ ॥
सन्निधेहि स्वकोषेऽसिं कथं मां परिबाधसे ।
मया पैतृकपात्रस्थं पानीयं किं न पास्यते ॥ १० ॥
ततस्तं सैनिका निन्युरग्रेऽस्मुख्यपुरोधसः ।
कायाफाः श्वशुरस्याग्रे हाननाख्यस्य मानिनः ॥ ११ ॥
कायाफाख्यः स एवायं यः पूर्व्वमिदमुक्तवान् ।
"मरणात् सर्व्वजातीनामेकस्य मरणं वरम्" ॥ १२ ॥
महायाजकविख्यातशिष्येणान्येन केनचित् ।
पित्रोऽपि सह सम्भूय प्रच्छन्नो गुरुमन्वगात् ॥ १३ ॥
तं द्वाररक्षिका दासी द्वारस्थमिदमब्रवीत् ।
शिष्यः किं तस्य शिष्याणां योशोरेकतमो भवान् ॥ १४ ॥
पित्रस्तु नाहमित्युक्त्वा सत्वरं निर्गतस्ततः ।
पदातीनुपसङ्गम्य वह्नितापमसेवत ॥ १५ ॥
महायाजक ईक्षित्वा योशुञ्च पुरतः स्थितम् ।
तमादौ परिपप्रच्छ सभाषां शिष्यशिक्षयोः ॥ १६ ॥
योशुस्तमब्रवीद्धीमन् प्रकाशमहमुक्तवान् ।
भवान् सर्व्वमभिज्ञाय कथं मां परिपृच्छति ॥ १७ ॥
मद्वाक्यं श्रुतवन्तो ये तानेव परिपृच्छतु ।
एतेऽपि च विजानन्ति यद्वाक्यमहमुक्तवान् ॥ १८ ॥
"महर्षिं जे त्वया प्रोक्तं दुष्टैतदसदुत्तरम्" ।
इत्युक्त्वा सैनिकः कश्चिच्चपेटां योशवे ददौ ॥ १९ ॥
योशुस्तमाह यद्युक्तं मया वाक्यमसङ्गतम् ।
तन्निराकुरु मानेन प्रहरस्यन्यथा कथम् ॥ २० ॥

ह्याननोऽथ तमाप्तं कायाफाख्यमहर्त्विजः ।
सन्निधौ प्रेषयामास संरुद्धं नात्मनो यथा ॥ २१ ॥
पित्रं तदापि तत्रस्थं मानवाः केचिदब्रुवन् ।
शिष्यः किं तस्य शिष्याणां योशोरेकतमो भवान् ॥ २२ ॥
नेति ब्रुवति पित्रे तु कश्चित्तज्ज्ञोऽपरो जनः ।
प्राह "किं न मयोद्याने दृष्टस्त्वं योशुना सह ॥ २३ ॥
नाङ्गीचकार श्रीमोनः पित्रस्तद्वचनं पुनः ।
तस्यास्वीकारमात्रेण तत्र रौति स्म कुक्कुटः ॥ २४ ॥
कायाफान्तिकतो नीत्वा ततस्तं राजमन्दिरम् ।
स्पर्शाशौचभयात् सर्व्वे बहिरेव जनाः स्थिताः ॥ २५ ॥
तस्मात् पीलात आगत्य बहिस्थान् परिपृष्टवान् ।
अपराद्धं किमेतेन कथ्यतां मम सन्निधौ ॥ २६ ॥
त ऊचु यदि दुष्कर्म्मा नाभविष्यदयं जनः ।
श्रीमन्नेष भवद्धस्ते नास्माभिरार्पयिष्यत ॥ २७ ॥
पीलातस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
भवद्भिरिष्टं ह्यतामेष दण्डश्चैव विधीयताम् ॥ २८ ॥
त ऊचुर्नैव केषांचिद्विनाशे शक्तिरस्ति नः ।
योशुनाभिहितो मृत्युस्तैरेतेन निदर्शितः ॥ २९ ॥
पीलातस्तत्र आगत्य पुनाराजनिकेतनम् ।
"यिहूदीनां नृपः किं त्व" मिति तं परिपृष्टवान् ॥ ३० ॥
योशुः प्राह भवानेतत् स्वयमेव ब्रवीति किम् ।
उक्तवान् भवते कश्चिदन्यो वा मत्कथामिमाम् ॥ ३१ ॥
पीलातस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
जात्याहं यिहूदीयः किं यत्त्वमेवं ब्रवीषि माम् ॥ ३२ ॥
मयि त्वं याजकैर्मुख्यैः स्वज्ञात्याच समर्पितः ।
किं त्वया दुष्कृतं कर्म्म कृतमितेव कथ्यताम् ॥ ३३ ॥
योशुस्तमब्रवीद्धीमन् मम राज्यं न पार्थिवम् ।
निवारितं न मद्भृत्यैस्तस्मान्मम समर्पणम् ॥ ३४ ॥

त्वं किं राजेति पीलातो भूयस्तं परिपृष्टवान् ।
योशुस्तद्वचनं श्रुत्वा वाक्यमुत्तरमब्रवीत् ॥ ३५ ॥
राजानं वस्तुतो धीमन् भवानेव ब्रवीति माम् ।
स्वाराज्यस्थापनार्थं हि पृथिवीमहमागतः ॥ ३६ ॥
जना भागवता नित्यं शृन्वन्ति मम शब्दनम् ।
सत्यं किमेतदित्युक्त्वा पीलातोऽथ बहिर्ययौ ॥ ३७ ॥
यिहुदीयानथाहूय स इदं वाक्यमब्रवीत् ।
अपराधं न पश्यामि नाहमेतस्य कञ्चन ॥ ३८ ॥
तस्मात् किं पर्व्वणो मोक्षमनुसृत्य चिरन्तनम् ।
भवन्तो मोक्षमेतस्य वाञ्छन्ति मम शासनात् ॥ ३९ ॥
ते तस्य वचनं श्रुत्वा क्रोशन्तः पुनरुच्चकैः ।
समं नृशंसबाराब्बामुक्तिमेव ययाचिरे ॥ ४० ॥

इति श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्‌योहन-भाषितखीष्टोपनिषदि अष्टादशोऽध्यायः ।

---

## ऊनविंशोऽध्यायः

St. John, Chapter 19. [Christ is scourged, crowned with thorns, and beaten. Pilate is desirous to release him, but being overcome with the outrage of the Jews, he delivered him to be crucified. They Cast lots for his garments He commendeth his mother to John. He dieth. His side is pierced. He is buried by Joseph and Nicodemus.]

योशुं प्रहारयामास पीलातः कषया ततः ।
देहं तस्य समाच्छाद्य कृष्णरक्तेन वाससा ॥ १ ॥
निदधुः सैनिका मूर्ध्नि मुकुटं कण्टकाचितम् ।
"नमो यिहूद्यधीशाये"त्याहुश्च पुरतः स्थिताः ॥ २ ॥
चपेटां तस्य गण्डे च ते ददुः क्रूरमानसाः ।
पीलातस्तत आगत्य बहि स्तानिदमब्रवीत् ॥ ३ ॥

स एष भवतामग्रे तिष्ठत्यपूर्व्वभूषया ।
अपराधं न पश्यामि जनस्यास्य कमप्यहम् ॥ ४ ॥
तं दृष्ट्वा याजका मुख्याः कुपिताश्च पदातयः ।
"आरोपणं क्रुशेऽस्य कुर्व्विति प्राहुरुच्चकैः ॥ ५ ॥
पीलातः प्राह युष्माभिः स दण्डोऽस्य विधीयताम् ।
अपराधं न पश्यामि जनस्यास्य कमप्यहम् ॥ ६ ॥
त ऊचुरयमात्मानमीशपुत्रं यतोऽवदत् ।
तस्माच्छास्त्रानुसारेण जनोऽयं वधमर्हति ॥ ७ ॥
पीलातस्तद्वचः श्रुत्वा भीत्वा राजगृहं गतः ।
यीशुं पप्रच्छ कस्मात्त्वं स्थानादागतवानिति ॥ ८ ॥
तं निरुत्तरमालोक्य पीलातः पुनरब्रवीत् ।
अधुनैव मया सार्द्धं भवान् कस्मान्नभाषते ॥ ९ ॥
तव मोक्षे विनाशे च सर्व्वथा शक्तिरस्ति मे ।
किमेतन्नाभिजानासि राजसैन्यवशं गतः ॥ १० ॥
यीशुः प्राहोर्द्ध्वतः शक्तिं भवान्नोचेदलप्स्यत ।
नाभविष्यन्नियन्तृत्वं भवतो मयि किञ्चन ॥ ११ ॥
सर्व्वेभ्य इह पापिभ्यः स एव पापकृत्तमः ।
येनाहं भवतो हस्ते कृतघ्नेन समर्पितः ॥ १२ ॥
पीलातो मोक्तुमैच्छत्तं तदा प्रभृति स्वयम् ।
यिहूदीयास्तु संक्रुद्धास्तमुच्चैरिदमब्रुवन् ॥ १३ ॥
कैसरस्य न बन्धुस्त्वं त्यक्तो यद्येष मोक्ष्यते ।
राजानं कुरुते यः स्वं सोऽवजानाति तं यतः ॥ १४ ॥
पीलातस्तद्वचः श्रुत्वा यीशुं राजगृहाद्बहिः ।
आनीय "गब्बथां" धीमान् विचारासनमंस्थितः ॥ १५ ॥
उत्सवायोजनस्याह्नि षष्ठहोरामिते क्षणे ।
शृण्वतां यिहूदीयानामिदं वचनमब्रवीत् ॥ १६ ॥
यूयं पश्यत राजानं युष्माकमिह संस्थितम् ।
तमूचुरुच्चकैस्तेतु क्रुशेनैनं विनाशय ॥ १७ ॥

पीलातः प्राह युष्माकं राजानं घातयामि किम् ।
प्रधानयाजकाः प्राहू राजा कैसर एव नः ॥ १८ ॥
स तच्छ्रुत्वा करे तेषां पीलातस्तं समार्पयत् ।
आदिशच्च क्रुशेनैव यीशोः प्राणस्य नाशनम् ॥ १९ ॥
ततस्तैरभ्यनुज्ञातो यीशुः क्रुशं स्वयं वहन् ।
स कपालस्थलोपाख्यं "गल्गथा"स्थानमाययौ ॥ २० ॥
तत्र तं क्रुश आरोप्य ते तस्योभयपार्श्वयोः ।
निबबन्धुः क्रुशे तस्मिन् द्वावन्यावपि पापिनौ ॥ २१ ॥
"यीशुर्नासरतीयोऽयं यिहूदीनामधीश्वरः" ।
इति लेखाञ्च पीलातः क्रुशस्योपरि बद्धवान् ॥ २२ ॥
यूनानेब्रीयरोमीयैरक्षरैर्लिखिताञ्च ताम् ।
दोषपत्रीं पठित्वेदं यिहूदीयास्तमब्रुवन् ॥ २३ ॥
"राजाहं यिहूदीयाना" मित्ययं स्वयमुक्तवान् ।
इत्येवमेव तत्र त्वं लिपिकां सन्निवेशय ॥ २४ ॥
पीलातस्तद्वचः श्रुत्वा वाक्यमुत्तरमब्रवीत् ।
नान्यथाहं करिष्यामि स्वलेखायाः कदाचन ॥ २५ ॥
ततो विभज्य वस्त्राणि चतुर्धा तस्य सैनिकाः ।
यथाश्रुति समं प्रापुर्गुटिकापातपूर्व्वकम् ॥ २६ ॥
सार्द्धं योषिद्भिरन्याभिस्तिष्ठन्तीं निजमातरम् ।
प्रियशिष्यं च संवीक्ष्य यीशुस्तदेदमब्रवीत् ॥ २७ ॥
"हे नारि तव पुत्रोऽसौ वत्सैषा जननी तव ।"
तदा प्रभृति शिष्यः स तां निनायात्मनो गृहम् ॥ २८ ॥
परिपूर्णं ततः सर्व्वमिति ज्ञात्वा स आत्मवान् ।
"तृषार्त्तोऽह"मिति प्राह शास्त्रस्य वचनं स्मरन् ॥ २९ ॥
इत्याकर्ण्य वचस्तस्य मानवास्तत्र संस्थिताः ।
पानाय प्रददुस्तस्मै काञ्जिकं नलमध्यगम् ॥ ३० ॥
ततः सम्पूर्णमित्युक्त्वा शिरसावनतः स्वयम् ।
देहाद्वियुक्तमात्मानमार्पयत् परमात्मने ॥ ३१ ॥

आयोजनदिने तस्मिन् क्रुशवेधादनन्तरम् ।
पीलातमुपसङ्क्रम्य यिहूदीया दुराशयाः ॥
विश्रामदिवसे देहा न तिष्ठन्ति क्रुशे यतः ।
ततो ययाचिरे तेषां पादभङ्गापसारणे ॥ ३२ ॥
अथ तस्याज्ञया गत्वा सैनिकाः क्रूरचेष्टिताः ।
बभञ्जुस्त्वरया जङ्घे यीशुना सह विद्धयोः ॥ ३३ ॥
यीशोरन्तिकमागत्य ततस्ते सैनिका जनाः ।
तं पञ्चत्वगतं वीक्ष्य विरेमुः पादभञ्जनात् ॥ ३४ ॥
केनचिद्योधशूलेन विद्धे तस्योदरे ततः ।
सद्यो रक्तजलस्रावो देहात्तस्य विनिर्गतः ॥ ३५ ॥
य इदं दृष्टवान् साक्षात् स इदं साक्ष्यमब्रवीत् ।
युष्माकं प्रत्ययस्तस्मात्तद्वाक्ये भवतु ध्रुवम् ॥ ३६ ॥
तवेदं श्रुतिवाक्यञ्च प्रमाणत्वेन कल्पते ।
"तस्यैकमपि देहास्थि न भङ्क्तव्यं कदाचन" ॥ ३७ ॥
इदंचाप्यपरा प्राह श्रुतिः श्रोतृहितैषिणी ।
"शूलेन विविधुस्ते यं द्रक्ष्यन्ति तं निरन्तरम्" ॥ ३८ ॥
अथारिमाथियावासी योषेफः शिष्यसत्तमः ।
यिहूदीयभयाद् यस्तु यीशुनाविदितः स्थितः ॥ ३९ ॥
स पीलातान्तिकं गत्वा यीशोर्देहमयाचत ।
पीलातेनाभ्यनुज्ञातः स यीशोर्देहमाददे ॥ ४० ॥
नीकदीमोऽपि यो रात्रौ यीशुं प्रथममैक्षत ।
सोऽपि गन्धरसोन्मिश्रागुरुभिः सार्द्धमागतः ॥ ४१ ॥
ततस्तौ गन्धवद्वस्त्रेणाविष्य तत्कलेवरम् ।
क्रुशसन्निहितोद्याने नवे शवनिकेतने ॥
यिहूदीयसदाचारमनुसृत्य चिरन्तनम् ।
पर्व्व सन्निहितं मत्वा निदधातेऽतियत्नतः ॥ ४२ ॥

इति श्रीताराचरणचक्रवर्त्ति-तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमद्योहन-भाषितख्रीष्टोपनिषदि ऊनविंशोऽध्यायः ।

## विंशोऽध्यायः

St. John Chapter 20. [ Mary cometh to the sepulchre: so do Peter and John, ignorant of the resurrection. Jesus appeareth to Mary Magdalene, and to his disciples: The incredulity, and confession of Thomas. The scripture is sufficient to salvation. ]

अथ मग्दलवास्तव्या मरीयम्मातरागता ।
दृष्ट्वा मुक्तं शवागारं सप्ताहप्रथमेऽहनि ॥

गत्वा शिमोनपित्रस्य प्रियशिष्यस्य चान्तिकम् ।
प्रभोर्देहः शवागारे नास्तीति कातराब्रवीत् ॥ १ ॥

तस्यास्तद्वचनं श्रुत्वागच्छतां तावुभौ जनौ ।
प्रियशिष्यः शवागारं द्रुत्वा प्रथममागतः ॥ २ ॥

सोऽपश्यद् शुक्लवस्त्राणि स्थित्वोर्ध्वं शुक्लया विना ।
पश्चादभ्येत्य पित्रोऽपि प्रविश्यान्तर्ददर्श तत् ॥ ३ ॥

शिरोवेष्टकवासस्तु स्थितमन्यत्र दृष्टवान् ।
प्रविश्य प्रियशिष्योऽपि पश्चादेवं समैक्षत ॥ ४ ॥

तावुभौ तत्त्वतो ज्ञात्वा शास्त्रस्य वचनं ततः ।
तस्य त्वोः पुनरुत्थानेऽविश्वस्य गृहमागतौ ॥ ५ ॥

मरीयम्बहिरागत्य शवागाराददूरतः ।
स्थित्वा रुरोद दुःखार्त्ता शिरसावनता सती ॥ ६ ॥

अथ गत्वा शवागारं निरीक्ष्यान्तरवाङ्मुखी ।
स्वर्दूतौ द्वौ समासीनौ ददर्श शुक्लवाससौ ॥ ७ ॥

"कथं रोदिषि नारीति सा ताभ्यां कथिता ततः ।
अन्तर्धानं गुरोः स्वाभाद्दुःखिता सा न्यवेदयत् ॥ ८ ॥

ततः पश्चाद्दृशं वीक्ष्य दृष्ट्वापि यीशुमग्रतः ।
नाभ्यजानाद्भयत्रस्ता निरानन्दा तपस्विनी ॥ ९ ॥

यीशुः प्रोवाच भूयस्तां "त्वं नारि क्रन्दसे कथम् ।
सोद्यानरक्षकं मत्वा तमिदं वाक्यमब्रवीत् ॥ १० ॥
यदि प्रभुं शवागारादपसारितवान् भवान् ।
ब्रवीतु स्वयमेवाहं नेष्यामि नात्र संशयः ॥ ११ ॥
यीशु"मरीयमि"त्याह भूयस्तत्रैव संस्थितः ।
इब्रीयभाषया प्राह मरीयमपि तं "गुरो" ॥ १२ ॥
यीशुः प्रोवाच हस्ताभ्यां मा मां त्वमबले स्पृश ।
इदानीमपि यन्नाहं पितुरन्तिकमागतः ॥ १३ ॥
याहि त्वं ब्रूहि मे भ्रातॄन् यदहं यामि साम्प्रतम् ।
सर्व्वेषां मम चेशस्य पितुश्च परमं पदम् ॥ १४ ॥
सापि गत्वाब्रवीच्छिष्यान् संवादमिममद्भुतम् ।
संवादमुभयोश्चैव प्रत्यक्षदर्शनं तथा ॥ १५ ॥
तस्मिन्नेव च सप्ताहप्रथमे दिवसे ततः ।
यिहूदीयभयाच्छिष्याः सार्यं रुद्धगृहे स्थिताः ॥ १६ ॥
तेषामाविरभूत् ख्रीष्टः स्वस्तिवादमुदीरयन् ।
आत्मनः पार्श्वं हस्तं च दर्शयामास तान् प्रभुः ॥ १७ ॥
शान्तिवाक्यमथोच्चार्य्य स शिष्यानिदमब्रवीत् ।
यथाहं प्रेषितः पित्रा तथा वः प्रेषयाम्यहम् ॥ १८ ॥
ततस्तानभिमन्त्र्याह प्रत्यक्षं परमात्मजः ।
यूयं पवित्रमात्मानं मत्तो गृह्णीत मुक्तये ॥ १९ ॥
अद्य प्रभृति लोकेऽस्मिन्नराणां बन्धमोक्षयोः ।
प्रमाणं भावितात्मानो यूयमेवेति मे मतिः ॥ २० ॥
ततो "यमज"मालोक्य तदानीमनुपस्थितम् ।
प्रभोर्दर्शनसंवादं तमूचुः शिष्यसत्तमाः ॥ २१ ॥
स प्राह कीलचिह्नानि पार्श्वं योर्ह स्तयो स्तथा ।
स्पर्शेनाहमविज्ञाय न विश्वसिमि तत्त्वतः ॥ २२ ॥
दिवसेभ्यस्ततोऽष्टाभ्यः परं ते शिष्यसत्तमाः ।
पुनारुद्धगृहे तस्थु"र्यमजेन" समन्विताः ॥ २३ ॥

तस्मिन्नेव ततःकाले स्वस्तिवादमुदीरयन् ।
सहसा यीशुरागत्य यमजाय वचोऽब्रवीत् ॥ २४ ॥
"स्पृश मे पार्श्वदेशस्थं चिह्नं हस्तगतं तथा ।
मुञ्च मं सौम्य सन्देहं मयि विश्वसिहि प्रिय ॥ २५ ॥
मम प्रभो ममेशेति यमजस्तं तदाब्रवीत् ।
यीशुस्तमाह "दृष्ट्वा मां व्यश्वसीस्त्वं मयि प्रिय" ॥ २६ ॥
धन्यास्ते भाविताात्मानो मानवाः संसृताविह ।
ये पुनर्मामदृष्ट्वेव विश्वस्युरसंशयम् ॥ २७ ॥
अलौकिकानि कर्म्माणि यीशोरेवं विधानिच ।
बहूनि सन्ति बाहुल्यान्नाहं लिखितवानिह ॥ २८ ॥
यीशुरीशसुतः ख्रीष्ट इति विश्वस्य भक्तितः ।
युष्माभि र्यीशुनाम्नैव प्राप्तव्यं नित्यजीवनम् ॥ २९ ॥

इति श्रीताराचरणचक्रवर्त्तिं तर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां श्रीमद्योहनभाषित-ख्रीष्टोपनिषदि विंशोऽध्यायः ।

---

## एकविंशोऽध्यायः

St. John, Chapter 21. [Christ appearing again to his disciples was known of them by the great draught of fishes. He dineth with them: earnestly commandeth Peter to feed his lambs and sheep: foretelleth him of his death: rebuketh his curiosity touching John. The conclusion.]

एकदा तिविरीयाख्यसमुद्रस्य तटे प्रभुः ।
पुनराविरभूत् ख्रीष्टः शिष्याणां परिपश्यताम् ॥ १ ॥
कदाचिदुपविष्टेषु शिष्येषु जलधेस्तटे ।
पितरस्तानुपसङ्गम्य शिमोन इदमब्रवीत् ॥ २ ॥

समुद्रमध्यतो मत्स्यान् संग्रहीतुं व्रजाम्यहम् ।
तस्य तद्वचनं श्रुत्वा यान्तं तं तेऽनुवव्रजुः ॥ ३ ॥
ततस्ते नावमारुह्य चेष्टयित्वापि तां निशाम् ।
प्रातः किमपि नासाद्य तीरं प्रति प्रतस्थिरे ॥ ४ ॥
तेषामाविरभूत् ख्रीष्टः सहसा जलधेस्तटे ।
किन्तु ते तमभिज्ञातुमशक्ताः शिष्यसत्तमाः ॥ ५ ॥
योशुस्तानाह "युष्माकमन्तिके खाद्यमस्ति किम्" ।
नास्तीत्युत्तरमाकर्ण्य योशुस्तान् पुनरब्रवीत् ॥ ६ ॥
"नौकाया दक्षिणे पार्श्वे जालं निक्षिपतानघाः" ।
तथैव तेऽपि निक्षिप्य मत्स्यमापुरनेकशः ॥ ७ ॥
प्रियशिष्यस्तदा पित्रं शिमोनमिदमुक्तवान् ।
"असौ प्रभुः स्वयं साक्षाद् य इदं वाक्यमुक्तवान्" ॥ ८ ॥
"असौ प्रभुरिति" श्रुत्वा देहमावेष्ट्य वाससा ।
पपात परमोत्सुक्याच्छिमोनो लवणाम्भसि ॥ ९ ॥
अन्येऽपि जालमाकृष्य मत्स्यपूर्णं ततः परम् ।
अदूरात्तीरमाजग्मुर्मत्स्यमादाय सत्वरम् ॥ १० ॥
अथ तान् पश्यतः पूपं मीनश्चानलसंस्थितम् ।
योशुः प्रोवाच तान् मत्स्यान् कांश्चिदानयतानघाः ॥ ११ ॥
शिमोनस्तद्वचः श्रुत्वा मत्स्यान् जालसमन्वितान् ।
आचकर्ष बलात्तस्य समीपमानिनाय च ॥ १२ ॥
आसंस्तत्र महामीनास्त्रिपञ्चाशत्तथा शतम् ।
तैराकृष्टं बलाज्जालं न तथापि व्यदीर्यत ॥ १३ ॥
योशुस्तानब्रवीदेत भुंग्ध्वमन्नं मया सह ।
ते योशुं तमभिज्ञाय न किञ्चिद्वाक्यमब्रुवन् ॥ १४ ॥
ततः पूपान् स आदाय मत्स्यांश्च परमात्मजः ।
दत्तवान् सर्व्वशिष्येभ्यः प्रविभज्य विभागशः ॥ १५ ॥
ततः शिमोनमाहूय स पित्रमिदमब्रवीत् ।
अधिकं किं त्वमेतेभ्यः करोषि प्रेम मां प्रति ॥ १६ ॥

पित्रेण सत्यमित्युक्तो पृष्टैवं स द्विषज्जिषः ।
सत्यसन्धं जितात्मानं तमिदं वाक्यमब्रवीत् ॥ १७ ॥
आत्मोपमेयन सौम्य त्वं सत्येन वचसा च मे ।
परमश्रेयसे मेषांश्चारयेतान् सदा मम ॥ १८ ॥
स्वकटिं यौवने बद्धा स्वेच्छया व्यचरो यथा ।
वार्धक्ये न तथा सौम्य स्वातन्त्र्यं त्वमवाप्स्यसि ॥ १९ ॥
तस्मिन् कालेऽस्वतन्त्रस्त्वं हस्तौ विस्तारयिष्यसि ।
अपरस्ते कटिं बद्धा नेष्यति त्वां तदिच्छया ॥ २० ॥
योशुनैतेन वाक्येन तदेवात्र निदर्शितम् ।
कीदृग्धात्मरणात्तस्य परेशो लप्स्यते यशः ॥ २१ ॥
अथ मामनुगच्छेति ब्रुवतीश्वरनन्दने ।
पित्रः पश्चाद्द्विशं वीक्ष्य तं ददर्शान्तिवासिनम् ॥ २२ ॥
यत्रासीत् परमा प्रीतिः ख्रीष्टस्य विजितात्मनः ।
योशुवक्षःस्थितो यश्चापृच्छत्तं तस्य वैरिणम् ॥ २३ ॥
प्रभो का गतिरस्येति पित्रेणाभिहितस्तदा ।
योशुस्तत्संशयच्छेत्ता प्रत्युवाच परात्मजः ॥ २४ ॥
ममागमनपर्यन्तं यद्येषोऽत्रावतिष्ठते ।
तव काचित् क्षतिर्नास्ति सद्यस्त्वं मामनुव्रज ॥ २५ ॥
एतेन व्यानशे तस्यामरत्वमन्तेवासिषु ।
स साक्ष्यमुक्तवान् सत्यं स एवेदं लिलेख च ॥ २६ ॥
अन्यानि यानि कर्माणि कृतानि योशुना भुवि ।
यदि तानि निबध्यन्ते ग्रन्थानां स्यादनन्तता ॥ २७ ॥

इति भारतवर्षीयचट्टग्रामजिलान्तर्गत-माद्रार्सा ग्रामनिवासिना
श्रीताराचरणचक्रवर्त्तितर्कदर्शनतीर्थेन श्लोकैरुपनिबद्धायां
श्रीमद्‌योशुनभाषित-ख्रीष्टोपनिषदि एकविंशोऽध्यायः ।

॥ समाप्तोऽयं ग्रन्थः ॥